मिदं ब्रूते । अतो न्यूनाधिकभावे परिहरणीये सति प्रमादादसामर्थ्याद्वा यदि भ्रेष उपजायते तत्रावश्यं प्रायश्चित्तं कर्तव्यमित्येतदर्थमिदमुच्यते 'विहारयोगान्व्याख्यास्यामः' इति । अथवा विह्नियन्त इति विहाराः इति व्युत्पत्त्या वेद्यादयो देशविशेषा विहाराः । योगाश्च तत्संपादनोपायभूतास्त एव रज्ज्वादयः । अत्र केचिन्नियतदिक्तयोगादीनां वेद्यादीनामज्ञातदिग्विशेषैः पुरुषैर्विहरणं कर्तुमशक्यमिति दिग्विशेषज्ञापनार्थमादावेव दिश लक्षणीकुर्वन्ति । यथाऽऽह भगवान् कात्यायनः—

> 'समे शङ्कुं निखाय शङ्कुसंमितया रज्ज्वा
> मण्डलं परिलिख्य यत्र लेखयोःशङ्क्वग्रच्छाया
> निपतति सा प्राची । तत्र शङ्कुं निखाय तदनन्तरं
> रज्ज्वाऽन्यस्य पाशौ कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य
> लक्षणेन दक्षिणापायम्य मध्यमशङ्कुरेवमुत्तरतस्सोदीची"

इति । अस्यार्थः—अथ यत्र शुचौ देशे देवयजनं कारप्यन् भवति त देश जलेन समीकृत्य मध्ये शङ्कुं निहत्य[1] शङ्कुसम्मितामेकतःपाशां रज्जुं कृत्वा शङ्कौ प्रतिमुच्य तया मण्डलं परिलिख्य मण्डलरेखायां पूर्वाह्णे यत्र शङ्क्वग्रच्छाया निपतति तत्र बिन्दुं कुर्यात् । अपराह्णे च लेखायां यत्र सा निपतति तत्र बिन्दुं कुर्यात् तौ पूर्वपरौ बिन्दू सा च प्राची दिक् । बिन्द्वोर्द्वयोश्शङ्कुं निखाय तदन्तरद्विगुणां रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं कुर्यादेवमुत्तरतोऽपि लक्षणेनापायम्य शङ्कुं कुर्यात् । तौ शङ्कू दक्षिणोत्तरौ सा उदीची दिगिति । तथा ज्योतिर्ज्ञाने ।

> इष्टमण्डलमध्यस्थशङ्कुच्छायाप्रवृत्तयोः ।
> योगाभ्यां कृतमत्स्येन ज्ञेये याम्योत्तरे दिशौ ।"

इति । एवमन्यैरपि बहुप्रकारं दिशां ग्रहणं तत्र तत्रोक्तमिति प्रसिद्धत्वादेयाचार्येणेह नोक्तं । प्रमीयतेऽनेनेति व्युत्पत्त्या पार्श्वमान्यादीनां प्रमाणत्वे सिद्धे प्रमाणमिति परिभाष्यते ॥

Sundararaja (Sutra 1)

> आपस्तम्बेन योऽयं व्यरचि भगवता शुल्बांशो गभीरः ।
> प्रश्नोऽत्र तस्य भाष्यप्रभृतिषु कथित विस्तृत योऽयं कृतस्नम् ।
> सङ्क्षिप्याऽऽलोचनार्थं कृतिरवनिपैर्माधवार्यस्य सूनुः
> सुन्दरराजस्सदीर्घं विवरणमधुना सुन्दरो निर्मिमीते ॥

---

1 निधर्षयन् ।

विहारो विहरणं, चतुरस्रादिरूपेण भूमेः करणम्। तस्य योगाः उपायाः।

यावदायामं प्रमाणम्॥ (2)

**Kapardi (Sutra 2)**

यावदायाममित्यव्ययीभावः। य वदवधारण इति। किमत्रावधार्यते? आयामः। आयाम एव प्रमाणमिति न, तिर्यङ्मान्यक्ष्णया रज्जू। ताभ्यामपि विहरणस्य शक्यत्वात्। प्रमाणसंज्ञायाः प्रयोजनं 'प्रमाणं तृतीयेन वर्धयेदि-त्यायामसंप्रज्ञानार्थम्।

**Karavinda (Sutra 2)**

यावच्छब्दः परिमाणवाची, आयामशब्दो विस्तारप्रतियोगिवचनः। 'यावदवधारणे' इति समासः। यावानायामस्तावत् प्रमाणं भवति, किमत्रा-वधार्यते? आयामपरिमाणमेव प्रमाणमिति। तदआऽऽयामस्य द्विगुणत्वा-त्तदाश्रयभूतरज्ज्वादिप्रमाणमिति। अस्य प्रमाणं तिर्यगादिषु प्रयोजनम्।

*तदर्धमभ्यस्याऽपरस्मिंस्तृतीये षड्भागोने लक्षणं करोति॥ (3)*

**Kapardi (Sutra 3)**

तदिति प्रमाणं परामृश्यते। तदर्धं अभ्यस्य प्रक्षिप्य प्रमाणस्योपरि अपरस्मिंस्तृतीये षड्भागोने लक्षणं करोति। अभ्याससहितं प्रमाणं उभयतः पाशौ कृत्वाऽपरस्मिन् भागे ततीये लक्षणं निरञ्जनं करोति। आयामस्य षड्भागोने लक्षणं कुर्यात्॥

*पृष्ठयान्तयोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य निमित्तं करोति॥ (4)*

**Kapardi (Sutra 4)**

पृष्ठे भवा पृष्ठया। तस्या अन्तयोश्शङ्कू निहत्य तयोः पाशौ प्रति-मुच्य लक्षणेन दक्षिणापायम्य निमित्तं करोति, लक्षणेन दक्षिणा प्रसार्य[1] यथा षड्भागोना तिर्यङ्मानी शिष्टाऽक्ष्णया रज्जुः एवमपसारयति। निमित्त निहन्यात्॥

---

1. दक्षिणाऽपसार्य।

**Karavinda** (Sutra 3 and 4)

इदानी तावदैष्टिकसौमिकपाशुबन्धिकानां प्रायेण दीर्घचतुरस्रत्वात्तदनुरूप विहरणमुच्यते—

प्रमाणमित्येव तच्छब्देनायामभूत प्रमाणं परामृश्यते । तस्यार्धं तदर्धं, अभ्यसनमुपरिक्षेप', अपरस्मिन् पश्चाद्भाविन्यागन्तौ, तृ ीये प्रमाणार्धाभ्या सह तृतीये, षड्भागोने—षष्ठो भागष्षड्भागः तेन हीने तस्मिन्नेव तृतीये, लक्षण लक्ष्यते येन तल्लक्षण विमातव्यक्षेत्रस्य कोिटपरिज्ञानोपायभूत चिह्न करोति कुर्यात्, पृष्ठ्यान्तयोः—विमातव्यक्षेत्रस्य मध्य पृष्ठं पृत एतदवगम्यते ? तदवयवेषु श्रोण्यंसपार्श्वव्यपदेशाद्यथा श्रोण्यंसदेशपार्श्वानां मध्य पृष्ठ एवमिदमपीति ! तत्र भवा रेखा पृष्ठ्या । तदन्तयोश्शङ्कु निखाय रज्ज्वन्तौ पाशौ कृत्वा तयोर्नियम्य प्रतिमुच्य लक्षणेन चिह्नेन दक्षिणापायम्य—दक्षिणतोऽपकृष्य रज्जु तत्र निमित्त क्षेत्रकोटिज्ञानहेतु शङ्कु कुर्यात् ।

एवमुत्तरतो विपर्यस्येतरतस्स समाधिः ॥ (5)

**Kapardi** (Sutra 5)

एवमुदगपरायं पूर्ववत्कुर्यात् । विपर्यस्येतरतः पूर्वस्माच्छङ्कोः पाशमुन्मुच्यापरस्मिन् शङ्कौ प्रतिमुञ्चेत् । अपरस्माच्छङ्कोः पाशमुन्मुच्य पूर्वस्मिन्प्रतिमुञ्चेत् । स विपर्यासः । त कृत्वेतरतः असौ तेनैव प्रथमकृतेन षड्भागोनेन लक्षणेन दक्षिणमस उदगपसार्योत्तरमसमिति स समाधिः । उक्तेन मार्गविशेषेणापादिताः पार्श्वमान्यादय इति समाधिः ।

ननु अपरग्रहणं पूर्वतृतीये लक्षणव्यावृत्त्यर्थं किं न स्यात्, तत्रापि तस्याविरोधादेव न स्यात् । तर्हि मध्यमतृतीय व्यावर्त्य पूर्वापरयो प्रदर्शनार्थं भविष्यतीति चेन्नैतत्-यद्येवमिष्टमभविष्यत्तर्हि स्पष्टतरम्मध्यमे तृतीय इत्येवावक्ष्यत्, न चासौ तत्तथाकृतवान् । अथ मन्यसे ? तदर्थमन्यस्यापरस्मिन्नित्युक्तेऽभ्यासादन्यत्, प्रमाणमपर प्रतीयते, सामर्थ्यात्तत्र तृतीये लक्षण भवत्विति, नैतदपि युक्त —यदयमागन्त्वायामाभ्यास इति आगन्त्ववयवस्याक्ष्णयारज्जुशेषता वक्ष्यति । महावेदिमाने[1] च षट्त्रिंशिकायामष्टदशोप शमस्येत्यादौ पञ्चदशिकेनैवापायस्य श्रोण्यसाना विहरण वक्ष्यति, तेनात्राभ्यासागन्तुरेवापर , तत्र षड्भागोने निरञ्जनमिति विज्ञायते । ननु यद्यागन्तुपरोऽपरशब्द तर्हि षड्भागोने लक्षणमित्येतावदेवाल, किमर्थं तृतीयशब्द , नैवास्य प्रयोजनं पश्याम , उच्यते—अस्त्येवास्य प्रयोजनं, किं तत्,[2] अत्राच्यमानविहरणस्य सर्वाभ्यासविषयत्वख्यापनार्थं, तत्कथ, अत्र तावदाचार्येण सर्वज्ञेन सर्वानुग्रहकारिणा प्रयुक्तस्याक्षराव यवस्यापि नानर्थकता युक्ता, किं पुन पदस्य । अतो मुख्यया वृत्त्या यदि प्रयोजन नोपलभामहे तदा गौण्या लक्षणया वा वृत्या यथा शब्दोऽर्थवान् भवति तथा व्याख्येय । अत एवाय शब्द एव व्याख्यायते—आगन्तुसमानाधिकरणीभूततृतीयशब्दस्यावयवभूतत्रिशब्दवाच्येन त्रित्वेन साभ्यासस्य प्रमाणस्यागन्तुपरिमिता यावन्तो भागास्सम्भवन्ति तावता भागाना सङ्ख्या यक्ष्यते, तथा—षड्भागशब्दावयवभूतषट्छब्दवाच्येन च षट्त्वेन तदनुरूपत्वाय त्रित्वलक्षितसङ्ख्याद्विगुणीभूताभागसङ्ख्या लक्ष्यते । एतेनायमर्थस्सम्पद्यते—सर्वेष्वभ्यासेषु साभ्यासस्य प्रमाणस्यागन्तुपरिमिता यावन्तो भागास्सम्पद्यन्ते तावद्द्विगुणभागमागन्तु कृत्वा तस्मिन् भागेनैकेन हीने लक्षणकरणमिति । तद्यथा—अर्धाभ्यासे तावदर्धमेको भाग , प्रमाणन्तु तत्तुल्यौ भागौ, अतस्साभ्यासस्य प्रमाणस्यागन्तुतुल्यास्त्रयो भागा , आगन्तौ तद्द्विगुणच्छेदे तस्य षड्भागा , तत्र भागेनैकेन हीने लक्षणम्, तथा आयामाभ्यासे आयाम एको भाग , च तत्सदृश एको भाग । तेन साभ्यासस्य प्रमाणस्य द्वौ भागौ तद्द्विगुणच्छेदे अभ्यासे चत्वारो भागा । तत्र चतुर्भागोने लक्षणम् । तथा—तृतीयाभ्यासे अभ्यास एको भाग प्रमाण तत्तुल्यास्त्रयो भागा , द्विगुणच्छेदेऽभ्यासेऽष्टौ भागा , तत्राष्टभागोने लक्षणम्, एवमेव तुरीयाद्यभ्यासेषु प्रमाणस्याभ्यासवशेनैव भागकल्पनम्, आगन्तौ तद्द्विगुणसङ्ख्यया भागकल्पनम्, भागोने लक्षण च द्रष्टव्यम् । ननु यत्राभ्यासेऽभ्यासतुल्यता प्रमाणस्य न सम्भवति कथ तत्र प्रमाण चागन्तौ च भागकल्पन

1 महावेदि विमाने ।

2 किं चित् ।

लक्षण च, यथाऽधिकाभ्यासे छेदन न्यूनाभ्यासे च ?

उच्यते तत्राप्ययमेव प्रकार,

किन्तु साभ्यास प्रमाणमशेन च सदृशच्छेद कृत्वा आगन्तुमपि छेदसङ्ख्याद्विगुणसङ्ख्यया छेद कृत्वा तत्र यावद्भिरशैर्हीनैरेको भागो हीनो भवति तावद्भिरशैर्न्यूनेऽभ्यासे निरञ्जन कुर्यात्, अधिकाभ्यासे तावद्द्विगुणाभ्यासेऽभ्यास एको भाग, प्रमाण भागार्धं, तत्रार्धेन च सदृशच्छेदे साभ्यासे प्रमाणे त्रयोऽर्धच्छेदा, तत्सङ्ख्याद्विगुणच्छेदेऽभ्यासे तत्र षडर्धच्छेदा, तेषु द्वाभ्यामूनाभ्यामेको भागो हीयत इति तदूने लक्षण स्यात्। त्रिगुणाभ्यासेऽभ्यास एको भाग, प्रमाण तु तृतीयाशक, तत्सदृशा[1] अभ्यासे त्रयस्तृतीयाशका, तेन साभ्यासस्य प्रमाणस्य चत्वारस्तृतीयाशा, तद्द्विगुणच्छेदे आगन्तावष्टौ तृतीयाशा तत्र त्रिभिरशैरूने लक्षणम्। एव चतुर्गुणाभ्यासेषु भागानुन्नीय तदनुरूपमागन्तौ लक्षण कुर्यात्। तथा त्रिपादाभ्यासेऽभ्यास एको भाग, प्रमाण तत्सदृश एको भागस्तृतीयाशश्च, अशेन च सदृशच्छेदे साभ्यासप्रमाणे सप्त तृतीयाशा, तद्द्विगुणच्छेदे आगन्तौ चतुर्दश तृतीयाशा, तैस्त्रिभिरूने तत्र लक्षणम्। एवमेवान्येष्वपि साशच्छेदेषु भागकल्पन लक्षण च द्रष्टव्यम्। एतदपि[2] न विस्मर्तव्य—सर्वेष्वभ्यासेष्वागन्तुभागैक्य तदशेन प्रमाणे भागैक्य भागानेकत्व साशत्व केवलाशत्व[3] चेति, एवमस्य विहरणस्य सर्वाभ्यासविषयत्वमवगन्तव्यम्। यद्येवमुपपद्यते, कुतो ज्ञायते न्यायोऽङ्गीकृत इति, उच्यते—आगन्तुचतुर्थमायामश्चाक्षणयारज्जुरिति आयामाभ्यासोऽभ्यासचतुर्थस्याक्षणयारज्जुविशेषत्वप्रतिपादनादर्धाभ्यासायामाभ्या सिद्धस्य पञ्चदशिकाष्टिकयोस्सप्तदशिकाक्षणयारज्जुरित्यादेर्विषमाभ्यासोपन्यासाच्च ज्ञायते न्यायोऽयमङ्गीकृत इत्यलमतिप्रसङ्गेन। प्रकृतमनुसराम। लक्षणकरण किमर्थं, निरञ्जनार्थं तिर्यङ्मान्यक्षणयारज्जुविवेकार्थं च, दक्षिणोत्तरग्रहण किमर्थं प्रदर्शनार्थं तिरश्चया, इतरथा सद प्रभृतिषु विरोधात्।

अस्य विहरणस्यान्तेऽन्यस्य प्रतिपादनायाह[4]—स समाधि।

द्विपदमिदम्। तच्छब्देन विहरणमुच्यते, समाध्यभिप्राय पुंल्लिङ्गनिर्देश, सशब्द सम्यगर्थे समशब्दार्थे वा, आङ् समन्ततोभावे, दधाति करोत्यर्थे, सम्यगन्यूनानतिरिक्त क्षेत्र समन्तादापादयतीति समाधि,

1 तत्सदृश एको भाग, त्रयस्तृतीयांशका।
2 एतदपि न।
3 केवलांशाङ्गत्व।
4 अथास्य विहरणस्य प्रांतस्य प्रतिपादनायाह। इति पा।

यद्वा—समानानामाधि' समाधिः । पार्श्वमान्यौ तिर्यङ्मान्यौ प्रकरण्या-रज्जुश्च परस्परमन्योन्यसमासमपादयतीति, चतुर्दिक्षु सम क्षेत्रमापादयतीति समाधि', अयमय —विमीयमानक्षेत्रस्यान्यूनानतिरेकित्वेनावस्थान समाधानम्, तच्च सम्यगुपायस्य विहरणस्य फलम्, तद्धेतुत्वाद्विहरणस्य, हेतुफलयोरभेदोपचारेण तदेव विहरण समाधिरित्युच्यते, योग इति चेति, किमथमिदमुच्यते ? श्रातॄणा प्रतिपत्तिप्ररोचनार्थं[1] यदेतदुक्त विहरण स समाधि', समोच श्रोण्यसान् सपादयति तस्मादिद सुष्ठुतममतो निस्सदिदमनेन विहर्तव्यमिति ॥

तन्निमित्तो निर्ह्रासो विवृद्धिर्वा ॥ (6)

Kapardi (Sutra 6)

निमित्त करण प्रकृति. इति पर्याया । तदेव निरञ्जनार्थं[2] यस्य स तन्निमित्त । निर्ह्रासः तिर्यङ्मान्या । वृद्धिर्वा तिर्यङ्मान्या एव । किमुक्त भवति ? उक्तेन मार्गेण प्रागायता तिर्यगायतास्समाश्चतुरस्रा कृता इत्यर्थ ।

Karavinda (Sutra 6)

तदिति समाधिर्हेतुर्विहरणमुच्यते—निमित्त कारण हतुरिति पर्याया, निर्ह्रासोऽपचय, विवृद्धिरुपचय, तौ तन्निमित्तौ[3] स्याता, लाघवार्थमिदमुच्यते, महति चतुरस्रे विहृते तदेकदेशभूत चतुरस्र सम्पादयितुमिच्छन् महतश्चतुरस्रस्य श्रोण्यसादिसस्थितशङ्क्वनुरूपमभिमत[4] प्रदेशेषु शङ्कून्निहत्य शङ्कुषु रज्जु प्रबद्धच यावदभिमत प्रसार्य ताभिरल्प चतुरस्र सम्पादयेत्, विवृद्धौ चतुरस्रपार्श्वमान्यादिभिर्यावदभिमता दीर्घरज्जु प्रबद्धय तास्तत्कूटसस्थितशङ्क्वनुरूपा प्रसार्याभिमतप्रदेशेषु शङ्कु निहत्य तदन्तर गृह्णीयात्, पृष्ठयाया करणीषु चाभिमतप्रदेशेषु शङ्कु निहत्य तदनुरूपाणि निमित्तान्तराणि कृत्वा रज्जू प्रसार्य क्षेत्रस्यापचयमुपचय वा कुर्यादित्यथ । निर्ह्रासोदाहरण महावेद्या उत्तरवेदिधिष्ण्यादय[5]। विवृद्ध्युदाहरण महावेद्याद्या ।

Sundararaja (Sutra 2 to 6)

अभीष्टक्षेत्रायामसम्मिता रज्जु प्रमाणम् । सा सर्वमानेपूभयत पाशा

---

1 प्रपत्तिप्ररोचनार्थं ।

2 निरञ्छ ।

3 तौ निमित्तौ (तस्मिन् निमित्तौ) ।

4 शङ्क्वनुरूपमभित ।

5 वेद्यामुत्तर ।

प्राची[1] । सा पूर्वापरयोश्शङ्क्वोर्नियता[2] भवति । सैव पृष्ठ्यभवत्वात् पृष्ठ्येत्यपि व्यपदिश्यते । तद्यावदायाम तावदायामे शुल्बान्तरे तस्यार्धम न्यस्योपरि[3] प्रक्षिप्य अन्तयो पाशौ कुर्यात् । तत्र त्रीणि[4] प्रमाणार्धानि भवन्ति । तेषामपरभागभावितृतीयमर्धं स्पोढा सम्भुज्य पाशादारभ्य पञ्चसु भागेष्विति[6] तेषु लक्षण कुर्यात् । अस्य शुल्बस्यान्तौ पृष्ठ्यान्तयोर्नियम्य कृतेन[7] लक्षणेन दक्षिणा प्रसार्य निमित्त करोति शङ्कु निहन्ति । एवमुत्तरत पाशौ विपर्यस्य पूर्वान्तेऽप्येव शङ्कुम् । स समाधि स एको विहारयोग । अस्योदाहरणम् — षट्त्रिंशिकायामष्टादशे त्यादि । एव कृते यदि तिर्यङ्मान्या निर्ह्रासो विवृद्धिर्वेष्यते सोऽपि तन्निमित्त । ये दक्षिणोत्तरा निमित्तभूताश्शङ्कव तानेव चिह्नीकृत्य कर्तव्या ।

निर्ह्रासस्योदाहरणम्— पञ्चदशिकेनैवापायम्य द्वादशिके शङ्कुम्' इत्यादि । विवृद्धेरपि पञ्चदशिकेनैवापायम्यार्धेन तत' इत्यादि । प्राची तु सर्वत्र लोकत एव ग्राह्या । तत्र बोधायन 'कृत्तिका खल्विमा[8] प्राचीं न जहति कदाचन[9] । तासा सन्दर्शनेन[10] मापयेदित्येकम् । श्रोणासन्दर्शनेन मापयेदित्येकम् । चित्रास्वात्योरन्तरालेन मापयेदित्यपर' इति । एतानि लक्षणानि देशविशेषेषु व्यवतिष्ठन्ते, सर्वदेशसाधारण लक्षणमाह कात्यायन —'समे क्षेत्रे शङ्कु[11] निखाय शङ्कुसम्मितया रज्ज्वा मण्डल परिलिख्य यत्र लेखयोश्शङ्क्वग्रच्छाया निपतति सा प्राची' । इति । लेखयोरिति । मण्डलरेखया पूर्वापरभागयोरित्यर्थः ।।

आयाम याम्यस्यागन्तुचतुर्थमायामस्याक्ष्णया रज्जुस्तिर्यङ्मानी शेष ।। (7)

व्याख्यात विहरणम् ।। (8)

**Kapardi (Sutra 7 and 8)**

प्रमाणं याम्यस्य आयाममात्री रज्जुमायामे प्रक्षिप्य आगन्तोश्चतुर्थमभ्यस्तचतुर्थं भागं आयामे सयोज्य लक्षण कृत्वा सपाद आयामोऽक्ष्णया रज्जु । शेष —पादोनायाम । सा तिर्यङ्मानी । व्याख्यातो विहरणविधि ।

1 अपोता ।
2 निहता ।
3 तदर्थं ।
4 त्रीणि त्रीणि ।
5 यथा ।
6 भागपुञ्चकाणा, भागेष्वतीतेषु ।
7 इ, त्स्वविशम् तेन
8 खल्विमा ।
9 न च्यवन्ते तासां ।
10 सन्दर्शनेनानुमापयेदि (एवं सर्वत्र)
11 समशङ्कु ।

विस्तरणविधिरुक्त इयांस्तु विशेष असौ पूर्वं मापयितव्यौ। विपर्यस्य श्रोणी समनन्यत् । वाचोयुक्तिभेदेन विधानस्यैतत्प्रयोजनम् आयाम-तृतीयमभ्यस्य पूर्वस्मिश्चतुर्थेऽष्टभागोने लक्षणमित्येवमादीनामुपसङ्ग्रहार्थम् । तत्र श्लोक —

> आगन्तवर्धेन चिह्न यद्भागानश[1] करोति च ।
> ध्रुव स यावदागन्तु कृत्वंशोने निरुञ्जनम् ॥

विकल्पविधिनोक्ते सिद्धे 'व्याख्यात विहरणम् इति किमर्थमुक्तम्[2] शुल्बान्तरोक्ताना सप्तममण्डलादीनां गौरवप्रतिपादनाथमुक्तमेव विहरण लघीय इति प्रतिपादयितुम् ।

**Karavinda** (Sūtra 7 and 8)

अस्यैव विहरणस्यापातदर्शनायाभ्यामान्तरमाह— (आयाम—शेप) आयामप्रमाणा कृत्स्नमभ्यस्य क्रिमत[2] कर्तव्य पूर्वोक्तप्रकारेण लक्षणादि कुर्यादित्यभिप्राय । अयमर्थ —आयाममभ्यस्यापरस्मिन् द्वितीये चतुर्थभागोने लक्षण कुर्यादिति । एव कृते सत्याग·तुचतुर्थमागन्तौ चतुर्थं प्रतीकमायामश्चाक्ष्णयारज्जुस्स्यात् । अक्ष्णयेति निपातो विभक्तिप्रतिरूपक कोणवाची । कोणगता रज्जुरक्ष्णयारज्जु, कर्णरज्जुरित्यर्थ । शेप अक्ष्णयारज्जुभूतप्रतीकादन्यानि त्रीणि प्रतीकानि । तिर्यक् मीयते अनयेति तिर्यङ्मानी, तिर्यगवस्थिता रज्जु । रज्ज्वभिप्राय स्त्रीलिङ्गनिर्देश । वा शब्दोऽभ्यासान्तरसमुच्चयार्थं । आयाम वा द्विगुण वा तृतीय वा तुरीय वेत्येवमाद्यभ्यासविशेपार्थं वाग्रहणम् । अयमर्थ – यावती रज्जु प्रमाण तस्मात् न्यूना तदधिका वा तत्समा वाऽभ्यस्यते तत्र तत्र पूर्वोक्तप्रकारेण तावतस्तावतो वर्गान् कृत्वा भागेनैकेन हीने लक्षण कृत्वा पृष्ठयान्तयोर्गन्तौ नियम्येत्यादिना प्रकारेण विहरेदिति । एषामुदाहरणान्युत्तरसूत्रे दर्शयिष्यन्ते । ननु च लक्षणनिमित्तार्थं[3] रज्ज्वामपायतायाा लक्षणपूर्वभाविन प्रमाणदनन्तरस्य[4] एकस्य भागस्याक्ष्णयारज्जुता भागान्तराणा तिर्यङ्मानिता च स्पष्टैव, किमर्थमिदमुच्यते, आगन्तुचतुर्थमायामश्चाक्ष्णयारज्जुस्तिर्यङ्मानी शेष इति । उच्यते—प्रथमभूतेऽर्धाभ्यासे षड्भागोने लक्षणमित्येतावन्मात्रमित्यभिमतम्[5] तावतार्ध ऊनभाग[6] किमर्थं, किमभ्यासो मूलतो हीयते उतान्तत, अन्ये च भागा किमर्थं, ते च कुत इति न ज्ञायते, तत्र नियम-

1 आगन्तवर्धेन चिह्नाय भागोनात्र। 2 किमर्थं ।
3 लक्षणेन निमित्तार्थं । 4 प्रमाणान्तरस्य ।
5 अभि हितम् । 6 षड्नोभाग ।

हेतोरभावात्। अप्रवृत्तिरनियमो वा स्यादिहागन्तुचतुर्थमायामश्चाक्ष्णया रज्जु तिर्यङ्मानी शेष इति अतस्स एको भागोऽभ्यासमूल्त, इतरे भागास्तदन्तत इतीह सिद्ध तत्रोपजीव्यत्र[1] तत्र[2] सिद्धम्, नन्वेकस्य भागस्याक्ष्ण यारज्जुत्वे भागान्तराणा तिर्यङ्मानित्वे च पृथग्भूताभ्यास[3] एव वक्तव्ये कस्मात्तद्विपरीत कृत, उच्यते—अर्धाभ्यासार्धायामाभ्यासयोरेकविहरणस्यविषयज्ञापने तृतीयाश्रुतिसामर्थ्यात्सूचितमभ्यासन्यायमभ्यासविषये सूत्रावयवेदं र्शयितु विपरीत कृतम्। किंचात्राभ्यासस्य षोढा विभागे चतुर्धा त्रिभाग च एकस्य भागस्याक्ष्णयारज्जुता भागान्तराणा सर्वेषा तिर्यङ्मानिता च प्रतिपद्यते। व्याख्यात विहरणमित्यत्र व्याख्यातमेव विहरण नान्यद्विहरणमित्ययमथ, आगन्तौ न्यूनाधिकभावेन साभ्यासस्य प्रमाणस्यागन्तौ भागानामनेकविषयत्वेऽपि पूर्वोक्तमेव, विहरण नान्यद्विहरणमिति[4]। तत्र श्लोका —

भागास्साभ्याससमानस्य यावन्तोऽभ्याससम्मिता।
द्विस्तावन्तस्स्युरागन्तौ तदेकोनेऽत्र लक्षणम् ॥1॥

ते चेत् साभ्यासमानस्य साशास्स्युस्साशसख्यया।
छिन्दद्याद्द्विगुणयाऽऽगन्तु भागोनेऽत्रैव[5] लक्षणम् ॥2॥

ऊनेऽधिके वा त्वागन्तौ[6] कथ साभ्यासमानके।
भागाना परिविलप्तिस्स्यात् कथ वा स्यान्निरञ्जनम् ॥3॥

समता न्यूनताधिक्येऽप्यागन्तौ[7] स्यात्सदैकता।
तद्वशन प्रमाणे स्युर्भागैक्यानेकताशता[8] ॥4॥

आगन्तावधिके मान केवलाशो[9] भवत्सदा।
न्यूने भागैक्यनानात्वे स्याता साशे च केवले ॥5॥

त्रिपादोने तु साशत्वमर्धोने स्यान्निरञ्जनम्[10]।
समे भागैक्यमेव स्यादित्येव[11] भागकल्पना ॥6॥

साशेंऽशासदृशच्छेद कृत्वा साभ्यासमानकम्।
तच्छेदसङ्ख्याद्विगुणच्छेदमागन्तुमप्यथ ॥7॥

---

1 जीवित्वम्।
2 न तत्र।
3 प्रथमभूताभ्यास।
4 न तोऽन्यद्विहरणमिति।
5 यत्रापि।
6 त्र्यागन्तौ।
7 याऽगन्तौ।
8 स्युर्भागैक्यानेदेकतागता।
9 केवल यो।
10 निरञ्जना।
11 स्यादितीयम्।

निरञ्जनं विधिः कस्माद्भागेनैकेन वर्जिते ।
अर्धाभ्यासे तु भागोने लक्षणं यत्तृतीयके[1] ॥23॥
तद्दरीकृत्य चायामाभ्यासे तत्फलभागिनः ।
त्रिर्यङ्मान्यक्ष्णयारज्जुविवेकरचैकभागकम् ॥24॥
आश्रित्य निर्णयं ब्रूते तेनैकोनेऽत्र लक्षणम् ।

अलमतिविस्तरेण ॥

Sundararaja (Sutra 7 and 8)

अथ योगान्तरमाह—

प्रमाणमात्रे शुल्बे (प्रमाणमेवाभ्यस्य[2] तां रज्जुं चतुर्धा संभुज्य तृतीयचतुर्थयोर्मध्ये लक्षणं कृत्वा पूर्वापरयोः पाशौ प्रतिमुच्य चतुर्थमायामश्च) विहरणकालेऽक्ष्णयारज्जुः कार्या । शेषः पादोन आयामस्तिर्यङ्मानीस्यानीयः । एतदुक्तं भवति—आयामं द्विगुणं कृत्वाऽन्यतरस्मिन्नर्धे चतुर्थभागोने लक्षणमिति । यथा गार्हपत्यचितेरायतने[3] चतुररत्नौ चतुररत्निमभ्यस्य त्रिष्वरत्निषु लक्षणमिति कृत्वा विहरेत् । व्याख्यातमिति । पृष्ठ्यान्तयोरन्तावित्यादिना ॥ अत्रेमावभीष्टाभ्यासया रज्ज्वा विहरणार्थौ श्लोकौ—

इष्टायां पृष्ठ्यायामिष्टामागन्तुरज्जुमभ्यस्येत् ।
अभ्यासार्धसमाना यावन्तोऽभ्यासस्ताधिकायामे[4] ॥1॥
अभ्यासं तावद्धा सभुज्यैकोनितेऽत्र चिह्नं स्यात् ।
एकोऽभ्याससायाम. कर्णस्तिर्यङ्क्त शेषस्स्यात्[5] ॥2॥

1 यद्विपीयते ।

2. पुस्तकान्तरपाठस्थाने—अभ्यासेन तु चतुर्थमायामश्च । इति कोशान्तरे दृश्यते; प्रमाणमभ्यस्य ।

3. गार्हपत्ये चतुररत्निमात्रे द्व्यरत्निम्यरत्निमात्रे च लक्षणमिति । व्याख्यातमिति ।

4 इष्टायां पृष्ठ्यायामागन्तु रज्जुमभ्यसेत् । अभ्यासार्धसमानाया यावन्तोऽभ्यासाधिका ॥1॥

5. अभ्यासं तु चतुर्धा समुज्यैकोनिते चिह्नं कुर्यात् । एकोऽभ्याससायाम. कर्णस्तिर्यङ् तिर्यग्, आयाम ॥2॥

दीर्घस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्त-दुभयं करोति ।। (9)

*Kapardi (Sutra 9)*

दीर्घचतुरस्रस्येत्यर्थः । समचतुरस्रस्य पार्श्वमान्यादीनामभावाद्विषम-चतुरस्राण्यायामाः परिगृह्यन्ते[1] । पार्श्वमानी तिर्यङ्मानी कुरुत इति निर्देशादक्ष्णयारज्जुरित्येकवचननिर्देशाच्च यस्य चतुरस्रस्य पार्श्वमान्येका तिर्यङ्मान्येकैवाक्ष्णयारज्जुस्सङ्गृह्यते पार्श्वमान्या कृते चतुरस्रे यावत् क्षेत्रं भवति तिर्यङ्मान्या च, तदुभयमक्ष्णयारज्जुः करोति—पार्श्वमानी-क्षेत्रं तिर्यङ्मानीक्षेत्रं च करोतीत्यर्थः । वक्ष्यति च 'त्रिकचतुष्कयोः' इत्यादिना । त्रिकस्य वर्गो नव $(3^2=9)$; चतुष्कस्य वर्गः षोडश $(4^2=16)$ । षोडशसु नवके क्षिप्ते $(16+9=25)$ पञ्चविंशतिः । पञ्चकस्य वर्गः पञ्चविंशतिः: $(5=\sqrt{25})$ एवं सर्वत्र द्रष्टव्यम् । पृथग्ग्रहणं ससर्गो मा भूदित्येवमर्थम् । भूतग्रहणं किमर्थं ? पृथक्कुरुत इत्युच्यमाने ससर्गविशेषोऽपि स्यात् । भूतग्रहणे सत्येतद्दोषो न भवति ।

ताभिर्ज्ञेयाभिरुक्तं विहरणम् ।। (10)

*Kapardi (Sutra 10)*

ताभिरुक्ताभिस्तिसृभिरुक्तं विहरणम् । ज्ञेयाभिः ज्ञातुं शक्याभिः—*मनसा परिकल्पिताभि. । उक्तेन मार्गेण विहरेदित्यर्थः ।* प्रउगादिषु करणपरिज्ञानार्थमेतत्सूत्रमिहाप्युपकरिष्यतीत्यत्रोक्तम् ।

*Karavinda (Sutra 9 and 10)*

*एतद्विहरणं क्षेत्रसमाधानात् । समाधिरित्युक्तम् । अस्य समाधि-*हेतुत्वं दर्शयन्नाह ।

दीर्घस्य—दीर्घचतुरस्रस्य, *समस्येति च सामर्थ्याल्लभ्यते, तदत्रैवं* व्याख्यास्यते—अक्ष्णयारज्जुस्तिर्यङ्मानी चोक्ता, पार्श्वं यया मीयते सा पार्श्वमानी, यत् पृथग्भूते—नानाभूते, कुरुतः—सपादयत तदुभयमुभयक्षेत्र-परिमितं एकं क्षेत्रं करोति—संपादयतीत्यर्थः, दीर्घस्य चतुरस्रस्य पार्श्वमानी स्वयमेव पार्श्वमानी तिर्यङ्मानी च भूत्वा यत् क्षेत्रं करोति, तिर्यङ्मानी स्वयमेव पार्श्वमानी तिर्यङ्मानी च भूत्वा यत्क्षेत्रं करोति अक्ष्णया-रज्जुस्स्वयमेव पार्श्वमानी तिर्यङ्मानी च भूत्वा तदुभयक्षेत्रपरिमितं क्षेत्रं

1. चतुरश्राच्च न परिगृह्यन्ते ।

करोति । ताभिर्ज्ञेयाभिरुक्तं विहरणं—या एवंभूताः पार्श्वमानीतिर्यङ्मान्यक्ष्णयारज्जवः ताभिर्ज्ञेयाभिर्ज्ञातुं शक्याभिः, उक्तप्रकारपार्श्वमानीतिर्यङ्मान्यक्ष्णयारज्जूनामन्यतरयोः परिमाणज्ञानेनान्यतरा ज्ञातुं शक्येति ता ज्ञेया. । तद्यथ, यथा इयत्करणी पार्श्वमानी इयत्करणी तिर्यङ्मानीति ज्ञातेऽक्ष्णयारज्जुस्तदुभयफलक्षेत्रकरणीति ज्ञायते । एवमियत्करणी पार्श्वमानी इयत्करण्यक्ष्णयारज्जुरिति ज्ञातेऽक्ष्णयारज्जुफलभूतक्षेत्रात् पार्श्वमानीफलभूतक्षेत्रे शोधिते शिष्टक्षेत्रस्य करणी तिर्यङ्मानीति ज्ञायते, तथेयत्करणी तिर्यङ्मानी इयत्करण्यक्ष्णयारज्जुरिति ज्ञातेऽक्ष्णयारज्जुफलभूतक्षेत्रात्तिर्यङ्मानीफलभूतक्षेत्रे शोधिते शिष्टक्षेत्रस्य करणी पार्श्वमानीति ज्ञातुं शक्यते । एवमेता ज्ञेयाः, ताभिर्ज्ञेयाभिरुक्तं विहरणं—यदुक्तं विहरणं तत्ताभिर्ज्ञेयाभिर्ज्ञेयाभिरित्यर्थः, एवमुक्तस्य विहरणस्य समाधिहेतुत्वमवगन्तव्यमित्यभिप्रायः । अथवा ज्ञेयाभिः मनसि कल्पितुमुचिताभिः पूर्वोक्तं विहरणं कर्तव्यम् । अयमर्थः पार्श्वमानीतिर्यङ्मान्यक्ष्णयारज्जूनां प्रमाणं ज्ञात्वा तिर्यङ्मान्यक्ष्णयारज्जूभयप्रमाणामेकां रज्जुं नीत्वा तिर्यङ्मान्यन्ते लक्षणं कृत्वा तया पूर्वोक्तं विहरणं कर्तव्यमिति । पूर्वोक्तानामर्धाभ्यासादीनां कानिचिदुदाहरणान्यत्रोच्यन्ते । अर्धाभ्यासे यथा—द्वादशाङ्गुलप्रमाणे षडङ्गुलमभ्यस्ते तदष्टादशाङ्गुलम् । तत्रागन्तुना षडङ्गुलेन प्रमाणे परिच्छिन्ने साभ्यासस्य प्रमाणस्य षडङ्गुलास्त्रयो भागा । तत्र भागसङ्ख्याभिस्तिसृभि द्विगुणाभिष्षड्भिरागन्तौ षडङ्गुले छिन्ने तस्यैको भाग एकैकमङ्गुलं । तत्र षड्भागोने लक्षणे कृते भागेनैकेन सहित आयामः त्रयोदशाङ्गुल अक्ष्णयारज्जुः शेषा. पञ्च भागा । पञ्चाङ्गुली तिर्यङ्मानी, तत्र द्वादशाङ्गुलं प्रमाणम्, चतुरस्राणि चतुश्चत्वारिंशच्छतमङ्गुलिक्षेत्राणि करोति । पञ्चाङ्गुला तिर्यङ्मानी पञ्चविंशतिमङ्गुलिक्षेत्राणि करोति । तथा त्रयोदशाङ्गुलाक्ष्णयारज्जुः, तदुभयमेकोनसप्तत्यधिकशतमङ्गुलिक्षेत्राणि करोति । आयामाभ्यासे यथा—आयामो द्वादशाङ्गुलः । आगन्तुश्च तावानेव । साभ्यासस्य प्रमाणस्यागन्तुपरिमितौ द्वौ भागौ । तद्द्विगुणसङ्ख्यायाऽऽगन्तौ छिन्ने त्र्यङ्गुलाश्चत्वार आगन्तौ भागा । तत्रागन्तुचतुर्थमायामश्चाक्ष्णयारज्जुः पञ्चदशाङ्गुला, शेषतिर्यङ्मानी नवाङ्गुला, तत्र नवाङ्गुले काशीतिमङ्गुलिक्षेत्राणि करोति, आयामः पूर्ववदेव, पञ्चदशाङ्गुला अक्ष्णयारज्जुः तदुभयं पञ्चविंशत्यधिकशतमङ्गुलिक्षेत्राणि करोति । आयामद्विगुणाभ्यासे यथा—आयामो[1] द्वादशाङ्गुल, द्विगुणश्चतुर्विंशत्यङ्गुलः, तत्राभ्यासेन प्रमाणे परिच्छिद्य-

1. स एव आयामो ।

माने अभ्यास एको भाग. प्रमाण तदर्धं, अर्धेनैकस्मिन् परिच्छिद्यमाने श्रीण्यर्धानि तद्द्विगुणाच्छेदा तत्रैकैकमर्धं चतुरङ्गुल द्वे अर्धे अष्टाङ्गुले एको भाग, तदूने लक्षण, तेन युक्त प्रमाण, विंशत्यङ्गुलमक्षणयारज्जु, तदून आगन्तौ चतुरङगुल पार्श्वचतुष्टयं षोडशाङ्गुल, सा तिर्यङ्मानी तत्र षोडशाङ्गुला पट्पञ्चाशच्छतद्वयमङ्गुलिक्षेत्राणि करोति, आयामो द्वादशाङ्गुल चतुश्चत्वारिंशच्छत तदुभय चत्वारिंशच्छतानि[1] विंशत्यङ्गुलाक्षणयारज्जु करोति, यद्वाऽभ्यास एको भाग प्रमाण तदर्धमेवस्मिन् भागे द्विगुणे द्वे सख्ये, अर्धे द्विगुणिते द्वे अर्धे । तत्रैका सख्या त्रिसख्ययाऽऽगन्तौ चतुर्विंशत्यङ्गुले छिन्ने तस्यैकैको भाग अष्टाङ्गुल, तेनैकेन सहित प्रमाण, विंशत्यङ्गुलाऽऽक्षणयारज्जुरित्यादि पूर्वोक्तमेव । तृतीयाभ्यासे यथा—प्रमाण चतुर्विंशत्यङ्गुल, तस्य तृतीयमष्टाङ्गुल तस्मिश्चतुर्विंशत्यङ्गुले प्रक्षिप्ते साभ्यास प्रमाण द्वात्रिंशदङ्गुल, तत्र साभ्यामस्य प्रमाणस्यागन्तुसहिताश्चत्वारो भागा, तद्द्विगुणच्छेदे आगन्तुरष्टभागा, तत्रैको[2] भाग एकाङ्गुल, तत्र भागेनैकेन सहित प्रमाण पञ्चविंशत्यङ्गुल, अक्षणयारज्जु सप्ताङ्गुलानि तिर्यङ्मानी सैकोनपञ्चाशत्करोति । चतुर्विंशत्यङ्गुल प्रमाणपट्सप्तति पञ्चशतानि च करोति । तदुभय पञ्चविंशत्यङ्गुला पञ्चविंशति षट शतानि च करोति । एवमेवाभ्यासान्तरेष्वपि द्रष्टव्यम् । त्रिकचतुष्कयोरित्यादिना कानिचिदुदाहरणान्युत्तरत्र स्वयमेव वक्ष्यति । अलमति प्रसङ्गेन ।

Sundararāja (*Sūtra 9 and 10*)

अथ सनिदानमनेकप्रकार[3] विहरणमाह—

दीर्घस्य चतुरस्रस्य पार्श्वमान्या समचतुरस्रे कृते यत् क्षेत्र सपद्यते, यच्च तिर्यङ्मान्या तदुभय अक्षणयारज्ज्वा समचतुरस्रे कृते सपद्यते क्षत्र । त्रिकचतुष्कयोरित्याद्युदाहरणम् ।

एव चासा द्वयोर्ज्ञातयोस्तृतीया ज्ञातु शक्यते । यथा पार्श्वमानीतिर्यङ्मान्योर्ज्ञातयो ते पृथग्वर्गयित्वा सयोज्य तद्वर्गमूलमक्षणयारज्जु । तथा पार्श्वमान्यक्षणयारज्ज्वोर्ज्ञातयो अक्षणयारज्जुवर्गात्पार्श्वमानीवर्गं विशोध्य (वि) शिष्टस्य मूल तिर्यङ्मानीवर्गं एव तिर्यङ्मानीवर्ग विशोध्य पार्श्वमानी । एव भूताभिर्ज्ञेयाभि पूर्वोक्त विहरणम् । त्रिकचतुष्कयोरित्यादीन्येवोदाहरणानि । पूर्वयोगावप्यस्यैव प्रपञ्चौ ॥

1 चत्वारि शतानि । 2 तत्रैकैको ।

3 सन्निदानमनेकप्रकार ।

चतुरस्रस्याक्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति ॥ (11)

समस्य द्विकरणी ॥ (12)

प्रमाणं तृतीयेन वर्धयेत्तच्चचतुर्थेनात्मचतुस्त्रिंशोनेन ॥ (13)

स विशेषः ॥ (14)

Kapardı (Sutra 11 to 14)

समस्य द्विकरणी । समस्य चतुरस्रस्य अक्ष्णयारज्जुः समचतुरस्रस्य क्षेत्रं यावद्भवति तस्य द्विगुणं करोति[1] । समस्य ग्रहणं किमर्थम्? दीर्घनिवृत्त्यर्थमिति चेन्न, उक्तार्थत्वात् । अक्ष्णयारज्जोरभावान्मण्डलस्याप्रसङ्गः । सर्वात्मना समस्य प्रतिपत्त्यर्थमिति, तदप्यप्रयोजकम् । अक्ष्णयारज्जुरित्येकवचननिर्देशात् । प्रमाणं तृतीयेन वर्धयेत्—प्रमाणं तृतीय प्रक्षिपेत् । तच्चतुर्थेन । तदिति प्रक्षिप्ततृतीय परामृश्यते । तृतीय स्वचतुर्थेन वर्धयेदिति शेषः । आत्मचतुस्त्रिंशोनेन—एतत् चतुर्थस्य विशेषणम्, तच्चतुर्थं चतुस्त्रिंशद्धा विभज्यैक भागमुत्सृज्य शिष्टेनेत्यर्थः ।

$$\left(1+\frac{1}{3}+\frac{1}{34}-\frac{1}{3\times4\times34}=1\ 4142156\right)$$

सविशेषः "सविशेष इति सज्ञा । एव सर्वगितस्य सह विशेषेण वर्तत इति अन्वर्था सज्ञा । द्वादशे चत्वारि चतुर्षु एक चतुस्त्रिंशद्धा विभज्य एक भागमुत्सृज्य, एव तिलोनसप्तदशाङ्गुल भवति[2] । द्वादशाङ्गुलस्य तिलवर्गः एक नियुत षडयुतानि षट् सहस्राणि चत्वारि शतानि षष्टिः चत्वारीति (166464) तिलप्रमाणानि ।[3] सप्तदशाङ्गुलमानस्य तिलोनस्य तिलवर्गः—त्रीणि[4] नियुतानि त्रीण्ययुतानि द्वे सहस्रे नव शतानि विंशतिर्नव च (332929) अत्र वर्गियोरशेषो न भवतीति वेणोरविशेषे गृह्यमाणे दर्शितलक्षणान्यनिरिक्तानि । तेन ... रज्जुकार्धमात्रमप्यतिरिक्तं भवति । तस्माद्विशेष इति व्यवहारार्थमेव भविष्यतीति प्रगणय्य सज्ञा कृताचार्येण ॥

---

1. पार्श्वमानी तिर्यङ्मानी चैका चैव, अक्ष्णया = $\sqrt{2}$ अत $\sqrt{2\times2}=2$ = क्षेत्रम् ।

2. द्वादशाङ्गुलप्रमाणे तृतीय, चतुरङ्गुल चतुर्थं तिलोनैकाङ्गुले, एव तिलोनसप्तदशाङ्गुल भवति ॥ इति पाठान्तरम् ॥

3. अङ्गुलस्य = 34 तिलानि, अत द्वादशाङ्गुलानि = $12\times34=408$. अस्य वर्ग = $408 > 408 = 1,66,464$, इत्थमेव सप्तदशाङ्गुलस्य तिलानि = $17\times34=578$ तिलोनमेतद् = 577 अस्य वर्ग = 332929, एतच्च $2\times166464$ सन्निकटमस्ति

4. पाठान्तर त्रिंशदे — त्रीणि (पाठान्तरम्)

अथापरम् ॥ (15)

Kapardi (Sutra 15)

विहारं वक्ष्याम इति शेषः ।

प्रमाणमात्रीं रज्जुमुभयत पाशां करोति ॥ (16)

Kapardi (Sutra 16)

यत्प्रमाणं चतुरस्रं कर्तुमिच्छति तावत्प्रमाणां रज्जुमुभयत पाशां कृत्वा[1]—

मध्ये लक्षणमर्धमध्यमयोश्च पृष्ठ्यायां रज्जुमायम्य पाशयोर्लक्षणे-ष्विति शङ्कुं निहत्योपान्त्ययो पाशौ प्रतिमुच्य मध्यमेन लक्षणेन दक्षि-णापायम्य शङ्कुं निमित्तं करोति ॥ (17)

मध्यमे पाशौ प्रतिमुच्य उपर्युपरि निमित्तं मध्यमेन लक्षणेन दक्षि णापायम्य शङ्कुं निहन्ति ॥ (18

तस्मिन्पाशं प्रतिमुच्य पूर्वस्मिन्नितरं मध्यमेन लक्षणेन दक्षिणमस-मायच्छेत् ॥ (19)

उन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य मध्यमेनैव लक्षणेन दक्षिणां श्रो णिमायच्छेत् ॥ (20)

एवमुत्तरौ श्रोण्यंसौ ॥ (21)

Kapardi (Sutra 17 21)

मध्ये लक्षणमधमध्यमयोश्च—पाशलक्षणयोर्मध्य इत्यर्थ । पाशयो-र्लक्षणेषु च शङ्कुं निहत्य उपान्त्ययोर्द्वितीयचतुर्थयो पाशौ प्रतिमुच्य मध्यमेन लक्षणेन दक्षिणापसार्य निमित्तं साध्यनिमित्तं वा स्पदं कृत्वा मध्यमे पाशौ प्रतिमुच्य उपर्युपरि वाङ्कपदं तेनैव लक्षणेन दक्षिणापसार्य, शङ्कुं निहत्य तस्मिन्नेकतरं पाशं ...मुच्य पूर्वस्मिन् शङ्काबितरं पाशं तेनैव लक्षणेन दक्षिणमसमायच्छेत् । तत्र शङ्कुं निहन्यात् । स दक्षिणांस[2] । एवमुत्तरत पूर्वस्मात्पाशमुन्मुच्यापरस्मिन् प्रतिमुच्य तेनैव लक्षणेन दक्षिणां श्रोणिमायच्छेत् । तत्र शङ्कुं निहन्यात् । सा दक्षिणा श्रोणी । एवमुत्तरत पक्ष । तत्र इयान्विशेष —श्रोणी पूर्व पश्चादंस ।

Karavinda (Sutra 11)

ननु चतुरस्रस्येति कथं लभ्यते ? तत्करणीभूतपार्श्वमानादि दर्शनात् । समस्येति कथं ? कुरुत इति द्विवचननिर्देशात् अक्षयारज्जु-रित्येकवचननिर्देशाच्च । कुरुत इति द्विवचननिर्देशे कृते सति एकप्रकारा

1 कृत्वापि । 2 पाश । पूर्वस्मात्पाशमुन्मु ।

पार्श्वमानी तिर्यङ्मानी चेति गम्यते । तयाक्ष्णयारज्जुरित्येकवचननिदशात् सा[1] चाप्येकप्रकारेति ज्ञायते । विषमोऽपि दीर्घचतुरस्रो विद्यत एव । यस्याक्ष्णयारज्जू अन्योन्य समे भवतः स निवर्त्यते । समस्येति लभ्यते । पृथग्ग्रहण किमर्थं ? पार्श्वमानीतिर्यङ्मान्योः संसर्गनिवृत्त्यर्थम् । भूतग्रहण पृथग्ग्रहणस्य समर्गविशेषणत्वनिवृत्त्यर्थम् । दीर्घचतुरस्रस्याक्ष्णयारज्जुरितकरोतीत्युक्त समस्य सा कियत्करोतीत्यत आह—

समस्य चतुरस्रस्याक्ष्णयारज्जुर्द्विस्तावती—द्विगुणा । यस्या भूमेरियमक्ष्णयारज्ज तावद्द्विगुणा भूमि करोति । द्विगुणाया भूमे करणीभवतीत्यर्थ । द्विस्तावतीति मयूरव्यसकादिलक्षणस्समास । नन्वक्ष्णयारज्जुरित्येकवचननिर्देशात् समचतुरस्रा 'अनुपपदत्वाच्छब्दस्येति' न्यायाच्च द्वितीयापि तादृश्येवेति विज्ञायते । तेन समस्यैव न विषमस्येति गम्यते । अत किमर्थं समशब्दः[2] ? । उच्यते—एव तर्हि मिश्रणार्थस्समशब्द[3] । समस्य—मिश्रीकृत्य एकीकृत्येत्यर्थ[4] । समचतुरस्रस्याक्ष्णयारज्जु द्विस्तावतीं भूमि युगपदेव एकीकृत्य करोतीति । उत्तरार्थो वा सम[5] शब्द । ननु पूर्वसूत्र एव दीर्घशब्दमपहाय चतुरस्रस्येत्यस्तु तेनास्यापि सिद्धिर्भवत्येव, सत्य—तथाप्युक्तन्यायेन समस्यैव तत्स्यान्न दीर्घस्य, तस्मात् पृथगेवमेव वक्तव्यम् । प्रकृतोपजीवनेन सज्ञा विधातुमाह—

Karavinda (Sutra 12 14)

समस्य चतुरस्रस्याक्ष्णयारज्जु सा द्विकरणीसज्ञा भवति । अन्वर्थेयं सज्ञा, द्वयो करणी द्विकरणीति । ननु पूर्वसूत्रेणैव द्विकरणीत्वे सिद्धे प्रयुक्ता सज्ञा सत्य, द्विकरणीत्व सिद्ध तथापि दीर्घत्रिकोणादीनामपि द्विकरण्यस्सन्ति, तत्र द्विकरणीत्युक्ते अस्या एव ग्रहण यथा स्यादित्येवमर्थं सज्ञा । ननु सा द्विकरणीत्येव वक्तव्य, समग्रहण किमर्थं ? वक्ष्यमाणापि सज्ञा समद्विकरणीविषया यथा स्यादिति । समग्रहणस्य पूर्वसूत्रविषयत्वे अत्र सामर्थ्यात्तत्सिद्धि । द्विकरण्या एव प्रकारान्तरमाह—

समचतुरस्रस्य प्रमाणमायाम तत्तृनीयेन[6] वर्धयेद्वृद्धि गमयेत्, तच्च तृतीय स्वचतुर्थेन तृतीयस्य चतुर्थभागेनेत्यर्थं[7] । आत्मचतुस्त्रिशोनेन आत्मशब्देन[8]

---

1 सर्वा ।
2 समस्य ।
3 समस्य ।
4 एकीकृत्येति यावत् ।
5 समस्य ।
6 स्वतृतीयेन ।
7 चतुर्भागेनेत्यर्थ ।
8 चतुर्थस्यात्मा ।

चतुर्थो भागः परामृश्यते । वर्धयेदित्येव, स विशेषः—तस्य विशेष इति संज्ञा। तृतीयादिना येन वृद्धं प्रमाणं तस्य विशेषसंज्ञा। यथा—द्वादशाङ्गुलं प्रमाणं चतुरङ्गुलेन वर्धयेत्, तच्चतुरङ्गुलमेकाङ्गुलेन तिलोनेन वर्धयेत् । चतुर्विंशतितिलाः पृथुसश्लिष्टा अङ्गुलिरिति प्रमाणविदो मन्यन्ते । वक्ष्यति, 'अर्धं तद्विशेषमभ्यस्य बाह्यविशेषाभ्यां परिगृह्णीयात्' इत्यादि[1]। कथं, मध्यमे सविशेषं प्रतिमुच्य चतुर्थेन चतुर्थसविशेषेणेत्येवमादि। अत्र सह विशेषेण वर्तत इति सविशेषः । विशेषसहितं प्रमाणमेव सविशेष इत्यवगन्तव्यम् । किमर्थं महती संज्ञा. अन्वर्थेषा यथा स्यादिति, तत्कथं विपूर्वः शिषिरतिशयवाची, 'शिषिरसर्वोपापाने, विपूर्वोऽतिशये' इत्युपदेशात् । अक्ष्णयारज्जुभूतद्विकरण्याः प्रमाणानिरिक्तादंशात् किञ्चिद्विशिष्यते अतिरिच्यत इति विशेषः । यद्वा ततः किंचित् क्षत्रं विशेषयति अतिरेचयति मानकाल इति वा विशेषः । तथाहि—चतुस्त्रिंशत्तिला अङ्गुलिरित्युक्तम् । द्वादशाङ्गुलस्य तिलवर्गः—एकं नियुतं षडयुतानि षट्सहस्राणि चत्वारि शतानि षष्टिश्चत्वारि च तिलप्रमाणानि चतुरस्रक्षेत्रप्रमाणानि । तिलोनसप्तदशाङ्गुलस्य तिलवर्गः—त्रीणि नियुतानि त्रीण्ययुतानि द्वे सहस्रे नव शतानि विंशतिर्नव च तिलप्रमाणानि चतुरस्रक्षेत्राणि । अत्रैकं तिलं चतुरस्रक्षेत्रद्विगुणादतिरिच्यते । ततस्तस्य विशेष इति संज्ञा । वेणुना सविशेषेण मीयमानेऽग्नौ प्रमीयमाने स्वात्मनि यत् क्षेत्रमतिरिच्यते तेन नीवारशूकमात्रमपि सर्वथातिरिक्तं न भवति तन्नयूने ततोऽल्पतरमिति द्विकरणीकार्ये सविशेषव्यवहारः । *इदानीं प्रासङ्गिकमेकं विहरणं व्याख्याय विहरणान्तरमाह*—

**Karavinda (Sūtra 15 to 21)**

अथापरं विहरणं—व्याख्यास्याम इति शेषः, प्रमाणमात्री प्रयाममात्री रज्जुं उभयतः पाशा आद्यन्तयोः पाशयुक्ता, मध्ये लक्षणं निरञ्जनार्थं, अर्धमध्ययो. पूर्वार्धमध्ये अपरार्धमध्ये च लक्षणद्वयं निरञ्जनं[2] कृत्वा पृष्ठ्यायां मातव्यभूतलमध्यलेखायां रज्जुमायम्य—प्रसार्य पाशयोर्लक्षणेष्विति पञ्च शङ्कून्निहन्ति इतिशब्दश्चार्थे । उपान्त्ययोः अन्त्यसमीपस्थितयोः शङ्क्वोः पाशौ प्रतिमुच्य मध्येन निरञ्जनभूतेन दक्षिणापायम्य, निमित्तं—चिह्नं करोति । *निमित्तं चिह्नदर्शनार्थम्* । मध्यमे शङ्कौ पाशौ प्रतिमुच्य, उपर्युपरि निमित्तं तस्योपरिष्टादासन्नतरं दक्षिणापायम्य. रज्जुं तदन्ते शङ्कुं निखाय, मध्यमाच्छङ्कोः पाशावुन्मुच्य, दक्षिणशङ्कावेकं पाशं प्रतिमुच्य,

---

1 परिगृह्णीयादित्येवमादीनि

2. चिह्नं

पूर्वस्मिन्[1] शङ्कावितरं पाशं प्रतिमुच्य, निरञ्जनेन दक्षिणमंसं प्रत्यायच्छेत्। रज्जुं यथा दक्षिणांसस्संपद्यते तथाऽऽयच्छेत् । एवमेव दक्षिणां श्रोणिमायच्छ्रेदित्येवमादीनि उन्मुच्य, पूर्वस्मादित्यादीन्युत्तराणि सूत्राणि । पञ्चशङ्कुरयं योगस्समचतुरस्रविषयः ॥

**Sundararaja (Sutra 11)**

चतुरस्रस्येत्यविशेषात् समस्येत्यत्रापि संबध्यते।[2] अथवा उत्तरसूत्रगतं समस्येति पदमत्रापि सबध्यते।

**Sundararaja (Sutra 12)**

अनन्तरोक्ता समस्य चतुरस्रस्याक्षणयारज्जुः द्विकरणी संज्ञिका । तावद्द्वयोः क्षेत्रयोः करणात्। तस्य ज्ञानोपायमाह—

**Sundararaja (Sutra 13)**

यथा—द्वादशाङ्गुलस्य प्रमाणस्य तृतीयं चतुरङ्गुलं, तस्य चतुर्थमङ्गुलिः अङ्गुलेश्चतुरिन्त्रशो भागास्तिलमात्रम् । एव द्वादशाङ्गुलस्याक्षणयारज्जुस्तिलोनसप्तदशाङ्गुला । तथा अष्टाचत्वारिंशदङ्गुलस्याक्षणयारज्जुः चतुस्तिलोना अष्टषष्टयङ्गुलेत्यादि ।

**Sundararaja (Sutra 14)**

योऽक्षणयारज्ज्वाः प्रमाणादतिरिक्तोंऽशः स विशेषसंज्ञः । 'अर्धे तद्विशेषमभ्यस्य' इत्याद्युदाहरणम् ॥

**Sundararaja (Surta 15 to 21)**

अर्धयोर्मध्ये अर्धमध्ये । उपान्त्ययोः—द्वितीयचतुर्थयोश्शङ्क्वोः । निमित्त—चिह्नम् । स्पष्टमन्यत् । एप योगस्समचतुरस्रविषयः । एवमुत्तरतः ॥

इति प्रथमः खण्डः

1. पञ्चानां ।
2. समस्येति चात्रापि संबध्यते समस्यद्विकरणी ।

# अथ द्वितीयः खण्डः

अथापरो योगः ॥ (1)

Kapardi (Sutra 1)

विहरणविशेषः इत्यर्थः ॥

पृष्ठ्यान्तयोर्मध्ये च शङ्कुं निहत्यार्धेऽर्धे तद्विशेषमभ्यस्य लक्षणं कृत्वार्धमागमयेत् ॥ (2)

अन्त्ययोः पाशौ कृत्वा मध्यमे सविशेषं प्रतिमुच्य पूर्वस्मिन्नितर लक्षणेन दक्षिणमंसमायच्छेत् ॥ (3)

उन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य लक्षणेनैव दक्षिणां श्रोणिमायच्छेत् ॥ (4)

एवमुत्तरौ श्रोण्यंसौ ॥ (5)

Kapardi (Sutra 2 to 5 )

चतुरस्रप्रमाणान्तयोश्शङ्कुं निहत्य तयोर्मध्ये च शङ्कुं निहत्य अर्धे-प्रमाणार्धे, तद्विशेषं, तस्यार्धस्य विशेषं, प्रमाण[1] तृतीयेन वर्धयेदिति न्यायेन लक्षणं कृत्वा पुनरागमयेत्[2] प्रक्षिपेत् । अन्त्ययोः पाशौ कृत्वा मध्यमे शङ्कौ सविशेष पाशं प्रतिमुच्य[3] पूर्वस्मिन् शङ्कौ इतरं पाश प्रतिमुच्य लक्षणेन दक्षिणेनापासार्य शङ्कुं निहन्यात् । स दक्षिणांसः । पूर्वस्माच्छङ्कोः पाशमपरस्मिन् शङ्कौ प्रतिमुच्य तेनैव लक्षणेन दक्षिणा श्रोणिमायच्छेत् । तेनैवोदगपसार्य उत्तरा श्रोणिं विपर्यस्योत्तरमसम्[4] ॥

योगद्वयमिदं समचतुरस्रस्य सम्यक् ॥

Karavinda (Sutra 1 to 5)

प्रमाणमात्री रज्जुमित्येव, विहरणोपायो[5] योग इत्युक्तं, पृष्ठ्यान्तयोः मध्ये च शङ्कुं निहत्य । व्याख्यानमेतत् । अर्धे[6] प्रमाणमात्रया रज्ज्वा अर्धे

1. तस्याप्यविशेष प्रमाणं ।
2. पुनरर्धमागमयेत् ।
3. प्रतिमुच्य मध्यमलक्षणेन ।
4. तेनैवोदगपसार्य उत्तरा श्रोणिमायच्छेत्।
5. विहरणपर्यायो ।
6. अर्धे तद्विशेषमभ्यस्य ।

तद्विशेषमभ्यस्य संयोज्य लक्षणं कृत्वा सूत्रसविशेषार्धान्ते अर्धं आगमयेत् शिष्ट यथा प्रमाण भवति तथाऽऽगमयेत् अयमर्थः—अर्धद्विकरणीमात्री केवलार्धमात्री च एका रज्जु' मीत्वार्धद्विकरणीमात्रे[1] लक्षण कृत्वा रज्जवन्तौ पाशौ कृत्वा मध्यमे शङ्कौ सविशेषमर्धं प्रतिमुच्य पूर्वस्मिन् शङ्कौ केवलमर्धं प्रतिमुच्य लक्षणेन दक्षिणमसमायच्छेत्–कुर्यात् । उन्मुच्य पूर्वस्मादिति स्पष्टार्थः । अयमपि योगस्समचतुरस्रविषय एव । अर्धे तद्विशेषमिति प्रमाणसविशेषयोः प्रस्तुतत्वात् प्रसङ्गेनोच्यते ।

**Sundararaja (Sūtra 1 to 5)**

अर्धे—प्रमाणार्धमात्रे[2] शुल्वे । तद्विशेषं—अर्धस्यैव विशेष अभ्यस्य तद्विशेषान्ते लक्षण कृत्वा अन्यदर्धं निर्विशेषमागमयेत्[3] । यथा—गार्हपत्यचितेः षण्णवत्यङ्गुलाया अन्तयोर्मध्ये[4] च शङ्कून्निहत्य अर्धेऽष्टाचत्वारिंशदङ्गुले तद्विशेष चतुस्तिलोन विंशत्यङ्गुलमभ्यस्य लक्षण कृत्वान्यदर्धं अष्टाचत्वारिंशदङ्गुल सयोजयेत् । एव चतुस्तिलोनषोडशकोत्तरशताङ्गुल शुल्वम् । अन्तयोरित्यादि[5] स्पष्टम् ।

प्रमाणं तिर्यग्द्विकरण्यायामः ॥ (6)

तस्याक्ष्णयारज्जुस्त्रिकरणी ॥ (7)

**Kapardi (Sūtra 6 and 7)**

प्रमाण—प्रक्रमादेस्तिर्यङ्मानी । द्विकरणी—पार्श्वमानी तस्यैव प्रक्रमादेः । तस्यैवभूतस्य दीर्घचतुरस्रस्याक्ष्णयारज्जुस्त्रिकरणी—त्रिगुणां भूमि करोति तस्य तिर्यङ्मानीभूतस्य । कथ ? प्रमाणमेकं करोति पार्श्वमानी द्विकरणी सा द्वौ करोति । तदुभयमक्ष्णयारज्जुः करोति । तदुक्तं—

दीर्घस्याक्ष्णयारज्जु[6] । इति—

तृतीयकरण्येतेन व्याख्याता ॥ (8)

विभागस्तु नवधा ॥ (9)

**Kapardi (Sūtra 8 and 9)**

एतेनैव मार्गेण तृतीयकरणी व्याख्याता । अनयैव त्रिकरण्या तृतीय-

---

1 मात्र ।
2. अर्धप्रमाणमात्रे ।
3 अन्यदर्निर्विशेष ।
4. अन्तयोर्मध्ये ।
5 अन्तयोरित्यादि ।
6. रज्जु करोति ।

करण्यप्यवगन्तुं शक्येत्यर्थः। कथमित्याह—त्रिकरणीक्षेत्रं नवधा विभज्य एकं भागं गृह्णीयात्। प्रमाणतृतीयं भवति। त्रिकरण्याः तृतीयं करोति। तत्र श्लोकः—

अक्ष्णयारज्जुस्त्रिकृत्प्रोक्ता प्रमाणसविशेषयोः।
अस्या एव तृतीयं तु तृतीयकरणीं विदुः॥

**Karavinda (Sutra 6 amd 7)**

प्रमाणद्विकरण्यक्ष्णयारज्जव उक्ताः। यस्य चतुरस्रस्य प्रमाणं तिर्यङ्मानी द्विकरणी पार्श्वमानी तस्य चतुरस्रस्याक्ष्णयारज्जुः प्रमाणपार्श्वमानो तिर्यङ्मानी क्षेत्रस्य त्रिकरणीभवति॥

**Karavinda (Sutra 8)**

त्रिकरणीव्याख्याने तृतीयकरण्यपि व्याख्याता। कथ? तृतीय तिर्यग्द्विकरण्यायाम, तस्याक्ष्णयारज्जुस्तृतीय करणी।

**Karavinda (Sutra 1)**

तृतीयकरण्यवगमायाह। तृतीयकरण्यवगमे इयान्तु विशेषः। क्षेत्रस्य नवधा विभागः कार्यः, कस्य क्षेत्रस्य? प्रमाणक्षेत्रस्य त्रिकरणक्षेत्रस्य वा। अयमर्थः—यस्य क्षेत्रस्य तृतीयकरणी साध्यते तत् क्षेत्र नवधा विभज्य तत्रैकस्य भागस्य पार्श्वमानी तियङ्मानी कृत्वा तस्यैव भागस्याक्ष्णयारज्जु पार्श्वमानी कृत्वा ताभ्या चतुरस्रे कृते तस्याक्ष्णयारज्जुमादाय तया चतुरस्रे कृते तत्क्षेत्रप्रमाण पार्श्वमानीतिर्यङ्मानीकृतक्षेत्रस्य तृतीय भवति। यद्वा त्रिकरण्या कृते चतुरस्रे नवधा विभक्ते तत्रैकस्य भागस्य करणीप्रमाणचतुरस्रक्षेत्रस्य तृतीयकरणी भवति। स च विभागः प्रमाणक्षेत्रतृतीयमिति प्रदर्शनम्। एतेन चतुष्करणीचतुर्थकरणीप्रभृतीनामपि। तथाहि—प्रमाण तियक् त्रिकरण्यायामस्तस्याक्ष्णयारज्जुश्चतुष्करणी। तथा प्रमाण तिर्यक् चतुष्करण्यायामस्तस्य क्ष्णयारज्जु पञ्चकरणी। तथा प्रमाण तिर्यक्पञ्चकरण्यायामस्तस्याक्ष्णयारज्जुः षट्करणीत्यादि द्रष्टव्यम्। तथाहि—द्विकरणी तिर्यङ्मानी त्रिकरण्यायाम तस्याक्ष्णयारज्जु पञ्चकरणी। तिर्यङ्मानी दशकरण्यायामस्तस्याक्ष्णयारज्जुः पञ्चदशकरणीत्याद्यपि द्रष्टव्यम्। तथा तुरीय तिर्यक् त्रिकरण्यायामस्तस्याक्ष्णयारज्जुस्तुरीयकरणी। तथा पञ्चम तिर्यक्चतुष्करण्यायामस्तस्याक्ष्णयारज्जु पञ्चमकरणीत्यादि द्रष्टव्यम्। त्रिकरणीतृतीयकरण्योस्सौत्रामण्यादावुपयोग। ननु दीर्घस्याक्ष्णयारज्जुरित्यनेन त्रिकरणीतृतीयकरणीप्रभृतय. सिद्धा.। तत्किमर्थं त्रिकरण्यादिकरणीविधिरारम्यते। उच्यते—

करणी पार्श्वमानी, तथा दीर्घचतुरस्रमुल्लिखेत् । वृद्धस्याक्ष्णयारज्जुरुभे समस्यति । उक्तं—दीर्घचतुरस्रस्याक्ष्णयारज्जुरिति ।

**Karavinda** (Sutra 10)

तुल्ययोरिति । समासो नाम समसनं मिश्रणं एकीकरण करणी-तुल्यप्रमाणयोस्समासः । करण्युक्ता चतुरस्रस्याक्ष्णयारज्जुर्द्विस्तावती भूमिं करोति समस्येति । उक्तमनुभाषणं वक्ष्यमाणार्थं, इदमत्र परिशिष्यते, तदिदं वक्ष्यामीति ।

**Karavinda** (Sutra 11, 12, 13 and 14)

नानाप्रमाणयोर्भिन्नप्रमाणयोस्समासः करण्युच्यते, ह्रसीयसः अल्पीयसश्चतुरस्रस्य करण्या—करणीप्रमाणेन, वर्षीयसः—महतश्चतुरस्रस्य, वृद्धं—चिह्नमेव देशमुल्लिखेत् वृद्धस्याक्ष्णयारज्जुरुभे नानाप्रमाणे चतुरस्रे समस्यति एकीकरोति । एतदुक्तं भवति—नानाप्रमाणे चतुरस्रे समस्य अल्पीयसश्चतुरस्रस्य करणीप्रमाणेन महतश्चतुरस्रस्य एकस्यां तिर्यङ्मान्या परिच्छिन्द्यात् । तत आरभ्योर्ध्वां लेखा यथा परस्यां तिर्यङ्मान्यां तावति प्रदेशे निपतति तथा लिखेत् । लेखाविभक्तस्याल्पीयसः करणीप्रमाणं तिर्यङ्मानी । कस्य ? महतः करणीप्रमाणपार्श्वमानीकस्य दीर्घचतुरस्रस्याक्ष्णयारज्जुरुभे नानाप्रमाणे चतुरस्रे समस्यति । चतुरस्र इति वर्तमाने पुनश्चतुरस्रग्रहणं मण्डलयोरपि चतुरस्रं कृत्वैव समासस्सुकर इति ज्ञापयितुं । तदुक्तं-दीर्घस्येत्यादिना । अस्योपयोगो विद्याभ्यासादिषु ।

**Sundararaja** (Sutra 10)

द्विकरण्या यथा द्विपुरुषेऽग्नौ पुरुषद्विकरण्या द्वयोः पुरुषयोस्समास इत्यादि । त्रिकरण्या त्रयाणा पुरुषाणां समासस्याप्येतदुपलक्षणं भवति । दीर्घचतुरस्रयोस्तु[1] समासे अय विशेषः । तियङ्मान्या द्विकरणी तिर्यङ्मानी, पार्श्वमान्याश्च द्विकरणी पार्श्वमानीति[2] । यथा द्विस्तावायामास्वमेधवेद्या षट्त्रिंशिकायाः पृष्ठ्याया द्विकरणी पृष्ठ्या । तिर्यङ्मान्योस्त्रिंशिकाचतुर्विंशिकयोः द्विकरण्यौ तिर्यङ्मान्यौ । एतदेव तत्र प्रकारान्तरेण वक्ष्यते । प्रक्रमस्य द्विकरणी प्रक्रमस्थानीया भवतीति । एवं दीर्घचतुरस्राणां[3] समासे तिर्यङ्मान्यास्त्रिकरणी तियङ्मानीति । पार्श्वमान्याश्च पार्श्वमानी । यथा—त्रिस्तावेऽग्नौ पक्षयो पुरुषमात्र्याः तिर्यङ्मान्यास्त्रिकरणी अष्टाधिकशतद्वयाङ्गुला पञ्चतिलोना तिर्यङ्मानी भवति ।

---

1. दीर्घचतुरश्रयो ।

2 पार्श्वमानी ।

3 एवं त्रयाः दीर्घ-चतुरश्राणा ।

पार्श्वमान्याश्च षडरत्ने त्रिकरणी पञ्चाशद्द्विशताङ्गुला विंशतितिलोना पार्श्वमानी भवति । पुच्छस्य पार्श्वमान्या एकादशप्रादेशाया त्रिकरणी अष्टाविंशतिद्विशताङ्गुला सैकविंशतितिला पार्श्वमानी । एवमन्यत्र ।

Sundararaja (Sutra 11)

उच्यत इति शेष ॥

Sundararaja (Sutra 12 13 and 14)

ह्रसीयस करणी तिर्यङ्मानी कृत्वा वर्षीयसस्तवन्निन वृध्र दीर्घचतुरस्रमुल्लिखेत्[1], वर्षीयस करण्येव पार्श्वमानी । एव कृतस्य दीर्घचतुरस्रस्याक्ष्णयारज्जुस्समस्तयो करणी भवति । तदुक्त 'दीर्घस्याक्ष्णयारज्जु' इत्यादिना । यथा पञ्चविधेऽग्नौ क्रियमाणे द्विपुरुषण चतुरस्र धृते चतुष्पुरुषो भवति । तत्र पुरुषमात्रश्चतुरस्र प्रक्षप्तव्य । तत्र द्विपुरुषकरणिके चतुरस्रे तादायाम पुरुषव्यास[2] दीर्घचतुरस्रमुल्लिखेत् । तस्याक्ष्णयारज्जुरष्टषष्टिशताङ्गुला[3] सैकादशतिला, सा पञ्चविधाग्ने करणी भवति ।

चतुरस्राच्चतुरस्र निर्जिहीर्षन् यावन्निर्जिहीर्षेत्तस्य करण्या वृद्ध्रमुल्लिखेत् ॥ (15)

Kapardi (Sutra 15)

पूर्वस्माच्चतुरस्राच्चतुरस्र निर्जिहीर्षन् चतुरस्रप्रमाणेन वृध्रमुल्लिखेत् ।

वृद्ध्रस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसंहरेत् ॥ (16)

Kapardi (Sutra 16)

सयोजयेत् ।

सा यत्र निपतेत्तदपच्छिन्द्यात् ॥ (17)

Kapardi (Sutra 17)

सा पार्श्वमानी इतरस्मिन् पार्श्वे यत्र निपतति स्पृशति तत्रापच्छिन्द्यात् ॥

छिन्नया निरस्तम् ॥ (18)

Kapardi (Sutra 18)

छिन्नया निरस्तोऽस्ते[4] तन्निरस्त भवति ।

**Karavinda** (Sutra 15, 16, 17, and 18)

चतुरस्रादिति । इदमपि करणीविधानमेव । महतश्चतुरस्रादल्पं चतुरस्रं निर्जिहीर्षन् विहर्तुमिच्छन् यावत् प्रमाणं चतुरस्रमपनेतुमिच्छति तस्याल्पस्य करण्या महतश्चतुरस्रस्यैकदेशं यथा छिन्नं भवति तथोल्लिखेत् । एवं कृते छिन्नं निरसितव्यक्षेत्रप्रमाणतिर्यङ्मानीकं महत्क्षेत्रपार्श्वमानीकं प्रमाणपार्श्वमानीकं दीर्घचतुरस्रं भवति । अस्य क्षेत्रस्य पार्श्वमानीमक्ष्णयेतरत् पार्श्वमुपसहरेत् गमयेत्, सा पार्श्वमान्यक्ष्णयोपसहृता यत्रेतरस्याः पार्श्वमान्याः प्रदेशे निपतति तदपच्छिन्द्यात्—पार्श्वमानीमपच्छिद्याधिकं त्यजेत्, छिन्नया निरस्तं—छिन्न पार्श्वमानीनिरसितव्यक्षेत्रस्य करणी भवति । तया पार्श्वमान्या चतुरस्रे कृते निरसितव्यक्षत्रं निरस्तं भवतीत्यर्थः ।

**Sundararaja** (Sutra 15, 16, 17 and 18)

निर्हारो—निरसनम् । यथा त्रिविधेऽग्नौ क्रियमाणे द्विपुरुषेण चतुरस्रे कृते चतुष्पुरुषो भवति । तत्रैकपुरुषत्यागार्थं पुरुषमात्रतिर्यङ्मान्या वृध्रमुल्लिख्य तस्योत्तरां पार्श्वमानीं दक्षिणां प्राचीमितरत्पार्श्वं गमयेत् । सा च तत्र द्विपुरुषप्रमाणायां चत्वारिंशच्छतद्वयाङ्गुलप्रमाणायां पञ्चतिलोने अष्टशतद्वये निपतति । ततः पुरस्तात् द्वात्रिंशदङ्गुल पञ्चतिलाश्चापच्छिन्द्यात्[1] । परिशिष्टया करण्या चतुरस्रे कृते पुरुषो निरस्तो भवति ।

उपसंहृताऽक्ष्णयारज्जुरसा[2]चतुष्करणी छिन्ना चेतरा च यत्पृथग्भूते कुरुतः तदुभय करोति ॥ (19)

**Kapardi** (Sutra 19)

यथा स्वयमेव[3] दर्शयति—उपसंहृता पूर्वं पार्श्वमानी । इदानीमक्ष्णयारज्जुश्चतुरस्रस्य सा चतुष्करणी द्विपुरुषात् छिन्ना[4] पार्श्वमानी इतरा तिर्यङ्मानी यत्पृथग्भूते कुरुतः तदुभयं द्विपुरुषाक्ष्णयारज्जुः करोति । कथमित्याह—

तिर्यङ्मानी पुरुषं शेषस्त्रीन् ॥ (20)

**Kapardi** (Sutra 20)

तिर्यङ्मानी पुरुषं करोति । शेषस्त्वक्ष्णयारज्जुर्द्वौ । तदुभयं तस्या-

1. पञ्चतिलाधिक चापच्छिन्द्यात् ।
2. रज्जुः करोति सा चतुष्करणी ।
3. तया स्वयमेव, यथास्वमेव ।
4. चतुष्करणी छिन्ना ।

क्ष्णयारज्जुरिति त्रीन्करोति ॥

तदुक्तम् ॥ (21)

**Kapardi (Sutra 21)**

तत्राप्युक्तम् ॥

**Karavinda (Sutra 19, 20 and 21)**

इम प्रकारमुदाहरणमुखेन स्पष्टीकरिष्यन्नाह—

उपेति । सर्वतो द्विपुरुषप्रमाणं चतुष्पुरुषं चतुरस्रं विषयीकृत्योदाहरति । एकस्य चतुरस्रस्यावयवभूते दीर्घचतुरस्रे या पार्श्वमान्यक्ष्णयोपसहृता सा चतुष्करणी चतुष्पुरुषकरणीति प्रतिज्ञाता । अस्य तिर्यङ्मानी च पुरुषमात्रकरणीति । अस्य दीर्घचतुरस्रस्य छिन्ना पार्श्वमानी कियत्करणीति न ज्ञाता, सैवात्रावगन्तव्या । अत्र पुरुषप्रमाणा तिर्यङ्मान्या पृथग्भूतया यत्क्रियते छिन्नया पार्श्वमान्या पृथग्भूतया यत्क्रियते अक्ष्णयारज्जुः तदुभयक्षेत्रं करोतीति न्यायतोऽवगता । तत्राक्ष्णयारज्जुफलभूताच्चतुष्पुरुषाच्चतुरश्रादेकप्रमाणे तिर्यङ्मानीफले त्वेकस्मिन्नपनीते त्रयः पुरुषाः परिशिष्यन्ते । छिन्ना तु पार्श्वमानी तेषां करणीति पारिशेष्यात् सा त्रिपुरुषकरणीत्यवगन्तव्या । अत इदमुक्तं तिर्यङ्मानी पुरुषं करोति शेषं छिन्ना पार्श्वमानी । त्रीन् पुरुषान् इति पुंलिङ्गनिर्देशः पुरुषाभिप्रायः । पुरुषनिर्देशश्चाग्नौ पुरुषेण विमाने पुरुषाभ्यासापचयौ समासनिर्हारयो उदाहरणमिति । अयमर्थः—सर्वतो द्विप्रमाणाच्चतुष्पुरुषाच्चतुरस्रादेकं पुरुषमपनीय त्रिपुरुषं समचतुरस्रं कर्तुमिच्छन् तच्चतुरस्रं पुरुषप्रमाणया रज्ज्वा मध्ये परिच्छिद्य द्विधा कृत्वा तदर्धस्यैकां पार्श्वमानीमपरां पार्श्वमानीं प्रत्यक्ष्णयोपगमयित्वा तयोर्यत्र संपातः तत्रावस्थितां पार्श्वमानीं छित्वाऽवशिष्टं निरस्य शिष्टया पार्श्वमान्या समचतुरस्रे कृते तच्चतुरस्रं त्रिपुरुषचतुरस्रं भवति । तथा सर्वतश्चतुष्पुरुषाच्चतुरस्राच्चतुरः पुरुषानपनीय द्वादशपुरुषं समचतुरस्रं कर्तुमिच्छन् द्विपुरुषप्रमाणया तिर्यङ्मान्या समचतुरस्रं विभज्याधरयैकां पार्श्वमानीमन्यां प्रति गमयित्वा तयोः संनिपातेऽवस्थितां पार्श्वमानीमवच्छिद्य छेदं निरस्य शिष्टया पार्श्वमान्या चतुरस्रे कृते तत् क्षेत्रं द्वादशपुरुषसमचतुरस्रं भवति । छिन्नशिष्टा पार्श्वमानी द्वादशकरणी भवतीत्यर्थः । एवं प्रमाणक्षेत्रे तृतीयद्विकरणीमपनीय तृतीयकरणीं ग्रहीतुमिच्छन् तृतीये द्विकरण्या वृद्धमुल्लिखेदित्यादिकृते तृतीयकरणी भवति । एवमेव सर्वत्र चतुष्करणीचतुर्थ-

करणीप्रभृतयः करण्योऽवगन्तव्याः । तदुक्तं 'दीर्घस्याक्ष्णयारज्जुरित्यनेन । अस्योपयोगो द्रोणादिषु ।

Sundararaja (Sutra 19 20 and 21)

तदेवोदाहरति—

या अक्ष्णयोरसंहृता–एकीभूता रज्जुस्सा चतुष्करणी द्विपुरुषा-पच्छिन्ना पार्श्वमानी अनवच्छिन्ना पञ्चतिलोनाऽष्टशतद्वयाङ्गुला । इतरा–पुरुषमात्री[1] तिर्यङ्मानी च यत्पृथग्भूते[2] कुरुतस्तदुभयं करोति कर्णरज्जुत्वात् । तत्र तिर्यङ्मानी स्पष्टमेव हि पुरुषमात्रं करोति । पारिशेष्यात्पार्श्वमानी त्रीन् पुरुषान् करोतीति ज्ञातुं शक्यते । तदुक्तं 'दीर्घस्याक्ष्णयारज्जु.' इत्यादिना ।

दीर्घचतुरस्रं समचतुरस्रं चिकीर्षन् तिर्यङ् मान्याऽपच्छिद्य शेषं विभज्योभयत उपदध्यात् ॥ (22)

Kapardi (Sutra 22)

दीर्घचतुरस्रं समचतुरस्रं कर्तुमिच्छन् तिर्यङ्मान्या तिर्यङ्मानी-प्रमाणेनापच्छिद्य शेषं विभज्य—द्विधा कृत्वा तदुभयतः अग्रतः पार्श्वत-श्चोपदध्यात्—निक्षिपेत् ।

खण्डमागन्तुना संपूरयेत् ॥ (23)

Kapardi (Sutra 23)

खण्डमागन्तुना[3]ऽतिरिक्तेन पूरयेत् । पूरयित्वा तदतिरिक्तं त्यजेत् ।

तस्य निर्ह्रास उक्तः ॥ (24)

Kapardi (Sutra 24)

तस्य त्यागविधिरुक्तः ।

Karavinda (Sutra 22, 23 and 24)

दीर्घेति—सर्वतस्तुल्यप्रमाणं समचतुरस्रं एकत आयामतोऽधिकं दीर्घचतुरस्रं समचतुरस्रं कुर्वन् तिर्यङ्मान्या तिर्यङ्मानीप्रमाणया रज्ज्वा परिमिते प्रदेशे मध्ये दक्षिणोत्तरमपच्छिद्य शेषं पूर्वभागं मध्ये तिर्यक्

1. पार्श्वमानी इतरा पुरुषमात्री । 2. यत् क्षेत्रं पृथग्भूते ।
3. तागयामागन्तुना ।

द्विधा विभज्य तयोः पश्चिमं भागं तस्यैवापरस्याप्य पूर्वभागं प्रथमस्योत्तरतः प्राचीनमुपदध्यात् । उत्तरपूर्वभागं शून्यभूतं खण्डमागन्तुना संपूर्य समचतुरस्रं संपाद्य अधिकमागन्तुभूतं खण्डं ततो निर्हरेत्—निर्गमयेत् । तस्य निर्हार उक्तः 'चतुरश्राच्चतुरस्रं निर्जिहीर्षन्' इति । तस्योपयोगो रथचक्रादिषु ।

Sundararaja (Sutra 22, 23 and 24)

तिर्यङ्मानीप्रमाणेन पार्श्वमानीमपच्छिद्य[1] समचतुरस्रं कृत्वा शेषं विभज्य पुरस्तादुत्तरतश्चोपदध्यात्. यथोत्तरपूर्वकोणे समचतुरस्र[2] आगन्तुः खण्डो भविष्यति । तस्य निर्हार उक्तः 'चतुरश्राच्चतुरस्रम्' इति ॥

इति द्वितीयः खण्डः ।

1. पार्श्वमानीमितराच पुरुषमात्रीमपच्छिद्य । 2 समचतुरस्रः ।

# अथ तृतीयः खण्डः

समचतुरस्रं दीर्घचतुरस्रं चिकीर्षन् यावच्चिकीर्षेत् तावतीं पार्श्वमानीं कृत्वा यदधिकं स्यात्तद्यथायोगमुपदध्यात् ॥ (1)

**Kapradi (Sūtra 1)**

समचतुरस्रं दीर्घचतुरस्र कर्तुमिच्छन् यावता दीर्घभूतेन प्रयोजन तावत्पार्श्वमालिख्य यदधिकक्षेत्र तद्यथायोग यथा तत्क्षेत्र युज्यते तथा क्षिपेत् । चतुरस्रं विभज्य उभयत प्रउगे विनियोग , अवकीर्णपक्षो च ।

**Karavinda (Sūtra 1)**

समचतुरस्र द्विधा कृत्वा तस्यैकस्मिन् भागे भागान्तरस्योपर्युपरि निहिते दीर्घचतुरस्र भवतीति मन्वानस्तस्य प्रकारमाह—

समेति । तिर्यङ्मान्या अपच्छिद्य शेष विभजेदित्येव । समचतुरस्र दीर्घचतुरस्र कर्तुमिच्छन् समचतुरस्र त्रिभागद्विभागार्धादीनामन्यतमेनांशेन परिमिततिर्यक्प्रमाण दीर्घचतुरस्र कर्तुमिच्छति तावत्या तिर्यङ्मान्या समचतुरस्रमेकतोऽपच्छिद्य शेषस्य समचतुरस्रकरणीसमा पार्श्वमानी तावतीमुक्तया तिर्यङ्मान्या समचतुरस्र कृत्वा तत्र शेष विभज्य यदधिक स्यात्तद्यथायोगमुपदध्यात् । अधिकस्य यथा विभागे कृते विभागा एकैकशो वा सर्वा सहृत्य वा भागान्तरस्योपरि निधीयमानास्तद्विस्तार व्याप्यान्योन्यसघटितास्तददीर्घं सपादयन्ति तथा विभज्य सर्वं शेष भागान्तरस्योपरि निदध्यादिति । अयमर्थ —समचतुरस्र दीघचतुरस्र चिकीर्षन् क्रियमाणस्य चिकीर्षितविस्तारप्रमाणया तिर्यङ्मान्या समचतुरस्रमेकतोऽवच्छिद्य शिष्टस्य च पार्श्वमानी तावती कृत्वा तदधिमेकयाऽनेकया वा विभज्य ते सर्वे भागा दीर्घचतुरस्र यथा सपादयन्ति तथा सर्वशेषं भागान्तरस्योपर्युपरि निदध्यादिति । अत्राधिकृते शेषशब्दे कर्मवाचिन्यपि सन्निधेस्सामर्थ्याच्च तस्य षष्ठ्यर्थोऽपि प्रतीयते । तावतीमित्यादिशब्दस्य शेषसबन्धित्वे सामञ्जस्याद्यावच्चिकीर्षेदित्यपि दीर्घविस्तारविषयस्स्यात् । एक एव न्यायो दीर्घस्यापि दीर्घविधाववगन्तव्य ।

तत्र श्लोका —

चतुरस्रं समं द्वैधं कृत्वा भागान्तरोपरि ।
क्षिप्ते भागान्तरे दीर्घचतुरस्रं तु तद्भवेत् ।
करिष्यमाणदीर्घस्य विस्तारसमपार्श्वकम् ।
विभज्य शेषमधिकं यथायोगं हि तत्क्रिया ॥
तावती पार्श्वमान्याश्च शेषस्याऽन्जस्यभागतः ।
करिष्यमाणदीर्घस्य तिर्यग्यावच्चिकीर्षितम् ॥

**Sundararaja (Sutra 1)**

अयमत्र प्रकारः—यावदिच्छं पार्श्वमान्यौ प्राच्यौ वर्धयित्वा उत्तरपूर्वां कर्णरज्जुमायच्छेत्, सा दीर्घचतुरस्रमध्यस्थाया समचतुरस्रतिर्यङ्मान्यां यत्र निपतति तत[1] उत्तरं हित्वा दक्षिणाश निर्यङ्मानी कुर्यात्, तद्दीर्घचतुरस्रं भवति । दीर्घस्य दीर्घकरणेऽप्ययमेव प्रकारः ॥

**चतुरस्रं मण्डलं चिकीर्षन् मध्यात्कोट्यां निपातयेत् ॥ (2)**

**kapardi (Sutra 2)**

यच्चतुरस्रं मण्डलं कर्तुमिच्छेत् । रथचक्रचिदादौ विनियोगः । मध्यात्कोट्यां निपातयेत्–मध्यमे शङ्कौ पाशं प्रतिमुच्य कोट्यामायच्छेत् कर्णेनाऽऽयच्छेत् । अपसाय[2] तत्र लक्षणं कृत्वा—

**पार्श्वतः परिकृष्यातिशयतृतीयेन सहमण्डलं परिलिखेत् ॥ (3)**

**Kapardi (Sutra 3)**

तेनैव लक्षणेन पार्श्वतः आकर्षेत् । परिकृष्टं यावच्चतुरस्रमतीत्य शेते सोऽतिशयः । तस्यातिशयस्य तृतीयेन सह चतुरस्रार्धेन मण्डलं परिलिखेत्– सर्वतो लिखेत् ।

**सा नित्या मण्डलम् ॥ (4)**

**Kapardi (Sutra 4)**

साऽनित्या मण्डलं करोति । अनित्या स्थूला ॥

**यावद्धीयते तावदागन्तु[3]॥ (५)**

**Kaperdi (Sutra 5)**

स्रक्तिषु यावद्धीयते तावत्पार्श्वं न गच्छति । एतच्च वचनमासन्नतरत्वख्यापनार्थम् ।

---

1 तत्र, 2 अदधार्य 3 तावगदान्तुम्,

**Karavinda** (Sutra 2, 3, 4 and 5)

समचतुरस्रं मण्डलं चिकीर्षन् कर्तुमिच्छन् तस्य चतुरस्रस्याक्ष्णयारज्ज्वर्धप्रमाणात् किञ्चिदधिकामेकतः पाशां रज्जुं मीत्वा तत्पाश चतुरस्रस्य मध्यमे शङ्कौ प्रतिमुच्य तामक्ष्णयाकोट्यां निपात्य तत्र लक्षणं कृत्वा पार्श्वप्रदेशादतिरिक्तलक्षणयोरन्तराल त्रेधा विभज्य अन्ततो द्वौ भागावुत्सृज्य भागेनैकेनस हितायां चतुरस्रार्द्धप्रमाणया रज्ज्वा यथा भूमिमण्डल भवति तथा परितस्सवतो लिखेत् । एव कृते सा नित्या मण्डल–चतुरस्रक्षेत्रतुल्यक्षेत्र भवति । सा नित्या–सा भूमिर्नित्या, यावत् चतुरस्रे भूमिः मण्डलेऽपि सा भवतीत्यर्थः । तत्र हेतुमाह–यावद्धीयते तावदागन्तु–यावत्प्रमाण क्षेत्र हीयते हीयमानतया (इति)[1] दृश्यते चतुरस्रभक्तितः तावन्मण्डलस्य पार्श्वेष्वागन्तु दृश्यते, तस्मान्नित्येति । ननु विष्कम्भार्धेन परिणाहाधमभ्यस्य फलावगतिरित्यनेन न्यायेन भूमेः नात्यन्ततुल्यता, तत्कथ नित्येति ? उच्यते–यद्यप्यनित्या, तथाऽप्यन्येषामुपायान्तराणामतिस्थलत्वादस्य चोपायस्यासन्नत्वात् सम्यगुपायस्य बहुप्रयत्नसाध्यत्वेन असम्भवत्वाच्चैव वदत आचार्यस्यायमेवोपायस्साधुरित्यभिप्रायः । यावदिह हीयते तावदागन्तु इति तयोरल्पवैषम्यात्तावदेवेति । प्रवृत्तिरोचनार्थमनित्याऽपि नित्येत्युक्तेत्यशेषः । अथवा या रज्जुर्मण्डलं करोति सा रज्जुरिति रज्ज्वभिप्रायोऽपि तच्छब्दः ।

**Sundararaja** (Sutra 2, 3, 4 and 5)

चतुरस्रमध्ये शङ्कुं निहत्य तस्मिन् रज्जुं प्रतिमुच्य कोट्यामक्ष्णयां निपात्य चिह्नं कृत्वा पश्र्वे च परिकृष्य तस्मिन् चिह्नं कृत्वा चिह्नयोरन्तरालं त्रेधा कृत्वा एकभागसहितेन चतुरस्रार्धेन मण्डल परिलिखेत्सा रज्जुरनित्या मण्डल करोति यावद्धीयते कोटिषु तावत्प्रमाणं[2] पार्श्वेष्वागच्छति ॥

मण्डल चतुरस्रं चिकीर्षन् विष्कम्भं पञ्चदश भागान् कृत्वा द्वावुद्धरेत् ॥ (6)

त्रयोदशावशिष्यन्ते ॥ (7)

सानित्या चतुरस्रम् ॥ (8)

**Kapardi** (Sutra 6, 7 and 8)

मण्डलं चतुरस्रं कर्तुमिच्छन् मण्डलस्य विष्कम्भं व्यासं पञ्चदशधा[3] विभज्य द्वौ भागौ त्यजेत् । त्रयोदशभागाश्शिष्यन्ते । तैस्त्रयोदशभि-

1. इति शब्दोऽयमधिक इति भाति, 2. तावत्प्रायेण,
3. व्यास सम पञ्चदशधा

अर्धद्वाविंशतितिलसहिताष्टाविंशतिशतत्रयाङ्गुलकरणीतस्यानेमंडलीकृत-स्य विष्कम्भः चतुस्सप्ततिशतत्रयाङ्गुल उक्तः । तस्यैव मण्डलस्योक्तेन मार्गेण चतुरस्रीकरणे त्रीणि शतानि चतुर्विंशतिश्चाङ्गुलयोऽर्धपञ्च-माश्च तिलाः करणी भवतीति पूर्वोक्तायाः करण्यास्माष्टादशतिलाश्चत-स्रोऽङ्गुलयो[1] हीयन्ते। तस्मात्सूक्ष्ममिच्छता चतुरस्रस्य मण्डलकरणे सूत्रो-क्तादतिशयतृतीयभागसहिताद्विष्कम्भार्धादष्टादशशताशस्त्याज्यः। एवं कृते रथचक्रचितौ विष्कम्भः षट्तिलोनैकसप्ततिशतत्रयाङ्गुलो भवति। परिणा-हश्च पञ्चषष्टिशतसहस्राङ्गुल्यः। तस्य मण्डलस्य समपरिणाहस्येत्यादिना पूर्वोक्तेन आनीत[2] फलं लक्षमष्टौ सहस्राणि भवन्ति। मण्डलस्यापि चतुर-स्रकरणे सूत्रोक्ते विष्कम्भे स्वस्मात् त्रिगुणात् त्रयस्त्रिंशच्छताश युञ्जयात्। तत्र श्लोकाः–

चतुरस्रमण्डलकृतौ त्यक्तव्योऽष्टादशशतांशः ।
सूत्रोक्ताद्व्यासार्धाद्व्यासार्धं मण्डलस्यैतत् ॥ 1 ॥
चतुरस्रव्यासे वा त्रिंशशतांश[3] समभ्यस्य।
पुनरष्टम च युञ्जयाद्विष्कम्भो मण्डलस्यैषः ॥ 2 ॥
मण्डलचतुरस्रकृतौ विष्कम्भे सूत्रचोदिते युञ्जयात् ।
त्रिगुणात्स्वकात्त्रयस्त्रिंशत्मातिशयान्मण्डलस्यैतत्[4] ॥ 3 ॥
मण्डलविष्कम्भाद्द्वात्रिंशशतांशक[5] परित्यज्य ।
शिष्टान्नवम जह्याच्चतुरस्रस्यैष विष्कम्भः ॥ 4 ॥
एवं कृते हि वह्नावेकशतविधेऽपि वृत्तविष्कम्भे ।
स तिलद्वितयविशेषो न च भवति परस्परविरोधः ॥ 5 ॥

**प्रमाणेन प्रमाणं विधीयते ॥ (9)**

Kaperdi (Sutra 9)

चतुरस्रं प्रमीयते क्षेत्रमनेनेति प्रमाणं प्रक्रमादि। यत्र प्रमाणेनैव चोदना तत्र तेनैव चतुरस्रं विधीयत इति प्रत्येतव्यम्। पुरुष दक्षिणे पक्ष इत्यादिषु च सङ्ख्या विवक्षिता।

Karavinda (Sutra 9)

द्विकरणीप्रभृतयः करण्य उक्ताः तासां फलावगमायाह–

1. करण्यास्सार्धाश्चतस्रो ऽङ्गुलयो
2. पूर्वोक्तमानीत,
3. वा त्रिंशत् त्रिंशताश,
4. त्रिगुणाच्छतात् त्रयस्त्रिंशच्छतभागं स विष्कम्भः
5. वा त्रिंशत्त्रिंशताश

प्रमाणेनेति ।

यत्र प्रमाणेनैकेन विमान तत्र सर्वतस्तेनैकेन परिमित चतुरस्र फल भवति यथा 'पुरुष दक्षिणे पक्षे, इत्यादि,

Sundararaja (Sutra 9)

चतुरस्राणा फलक्षेत्रमाह—

प्रमाणमात्रेण दण्डेन प्रमाणमात्र क्षेत्र विधीयते–क्रियते ।

आदेशादन्यत्[1] ।। (10)

Kapardi (Sutra 10)

आदिशतीत्यादेशो विधि । विधेरन्यद्भवति–यत्र विधीयते तत्रान्यदपि भवति तेनैव प्रमाणेन गार्हपत्यचित्युपरवादिपु[2] ।

Karavinda (Sutra 10)

आदिशतीत्यादेश –उपदेश । तेनान्यच्चतुरस्रात् प्रागादिफलत्वमवगम्यते । अथवा आदिशतीत्यादेशो—गणितशास्त्रम् । ततो विषमादीनां फलमवगन्तव्यमिति । उक्त च तत्र सर्वेषा क्षेत्राणा प्रसार्य पार्श्वफल तदभ्यासे इति, अस्यार्थ — सर्वेषा विषमक्षेत्राणा पार्श्वे–पार्श्वमानीतिर्यङ्मान्यौ प्रसार्यसपाद्य । तदभ्यासे–तयोरन्यान्यगुणकाले फलमवगन्तव्यमिति । त्रिक द्विधा प्रच्छिद्यान्यतरच्छेदमन्यत्रोपदध्यात् । तत्र सा दीर्घा चतुरस्रा । 'तयायुक्ता सचक्षते' वक्ष्यमाणेन न्यायेन फलावगम , दीर्घचतुरस्रस्य पार्श्वमानीप्रमाणेन तिर्यङ्मानीप्रमाणमभ्यस्य फलावगम । वृत्तस्य परिणाहार्धेन विष्कम्भार्धमभ्यस्य फलावगम । शरार्धप्रमाणेन धनुरर्धमभ्यस्य धनुषः फलावगम इत्यादि गणितशास्त्रादवगन्तव्यमिति प्रकृतमनुसरामः ।।

Sundararaja (Sutra 10)

सर्वत्र चतुस्रमेव क्रियते तद्विधानादेव मण्डलादि ।

द्वाभ्यां चत्वारि ।। (11)

Kapardi (Sutra 11)

द्वाभ्यां प्रक्रमाभ्यां चतुरस्रे कृते चत्वारि पुरुषप्रमाणानि भवन्ति ।

1. चतुरश्रमादेशादन्यत्,
(Karavinda and Sundararaja)

2. त्युपरवादि

मण्डलानां चतुरस्रकरणमुक्तम् । चतुरस्राणां मण्डलकरणमिदं नोक्तं इयत्या रज्ज्वा इयत् क्षेत्र भवतीति । अत इदमुच्यते ।

त्रिभिर्नव ॥ (12)

**Kapardi (Sūtra 12)**

त्रिभि.[1] प्रक्रमैः चतुरस्रे कृते नव पुरुषक्षेत्राणि भवन्ति । तथा भूमावालिख्य द्रष्टव्यम् ।

**Karavinda (Sūtra 11 and 12)**

उपलब्धिः यत्र द्वाभ्यां द्विगुणप्रमाणेन विमान तत्र सर्वतो द्विप्रमाणे चतुरस्रे द्विप्रमाणपरिमितानि चत्वारि चतुरस्राणि फलं भवति । त्रिप्रमाणे चतुरस्रे त्रिप्रमाणपरिमितानि नव चतुरस्राणि फलम् ।

**Sundararāja (Sūtra 11)**

द्विप्रमाणेन दण्डेन चत्वारि प्रमाणक्षेत्राणि भवन्ति ।

**Sundararāja (Sūtra 12 )**

स्पष्टम् ।

यावत्प्रमाणा रज्जुस्तावतस्तावतो वर्गान् करोति ॥ (13)

**Kapardi (Sūtra 13)**

यावत्प्रमाणा—यावदायामा रज्जुः तावतो वर्गान्करोति—पङ्क्तीः करोति—यावत्सख्यायुक्तं प्रमाणं तावत्संख्यायुक्ताः पङ्क्तीः करोति । पञ्चमानां पञ्चसंख्यायुक्तान्वर्गान्करोति[2] । एव सर्वत्र योजनीयम् ।

तयोपलब्धिः ॥ (14)

**Kapardi (Sūtra 14)**

भूमावालिख्य प्रेक्षिते तथैवोपलभ्यते । द्वाभ्या कृते उभयतो लिखिते चत्वारि शृङ्गाणि भवन्ति, पञ्चभिः कृते पञ्चधा, उभयतो लिखिते पञ्चविंशतिशृङ्गाणि भवन्ति । एव सर्वत्र द्रष्टव्यम् ।

**Karavinda (Sūtra 13 and 14)**

यावन्ति प्रमाणानि यस्या रज्ज्वाः सा रज्जुस्तावतस्तावत. प्रमाण-

---

1 त्रिभिर्नव—(क) नवचतुरश्राणि भवन्ति । तथा
(ख) त्रिभिः कृते नव चतुरश्राणि भवन्ति । तथा

2. पञ्चप्रमाणान् पञ्चसख्यायुक्तान् करोति ।

संख्यायुक्तान् तावतः—तत्संख्यागुणितान्वर्गान् समचतुरस्रान् करोति । 'वर्गसमचतुरस्रः' इति गणितशास्त्रेषु व्यवहारः । तथा चतुष्प्रमाणा रज्जुश्चतुर्भिर्गुणिताश्चतुरो वर्गान् षोडश करोति । पञ्चप्रमाणा पञ्चभिर्गुणितान् पञ्च वर्गान् पञ्चविंशतिं, षट्प्रमाणा एकोनपञ्चाशत अष्टप्रमाणा चतुष्षष्टिं, नवप्रमाणा एकाशीतिं, दशप्रमाणा शतं, एकादशप्रमाणा एकविंशोत्तरशतं, द्वादशप्रमाणा चतुश्चत्वारिंशच्छतमित्यादि द्रष्टव्यम् । प्रमाणमाह—उपलब्धिस्तया—तथोपलभ्यते । उक्तेष्वर्थेषु प्रत्यक्षं प्रमाणमित्यर्थः । तथा द्विप्रमाणं चतुरस्रं द्विधाऽवच्छिद्य चत्वार्युपलभ्यन्ते । त्रिप्रमाणं त्रिधाऽवच्छिद्य नव, चतुष्प्रमाणं चतुर्धाऽवच्छिद्य षोडश, एवं पञ्चप्रमाणादिष्वपि । तथा दीर्घस्याक्ष्णयारज्जुरित्यादिषु तथातथोपलभ्यन्ते । द्वाभ्यामेकमभ्यस्य फले द्वे उपलभ्येते । त्रिभिर्द्वे अभ्यस्य षट् । चतुर्भिर्द्वे अभ्यस्याष्टौ । तथाहि—द्विप्रमाणपार्श्वमानीकमेकप्रमाणतिर्यङ्मानीयकं द्विधाऽवच्छिद्य द्वे उपलभ्येते । त्रिप्रमाणपार्श्वमानीकं त्रिप्रमाणतिर्यङ्मानीकं प्राग्द्विधोदक् त्रिधाऽवच्छिद्य षडुपलभ्यन्ते । एवमन्येष्वपि पार्श्वमानीप्रमाणसङ्ख्ययोदगवच्छेदः तिर्यङ्मानीप्रमाणसङ्ख्यया प्रागवच्छेद इति कृत्वा फलावगमः ।

Sundararaja (Sutra 13 and 14)

चतुर्भिष्षोडश पञ्चभिः पञ्चविंशतिरित्यादि । अत्र प्रमाणम्—

तथोपलब्धिः ।

अध्यर्धपुरुषा रज्जुर्द्वौ सपादौ करोति ॥ (15)

Kapardi (Sotar 15)

अधि—अपरार्धं यस्यास्सा अध्यर्धा, तया कृते चतुरस्रे सपादौ द्वौ करोति ($1\frac{1}{2}\times1\frac{1}{2}=\frac{9}{4}=2\frac{1}{4}$) एकस्य वर्गः एकः ($1^2=1$) तस्याग्रतः पार्श्वतश्च द्वावर्धौ । पूर्वेण सह द्वौ, अर्धेन यच्चतुरस्रं कृतं कोष्ठ्यां सपादम्[1] । तेन सह पादौ द्वौ[2] करोति । एवमेवोत्तरसूत्रं योजयितव्यम् ॥

अर्धतृतीयपुरुषा षट्सपादान्[3] ॥ (16)

अपादस्यान्तप्रवेशः ॥ (17)

Kapardi (Sutra 17)

सार्धत्रयो विधिः ($\frac{5}{2}\times\frac{5}{2}=6\frac{1}{4}$).

1. सपादः तेन ।
2. तेन सपादौ द्वौ ।
3. पुरुषान्सपादान् ।

यावता यावताऽधिकेन परिलिखति तत्पार्श्वयोरुपदधाति ।। (18)

यत्तु तेन चतुरस्रं क्रियते तत्कोट्याम् ।। (19)

अर्धप्रमाणेन पादप्रमाणं विधीयते ।। (20)

Kapardi (Sutra 18, 19 and 20)

यावता छेदेनाधिकेन परिलिखति तत्पार्श्वयोरग्रतश्चोपदधाति । यत्तेन चतुरस्रं क्रियते तत्कोट्या–एव विहितेन यच्चतुरस्रं कोट्या तेनैव सह सख्या बोद्धव्येति । मण्डलपूरणे[1] चैकैनैक भवति । अर्धं चार्धमिति कस्यचिद्भ्रान्तिस्स्यात् अतस्त प्रत्याह[2]—

प्रमाणस्यार्धप्रमाणेन पादप्रमाणं विधीयते । अस्यैव कारणमाह—

अर्धस्य द्वि प्रमाणायाः पादपूरणत्वात्[3] ।। (21)

तृतीयेन नवमी कला ।। (22)

Kapardi (Sutra 21 and 22)

अर्धस्य द्विप्रमाणा पुरुषमात्री[4] । पादानां पूरणं यतः[5] । तदुक्तं—'द्वाभ्यां चत्वारि' इति । तृतीयेन नवमी कला, प्रमाणतृतीयेन नवमी कला—नवमोऽश इत्यर्थः । तदप्युक्त—त्रिभिर्नवेति ।

Karavinda (Sutra 15, 16, 17, 18, 19, 20, 21 and 22)

इदानीं सच्छेदप्रमाणमुच्यते–अध्यर्धति ।

अध्यर्धपुरुषप्रमाणेनाध्यर्धपुरुषमभ्यस्य फल द्वौ सपादौ–पादसहितौ द्वौ पुरुषौ करोति । अर्धतृतीयपुरुषा षट् सपादान्, अर्धं तृतीयं येषा ते अर्धतृतीयाः, ते च प्रमाण यस्याः साऽर्धतृतीयपुरुषा सा येनाभ्यस्ताः फल सपादान् षट्पुरुषान् करोति । उपलब्धिरपि तथा अध्यर्धपुरुषचतुरस्रस्यार्धेन चैकेन चापच्छेदः प्राक्चोदक्च एकमेकेन द्वावर्धौ पादश्च, एवमन्यदपि उभयतः सच्छेदे सपादरज्जुमध्यर्धं षोडशाश करोति । चतुरस्रक्षेत्रविवृद्धौ वृद्धक्षेत्रपरिज्ञानप्रकारमाह—अन्तस्समीप प्रकरणं तदतीत्य वर्तत इत्यत्यन्तः अत्यन्तः प्रदेशः विधिर्यस्य सोऽत्यन्तप्रदेशः—सार्वत्रिक इत्यर्थः । समचतुरस्र-

---

1. मण्डलद्विकरणे—A.
2. अतस्तामपाकर्तुमाह ।
3. (क) अर्धस्य द्विप्रमाणादायामा पादपूरणत्वात् ।
   (ख) अर्धस्य द्विप्रमाणायामपादपूरणत्वात् ।
4. द्विप्रमाण पुरुषमात्र ।
5. तदानीयपादाना पूरण यतः ।

विषयोऽयम् । यावता—यावत्प्रमाणेन, यावताऽधिकेन—यावत्प्रमाणेनाधिकेन। एको यावच्छब्द. प्रमाणमात्रविषयः, अन्यो यावच्छब्द आगन्तुविषयः। यावता प्रमाणेन यावन्मात्राधिकेनेत्यर्थः। परिलिखति यच्चतुरस्रकरणार्थं परिलिखति तत्र तत् अधिकमागन्तुमूलचतुरस्रक्षेत्रं पार्श्वयोः प्राची चोदीची च क्षेत्रमुपदधाति—सयोजयति । यच्च तेनाधिकमात्रेण चतुरस्रं क्रियते तत्क्षेत्रं कोट्या सयोजयति। एतदुक्त भवति—सर्वत्र समचतुरस्रक्षेत्रविवृद्धौ विवृद्धस्य चतुरस्रस्य च दक्षिणपश्चिमभागे मूलप्रमाणकृतचतुरस्रं परिकल्प्य तस्य तस्य पूर्वोत्तरपार्श्वयोस्तत्पार्श्वमितपार्श्वमानीकं प्रमाणाधिकमात्रतिर्यङ्मानीकं क्षेत्रं परिकल्प्य यच्च तेनाधिकमात्रेण एकेनैक द्वाभ्यां चत्वारि त्रिभिर्नवेत्यादिफलकरणं चतुरस्रं क्रियते तत्क्षेत्रं प्रागुदक्कोट्या परिकल्पयेदिति। एव सर्वत्र समचतुरस्रस्य क्षेत्रवृद्धौ क्षेत्रस्य परिगणन कुर्यादित्यर्थः।

अर्धप्रमाणेन—प्रमाणार्धेन। पादप्रमाणं—पादोऽत्र चतुर्थो भागः, तत्प्रमाण विधीयते सपाद्यते प्रमाणार्धमितं क्षेत्र प्रमेयस्य चतुर्थभागो भवति। कुतः? अर्धस्य द्विप्रमाणायाः पादपूरणत्वात् अर्धस्य द्विप्रमाणकतया भूमेश्चतुर्भागः पूर्यते।

तृतीयेन नवमी कला—प्रमाणतृतीयेन क्षेत्रस्य नवमोऽशः पूर्यते। उपलब्धिस्तथा। एकप्रमाणाया भूमेरर्धेन प्राक्चोदक्चापच्छेदे कृतेऽर्धप्रमाणकृता भूमिरेकप्रमाणायाः पादो दृश्यते, तस्या एवं प्राक्चोदक्चापच्छेदे प्रमाणतृतीयमिता भूमिरेकप्रमाणाया नवमाशो दृश्यते। तथा चतुर्थेन षोडश कला, पञ्चमेन पञ्चविंशतिकला, षष्ठेन षट्त्रिंशोऽशः पूर्यते। एवमन्यान्यपि छेदफलानि द्रष्टव्यानि॥

Sundararaja (Sutra 15 and 16)

अथ सच्छेदाना फलमाह—

एवं अर्धचतुर्थपुरुषा द्वादश सपादान्, अर्धपञ्चमपुरुषा विंशति सपादानित्यादि। सपादपुरुषा अध्यर्धं षोडशभाग चेत्यादि द्रष्टव्यम्।

Sundararaja (Sutra 17, 18 and 19)

सार्वत्रिकोऽयं विधिः—इस्त्तं चतुरस्रं वर्धयितुमिच्छन् यावता प्रमाणेन वर्धयितुमिच्छति तत्पुरस्तादुत्तरतश्चोपदधाति। अधिकप्रमाणेन यच्चतुरस्रं क्रियते तदुत्तरपूर्वस्यां कोट्याम्। इदानीं सच्छेदानां फलमाह—

Sundararaja (Sutra 20, 21 and 22)

द्विप्रमाणाया रज्ज्वा: अर्धस्य प्रमाणमात्रस्य पादपूरणत्वात् । द्विप्रमाणाया रज्ज्वा: फल चत्वारि । तस्य पाद एकम्, तस्य पूरणत्वादित्यर्थ: ॥

कलाभागस्त्रिप्रमाणायास्तत्तृतीयस्य नवमपूरणत्वादिति गम्यमानत्वान्नोक्तम् । चतुर्थेन षोडश, पञ्चमेन पञ्चविंशतिरित्यादि द्रष्टव्यम् ॥

इति तृतीय: खण्ड:

इति प्रथम: पटल:

# द्वितीयः पटलः

## अथ चतुर्थः खण्डः

पूर्वमविशेषेण मानमुक्तम्, अस्येयानायाम इयान्विस्तर एव च विहर्तव्यमिति । विशेषविधानार्थमाह—

आग्न्याधेयिके विहारे गार्हपत्याहवनीययोरन्तराले विज्ञायते ॥ (1)

**Kapardi (Sūtra 1)**

गार्हपत्याहवनीययोरन्तरालं यथा स्यान्नाहवनीयदक्षिणाग्न्योः दक्षिणाग्निगार्हपत्ययोर्वा मा भूदित्येवमर्थं गार्हपत्याहवनीयग्रहणम् । विज्ञायते—श्रूयते । श्रुतिर्वक्ष्यमाणा ।

अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत ॥ (2)

एकादशसु राजन्यः ॥ (3)

द्वादशसु वैश्य ॥ (4)

चतुर्विंशत्यामपरिमिते[1] यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते ॥ (5)

**Kapardi (Sūtra 2 3, 4 and 5)**

प्रक्रमेण प्रमाणं वदयति । अष्टौ प्रक्रमानतीत्य गार्हपत्यादाहवनीयं प्रतिष्ठापयति । एवमेकादशसु राजन्यस्य । वैश्यस्य द्वादशसु । चतुर्विंशत्या वा परिमिते वा यावता चक्षुषा मन्यते । तस्मान्नातिदूरमाधेय. इति सर्वेषामविशेषेण श्रूयते । यावता वेति सर्वेषां विधिविकल्पेन । इयतान्तरालेन विहारसंपत्तिर्भवतीति मननम् । अतिदूरप्रतिषेधो व्यवायपरिहारार्थं । यद्यतिदूरमाधीयते तदा स्यादपो व्यवेयु ।

**Karavinda (Sūtra 1, 2 3, 4 and 5)**

उक्तास्त्यामान्यतो विहारा । इदानीं दर्शपूर्णमासादिषु विशेष-

1. मपरिमिते (वा) ।

विवक्षया प्रथमभूताग्नयाधेयविहारयागविधिरुच्यते। अग्नय आधीयन्तेऽस्मिन् कर्मणीति तदग्न्याधेय। तद्भव आग्नयाधेयिक। विह्रियन्तेऽस्मिन् अग्नय इति विहार, देवयजनेदश, तमधिकृत्य। गार्हपत्याहवनीययोरन्तराले—गार्हपत्याहवनीयशब्दाभ्या तत्तदायतने लक्षणा अन्तरालश्रुतिसामर्थ्यात्, अन्तराले अन्तराल प्रस्तुत्य विज्ञायते श्रूयते। सर्वत्र विज्ञायत इत्यस्यायमेवार्थ. गार्हपत्याहवनीयग्रहणात्, तयोरेवान्तराले। श्रुतिरेव पठ्यते—

अष्टासु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीतैकादशसु राजन्यो द्वादशसु वश्य: चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति ॥ सर्वेषामविशेषेण श्रूयते। प्रक्रम वक्ष्यति द्विपदस्त्रिपदो वेति। अष्टप्रक्रमादयोऽन्तरालविशेषणम्। अष्टासु प्रक्रमेष्वन्तराले इत्यादि। अपरिमितसख्याया तच्चतुर्विंशते परत. तदानन्तर्यात्, अपरिमित प्रमाणात् भूय, इति कात्यायन। यावता वा चक्षुषा मन्यते तावता प्रमाणेन चक्षुषा गृहीतेन मन्यते यथा इयाश्चतुर्विंशति प्रक्रम इति चक्षुषा मान। यद्यपि चतुर्विंशते परत एव पठ्यते तथाऽपि द्वादशसु विक्रमेष्वित्यारभ्य य द्वादशसु विक्रामेसु इत्यादितैत्तिरीयकश्रुत्यनुरोधादष्टप्रक्रमादीनामपि सर्वेषा ग्राह्य, तेन इयानष्टप्रक्रम इयानेकादश इयान्द्वादशप्रक्रम इति सभवति। तस्माच्चतुर्विंशतेरदूरमतिदूरेनाधेय। अनेनापरिमितवचनप्राप्ताऽतिदूरता निषिध्यते। चतुर्विंशतिविधानादेवेत प्रागतिदूरा योगा.। चतुर्विंशत्यादिविधिचतुष्टय सर्वेषा ब्राह्मणादीनामविशेषेण भवति। द्वादशसु विक्रमेष्वित्यपि सर्वेषामविशेषेण लभ्यते ॥

Sundararaja (Sutra 1, 2 3 and 4)

गार्हपत्यस्य पुरस्तादेतेषु प्रक्रमेष्वनीतेष्विति[1] विज्ञायते अथ सावर्णिकी[2] श्रुति।

Sundararaja (Sutra 5)

अपरिमित 'प्रमाणाद्भूय' इति कल्पान्तरम्। चक्षुषा म यन इति दण्डादिमानिषेध[3]। इयानष्टौ[4] प्रक्रमा, इयानेकादश इयान् द्वादशेति चक्षुषा यावन्त देश मन्यने तस्मान्नातिदूर तस्यावधेस्समीप आधेय। एतत्सव प्रयोगकाल एवोक्तमनूद्यते।

---

1 प्रक्रमेष्विति। 2 सावर्वर्णिकी।

3 दण्डादीना प्रतिषेध।

4 (क) इयमष्टप्रक्रमा इयमेकादशप्रक्रमा, इय द्वादशप्रक्रमा इति।

5 (ख) द्वादशप्रक्रमेति।

दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेर्विज्ञायते ॥ (6)

Kapardi (Sutra 6)

दक्षिणतः पुरस्तात् दक्षिणाप्राक्कोणे वितृतीयदेशे—ईषदूनतृतीयदेशे—कस्य वितृतीयदेशः—गार्हपत्याहवनीययोरन्तरालस्य नेदीयसि आसन्नतृतीयदेशे पार्श्वादित्यर्थः । तत्र दक्षिणाऽग्नेरायतनमिति श्रूयते ।

Karavinda (Sutra 6)

दक्षिणतः पुरस्तात् दक्षिणाप्राक्कोणदेशे तस्य गार्हपत्यस्य नेदीयसि सन्निकृष्टे तस्यैव वितृतीयदेशे विशब्दो हीनवचनः किञ्चिद्धीनतृतीयदेशान्तराले दक्षिणाग्नेरायतन श्रूयते ॥

Sundararaja (Sutra 6)

दक्षिणाग्न्यायतनविधानार्थमाह ।

वितृतीयदेशे विकलतृतीयदेशे ईषदूनतृतीयदेश इत्यर्थः । गार्हपत्यस्य दक्षिणतः पुरस्तात्तस्यैव[1] नेदीयसि वितृतीयदेशे दक्षिणाग्नेरायतनमिति ॥

गार्हपत्याहवनीययोरन्तरालं पञ्चधा षड्धा वा सविभज्य षष्ठं सप्तमं वा भागं आगन्तुमुपसमस्य समं अध विभज्यापरस्मिंस्तृतीये लक्षणं कृत्वा गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य निमितं करोति ॥ (7)

तद्दक्षिणाग्नेरायतनम् ॥ (8)

श्रुतिसामर्थ्यात् ॥ (9)

Kapardi (Sutra 7, 8 and 9)

अस्याश्श्रुतेरयमेवार्थ इति । तेन गार्हपत्याहवनीययोरन्तराल, त्रिप्रथम-विस्तारायामानि[1] त्रीणि चतुरस्राणि कृत्वाऽपरस्मिन् चतुरस्रे उत्तरस्या श्रोण्या गार्हपत्य दक्षिणेंऽसे दक्षिणाग्न्यायतन पूर्वस्मिन् चतुरस्रे, उत्तरेंस आहवनीयमित्ये[2]वमादयो निरस्ता भवन्ति । सर्वाण्याग्न्यायतनानि चतुरस्राणि मण्डलानि वा । इह तु मण्डल गार्हपत्यमर्धमण्डलाकारमन्वाहार्य-पचन । चतुरस्रमाहवनीयमिति स्मरन्ति मण्डलचतुरस्रयोरुक्तो विधि । इदानी दक्षिणाऽग्ने धनुराकार उच्यते[3]—पिशीलद्विकरण्या चतुरस्र कृत्वा पूर्वोक्तेन विधानेन मण्डल कुर्यात् । तस्य मण्डलस्य विष्कम्भचतुर्भाग दक्षिणाऽग्ने पूर्वनिहताच्छङ्कोरुदगपसार्य शङ्कु निहत्य तस्मिन्पाश प्रतिमुच्य विष्कम्भार्धेन मण्डल परिलिख्योत्तरमर्ध त्यजेत् । तत्र श्लोको भवत —

> दक्षिणाग्नेर्हताच्छङ्कोरुदक्छङ्कुर्दशाङ्गुले ।
> एकादशतिलैरूने कार्यस्य धनुषा सम ॥
> तस्मिन्पाश प्रतिमुच्य विंशत्यायतया लिखेत् ।
> ऊनया तु द्वाविंशतितिलैरर्ध त्यजेदुदक् ॥

इति ।

**Karavinda** (Sutra 7 8 and 9 )

एतस्य विहरणमाह—

गार्हपत्याहवनीययोरन्तरालमष्टप्रक्रमादिक पञ्चधा षोढा वा सभुज्य गुणयित्वा षष्ठ सप्तम वा भागमागन्तुमुपसमस्य पञ्चधा गुणने षष्ठ षोढा गुणने सप्तमभागमुपसमस्य सयोज्यागन्तुना सह अघ त्रधा विभज्यापरस्मिन् तृतीये गार्हपत्यसन्निहिते तृतीये लक्षण निरञ्जन कृत्वा गार्हपत्याहवनीययोरन्तौ नियम्य रज्ज्वन्तौ पाशौ गार्हपत्यस्य पूर्वशङ्कौ पश्चिम पाशमाहवनीयस्य पश्चिमशङ्कौ पूर्व पाश प्रतिमुच्य लक्षणन दक्षिणापायम्य निमित्त चिह्न तत्र कुर्यात् । तन्निमित्त धनुराकृतेदक्षिणाग्नेमध्यम, विशेषा श्रवणात् । गार्हपत्याहवनीययोर्मध्यमशङ्क्वोरन्तौ नियम्येति केचित् । श्रतिसामर्थ्यात् । दक्षिणत पुरस्तात्' इत्यादि श्रुतिबलादित्यर्थ । अत्र पञ्चधापक्षे गार्हपत्याहवनीयोरन्तरालस्य दक्षिणाग्न्यायतनमध्योपकान्ताद्दक्षिणोत्तरलम्बात् पश्चिमो भाग एकत्रिंशदङ्गुलय त्रिभागोनसप्ततिलाश्च । पूर्वभागोऽष्टाविंशतिरङ्गुलय त्रिभागाधिकसप्तविंशतितिलाश्च । लम्बक षट्त्रिंशदङ्गुलय पादोनषोडशतिलाश्च । षडधापक्षे द्वात्रिंशदङ्गुलय सार्धसप्तविंशतितिलाश्च पूर्वभाग । लम्बकस्त्रिंशद-

1 तृतीय प्रक्रमे विस्तारायामानि । 2 उत्तरस्या आहवनीयमित्ये ।
3 दक्षिणाग्ने प्रयोग उच्यते ।

त्यैतिहासिकास्सर्वाणि चायतनानि क्षेत्रतस्त्र्यानीत्याहुः । तत्रोक्तो मडलविधिः आहवनीयस्याक्ष्णयारज्ज्वा चतुरस्त्रं विहृत्य विधानेन मडल कृत्वा उत्तरार्धं जह्यात्तद्दक्षिणाग्नयायतनम् ।।

यजमानमात्री प्राच्यपरिमिता वा ।। (10)

यथासन्नानि हवींषि सभवेदेवं तिरश्चीप्राञ्ची ।। (11)

वेद्यंसावुन्नयति ।। (12)

प्रतीची श्रोणी ।। (13)

पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये सन्नततरा ।। (14)

एवमिव हि योषेति दार्शिक्या वेदेर्विज्ञायते ।। (15)

Kapardi (Sutra 10, 11, 12, 13, 14 and 15)

यजमानमात्रीत्यादि दार्शिक्यावेदेश्श्रुतिः । अस्याः श्रुतेरर्थं विमानविधिनैव व्याचष्टे ।

Karavirda (Sutra 10, 11, 12 13, 14 and 15)

आयतनविहरणानन्तरं प्रकृतिभूतयोर्दर्शपूर्णमासयोर्विहरणमुच्यते ।

यजमानमात्रीति । यजमानमात्री पण्णवत्यङ्गुला प्राक्त्वेनापरिमिता । तदधिका प्राची प्राङ्मुखा, सभवो व्याप्तिः, यथा हवींषि परस्परसंबन्धेन आसन्नानि भवन्ति तथा तिरश्ची तिर्यङ्मानी स्यात् आयामस्य त्रिभागोना पश्चात्तिरश्ची । 'आयामस्यार्धेन पुरस्तात्तिरश्ची' इति बोधायनः । पशुबन्धे च तथा दृश्यते, अरत्निभिर्वा चतुर्भिः पश्चात् षड्भिः प्राची त्रिभिः पुरस्तादिति, विकृतिषु बहुहविष्षु बहुविस्तारा, अल्पहविष्षु प्रकृतिवत् । प्राञ्ची वेद्यसावुन्नयति प्राक्त्वेन पूर्वान्तमतोऽवमौ कुर्यात् प्रतीची श्रोणी तथा पृथक्त्वेन श्रोण्याकुर्यात् अंहीयसी–तन्वी प्रथीयसी–विस्तीर्णा सन्नततरा अतिशयेन तनु, एवमिव हि योषेति । एवमिवहीति शब्दो निपातसमुदाय प्रसिद्धवचनः । यथा–एवमिव हि पशु, एवमिव ह्यन्नमद्यत इति । एतदेव हि योषा सादृश्यमस्याः । यन्मध्ये कृशत्व पृथुत्वं पृथुतरश्रोणीत्व च । एतत् 'चतुश्शिखण्डा युवतिस्सुपेशा' इति मन्त्रवर्णाच्च लभ्येत, दार्शिक्या वेदेः दर्शपूर्णमासयोस्साधारणाऽपि वेदिः दर्शे पूर्वेद्युर्दृश्यतया दार्शिकीत्युच्यते । यद्वा—दर्शपूर्णमासयोरेकशेष कृत्वा निर्देशः ।

Sundararaja (Sutra 10, 11, 12, 13, 14, and 15)

यजमानमात्री चतुररत्निः पञ्चारत्निर्वा यथाऽऽसन्नानि हवींषि सभ-

वेत् संगृह्णीयात्। एव तिरश्ची अर्धलक्षण तिर्यगित्यर्थ । उन्नयति दीर्घं नयति । प्रतीची प्रतीच्या योषासादृश्य च 'चतुश्शिखण्डा' इति मन्त्रवर्णात् दार्शिक्या –दर्शपूर्णमासिक्या ।

अपरेणाहवनीय यजमानमात्री ॥ (16)

दीर्घं चतुरस्र विहृत्य तावतीं रज्जुमायम्य मध्ये लक्षणं कृत्वा दक्षिणयोश्श्रोण्यंसयोरन्तरा नियम्य लक्षणेन दक्षिणापायम्य निमित्तं करोति ॥ (17)

निमित्ते रज्जु नियम्यान्तौ समस्येत् ॥ (18)

दक्षिणायाश्श्रोणेर्दक्षिणमंसमालिखेत् ॥ (19)

एवमुत्तरत' ॥ (20)

तिर्यङ्मानीं द्विगुणां तथा कृत्वा पश्चात्पुरस्ताच्चोपलिखेत् ॥ (21)

विमितायाः पुरस्तात् पार्श्वमान्या उपसहरेत् ॥ (22)

श्रुतिसामर्थ्यात् ॥ (23)

Kapardı (Sutra 16 17 18 19 20 21, 22, and 23)

अपरेणाऽऽहवनीय एकरज्ज्वादिभिर्दीर्घं चतुरस्र विहृत्य सपाद्य यजमानमात्री पार्श्वमानी यथा सन्नानि हवींषि संभवेत् परस्परासंघट्टितानि तिष्ठन्ति तथा तिर्यङ्मानी । तस्यास्त्रिभागेन वा[1] तिरश्चीति बोधायनीये शुल्वान्तरे प्रतिपादितम् । तावतीं रज्जुमभ्यस्य उभयत पाशौ कृत्वा मध्ये लक्षण कृत्वा दक्षिणयोश्श्रोण्यंसयोरन्तौ नियम्य पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य निमित्त शङ्कुं निहत्य तस्मिन् शङ्कौ रज्जु संयोज्य अन्तौ समस्य पाशावुन्मुच्य तेन हस्तेन गृहीत्वा दक्षिणा श्रोणिमारभ्य यावद्दक्षिणांसमालिखेत् । एवमुत्तरपार्श्वमालिखेत् । एतत्सन्नतत्व वेदे । तिर्यङ्मान्याप्येव[2] कुर्यात् तिर्यङ्मानीप्रमाणा रज्जुमभ्यस्य मध्ये लक्षण कृत्वा श्रोण्योरन्ते पाशौ प्रतिमुच्य पार्श्वादपसार्य[3] तत्र शङ्कु निहत्य तत्र रज्जु प्रबध्यान्तौ समस्य दक्षिणां श्रोणिमारभ्य यावदुत्तरा श्रोणी तावदालिखेत् । एव पुरस्तादपि करोति । एवमुभयत आपरसौ । एवप्रकारा हि योषा । हिशब्दो स्पप्रसिद्धौ । प्रात्तिहरास्यौ एवमेवेत्यर्थ । विमितायामेव चतुरस्रमापादितायां पुरस्तात्पार्श्वमान्यावुपसहरेत्, सङ्कोचयेत् । श्रुतिसामर्थ्यात्–'पुरस्तादहीयसी' इति येयं श्रुति तस्यास्सामर्थ्यात् । इतरथा योषासादृश्यमपि न स्यात् ॥

1 त्रिभागोना वा । 2 तिर्यङ्मान्यामप्येव ।

3 प्रतिमुच्य मध्यमं पश्चात् ।

Karavinda (Sutra 16, 17' 18, 19 and 20)

एताद्विहरणेन व्याचष्टे अपरेणेति। अपरेणाहवनीय आहवनीयस्य पश्चात्समीपे। गार्हपत्याहवनीययोर्यद्यपि महदन्तरालं तथाऽप्याहवनीयसमीप एव वेदिं। केचिद्विस्तारद्विगुणायाम दीर्घमिच्छन्ति। उक्तप्रमाण दीर्घचतुरस्रमाहवनीयमपरेण विहृत्य श्रोण्यमेपु शङ्कुन्निहत्य यावदायाम तावती रज्जुमभ्यस्य आयामद्विगुणां प्रकारेण कृत्वा मध्ये लक्षण निरञ्जन कृत्वा दक्षिणयोदश्रोण्यसयोरन्तौ नियम्य निरञ्जनेन दक्षिणापायम्य शङ्कुं निहत्य तस्मिन् रज्जुं प्रतिमुच्य पाशावेकीकृत्य श्रोण्या आरभ्य यावदस वृत्तमार्गेणालिखेत्। उत्तरपार्श्वे उत्तरतोऽपायम्य एवमेव कुर्यात्॥

Karavinda (Sutra 21)

तिर्यङ्मानीमिति। पूर्वा तिर्यङ्मानी पूर्ववद्द्विगुणा कृत्वा पुरतोऽपायम्य दक्षिणस्मादसात् प्रक्रम्य उत्तरमसमालिखेत्, पश्चिमया तिर्यङ्मान्या पश्चादप्येवमेव कुर्यात्, वेदिप्राचीमिता रज्जु गार्हपत्याहवनीययोरन्तरालमित्युक्तप्रकारेण वेद्या दक्षिणोत्तरमायम्य पूर्ववद्द्वितृतीयदेशे लक्षण कुर्यात् उदग्बहिर्वेदेरुत्तरत उत्तरार्थं लक्षण च कृत्वा वेद्या पश्चादप्येवमेव वितृतीये लक्षण कुर्यात्, गार्हपत्याहवनीययोर्मध्य—मध्यदेश तत्र लक्षण कुर्यात्॥

Karavinda (Sutra 22 and 23)

विमितायामिति। विमिताया चतुरस्रीकृतमात्राया लेखाकरणात्, प्रागेव पार्श्वमान्यौ पुरस्तात्पुरत उपसहारेत्—सकोचयेत्।

Sundararaja (Sutra 16 17, 18 19 20 21 22, and 23)

तस्या विहरणमाह—

निमित्ते रज्जु रज्जुमध्य नियम्य[1] प्रतिमुच्य दक्षिणायं दक्षिणस्या श्रोणेरारभ्य दक्षिणमस प्रत्यालिखेत्। तिर्यङ्मान्योरपि मध्ये लक्षण कृत्वा श्रोण्योरसयोश्चान्तौ नियम्य पश्चात्पुरस्ताच्चापायम्येत्यादि[2] द्रष्टव्यम्। एतदेव श्रोण्यसयोरुन्नयनम्। विमिताया चतुरस्रोन्नताया मनमनात्पूर्वमेव किञ्चिदुपसहरेत्, 'पुरस्तादंहीयसी' इति श्रुतिसामर्थ्यात्।

अत्र बोधायन —

'यजमानमात्री प्राची, तस्या एवार्धं पुरस्तात्तिरश्ची, त्रिभागोना पश्चात्तिरश्ची त्रिशत्पदानि' इति॥

इति चतुर्थ खण्ड

1. रज्जु मध्ये नियम्य।
2 पुरस्ताच्च पाश नियम्य।

## अथ पञ्चमः खण्डः

त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची भवति ॥ (1)

षट्त्रिंशत्प्राची चतुर्विंशति पुरस्तात्तिरश्चीति सौमिक्या वेदेर्विज्ञायते ॥ (2)

षट्त्रिंशिकायामष्टादशोपसमस्य अपरस्मादन्ताद्द्वादशसु लक्षणं पञ्चदशसु लक्षणं पृष्ठ्यान्तयोरन्तौ नियम्य पञ्चदशकेन दक्षिणापायम्य शङ्कुं निहन्ति ॥ (3)

एवमुत्तरतश्श्रोणी ॥ (4)

विपर्यस्तयांसौ पञ्चदशकेनैवापायम्य द्वादशके शङ्कुं निहन्ति ॥ (5)

एवमुत्तरत ॥ (6)

तावसौ ॥ (7)

Kapardi (Sutra 1 2 3 4 5 6 and 7)

पदानीत्यस्मदीया श्रुति । त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्चीति । तिर्यङ्मानी भवति । षट्त्रिंशत्पृष्ठ्या प्राची चतुर्विंशति पुरस्तात् तिर्यङ्मानी भवतीति सौमिक्या वेदे साम्ने श्रुति । षट्त्रिंशिकाया रज्ज्वा अष्टादशोपसमस्य प्रक्षिप्यान्तयो पाशौ कृत्वाऽपरस्मादन्ताद्द्वादशसु लक्षणं पञ्चदशसु लक्षण निरञ्जन कृत्वा पृष्ठ्यान्तयो प्राग्वंशस्य मध्यमाल्लालाटिकात्त्रीन्प्राच प्रक्रमान् प्रक्रम्य शङ्कु निहत्य तस्माच्च पुरस्तात् षट्त्रिंशत्प्रक्रमे शङ्कु निहत्य तयो पाशौ प्रतिमुच्य पञ्चदशकेन दक्षिणापायम्य शङ्कु निहन्यात् । सा दक्षिणा श्रोणी । एवमुत्तरतोऽपसाय शङ्कु निहन्यात् । सोत्तरा श्रोणी । विपर्यस्तयांसौ । पञ्चदशिकेनैवापायम्य द्वादशके शङ्कु निहन्त्येवमुत्तरतस्तावंसौ । शङ्कौ पाशावुन्मुच्य पूर्वपाशमपरस्मि प्रतिमुञ्चेत् । अपर पूर्वस्मिन्प्रतिमुञ्चेत् । स विपर्यास । विपर्यस्तया—एव कृतया रज्ज्वांऽसौ मातव्यौ । तनैव निरञ्जनेन दक्षिणाऽपसाय द्वादशके शङ्कु निहन्यात् । तनैवोदगपसार्य द्वादशके शङ्कु । तावंसौ । महावेद्या मान किमिर्थमिदमुच्यते । यावता सिद्धमेतत् ? अनेकरज्जुविहरणविवक्षयोक्तमिति केचित्परिहरन्ति । आयाम वेत्यस्मिन् पक्षे द्वादशके लक्षणम् । पञ्चदशके लक्षणे च सप्तविंशतौ निरञ्जनमिति

लक्षणबाहुल्यप्रतिपादनार्थमित्यपरे । समचतुरस्राणां दीर्घचतुरस्राणां च विहरणमुक्तम् । इह तु दीर्घविषमचतुरस्रस्येत्यन्ये ।

तदेकरज्ज्वा विहरणम् ।। (8)
त्रिकचतुष्कयोः पञ्चिकाऽक्ष्णया रज्जुः ।। (9)
ताभिस्त्रिरभ्यस्ताभिरंसौ ।। (10)
चतुरभ्यस्ताभिश्श्रोणी ।। (11)

**Kapardi** (Sūtra 8, 9, 10, and 11)

यस्य चतुरस्रस्य त्रिका तिर्यङ्मानी चतुष्का पार्श्वमानी तस्या अक्ष्णया रज्जुः पञ्चिका । ताभिरंसौ मातव्यौ । त्रिकं त्रिरभ्यासयुक्तं द्वादश भवन्ति । चतुष्कं (षोडश पञ्चिका) विंशतिः । यूपावटीयाच्छङ्कोः पश्चात् षोडशसु शङ्कुं निहत्य तस्मिन् पञ्चिकां साम्यास प्रतिमुच्य यूपावटाये साम्यासं त्रिकं प्रतिमुच्यासावायच्छेत् । चतुरभ्यस्ताभिश्श्रोणी । ताभिरेव चतुरभ्यासयुक्ताभिः श्रोणी मातव्यौ[1] । विंशेषु शङ्कुं निहत्य तस्मिन्[1] पञ्चिकां साम्यासं पञ्चविंशतिं प्रतिमुच्य प्रथम-निहते शङ्कौ त्रिकं साभ्यास पञ्चदशिकां प्रतिमुच्य ताभिश्श्रोणी विहरेत् ।।

**Karavinda** (Sūtra 1 and 2)

दर्शपूर्णमासवेदिविहरणानन्तरं प्रकृतौ सौम्यवेदिविमानमुच्यते ।

त्रिंशदिति ।। त्रिंशत्पदानि पश्चात्तिरश्ची भवतीति तैत्तिरीयकश्रुतिः । त्रिंशत्प्रक्रमेति शाखान्तरीया, अनो विकल्पः, यद्यपि कर्मोपदेशः प्रक्रम-शब्देन प्राग्वंशस्य मध्यमाल्ललाटिकात्त्रीन् प्राचः प्रक्रमानिति तत्रापि श्रुत्योर्वैकल्पिकत्वेन प्रदर्शनार्थः प्रक्रमशब्दः । तत्र प्रक्रम्यत इति प्रक्रमशब्दः । पश्चात्तिरश्ची पश्चात्तिर्यङ्मानी प्राची आयामः पुरस्तात्तिरश्ची तिर्यङ्मानी विधानमुच्यते ।।

**Karavinda** (Sūtra 3, 4, 5, 6 and 7)

षट्त्रिंशिकायामिति ।। षट्त्रिंशिका षट्त्रिंशत्प्रमाणा रज्जुः, तस्यामष्टादशोपममस्य सयोज्यापरस्मात् पश्चिमादन्तादारभ्य द्वादशसु लक्षणमकार्षं, पञ्चदशसु लक्षणं श्रोण्यर्थं, प्राग्वंशस्य मध्यमाल्ललाटिका-त्त्रीन् प्राचः प्रक्रमानतीत्य ततः पुरस्तात् षट्त्रिंशत्प्रमाणां प्राचीं लेखामा-लिखेत् सा पृष्ठ्या तदन्तयोश्शङ्कू निहत्य तयोः पाशौ प्रतिमुच्य पञ्च-दशिकेन लक्षणेन दक्षिणापायम्य शङ्कुं निहन्ति सा दक्षिणा श्रोणी,

1. मातव्यौ । षोडशसु यस्याङ्कुरस्तः तस्मिन् ।

एवमुत्तरतोऽप्यायम्य शङ्कुः, सोत्तरा श्रोणी, विपर्यस्तयांसौ विपर्यस्तपाशयांऽशौ मातव्यौ । पञ्चदशिकेनैवापायम्य द्वादशिके शङ्कुः, दक्षिणतः उत्तरतश्च तावंसौ । ननु 'तदर्थमभ्यस्यापरस्मिन्' इत्यनेनैव विहरणेनास्मिन्विहरणे सिद्धे किमर्थमिह पुनर्वचनम्, उच्यते—सङ्ख्यापूर्वागमार्थमिति केचित्परिहरन्ति, अनेकरज्जुविवक्षया इत्यन्ये, आयामाभ्यासेषु द्वादशसु लक्षणं पञ्चदशसु लक्षण सप्तविंशत्यादौ निरञ्जनमिति लक्षणबाहुल्यप्रतिपादनार्थमित्यपरे । दीर्घचतुरस्राणां च तत्र विहरणमुक्तं । इह तु विषमदीर्घचतुरस्रस्येत्यपरे ॥

Karavinda (Sutra 8)

तदिति ॥ एका चासौ रज्जुश्चेत्येकरज्जुः, एकयैव रज्ज्वा श्रोण्यंसानां विहरणं एकरज्जुविहरणं । द्विशङ्कुना त्रिशङ्कुना पञ्चशङ्कुना वा योगेन यद्विहरणमुक्तं तदिदमित्युक्तमनुभाषते अनेकरज्जुविधित्सया ॥

Karavinda (Sutra 9)

त्रिकेति ॥ त्रिका त्रिप्रमाणा चतुष्का चतुष्प्रमाणा पञ्चिका पञ्चप्रमाणा । त्रिकचतुष्कयोरिति आयामाभ्यामप्राप्तमनूद्यते, तदभ्यासेन श्रोण्यंसविधानार्थं एवमुत्तरेष्वभ्यासेषु ॥

Karavinda (Sutra 10)

ताभिः पृथक्पृथक्त्रिरभ्यस्ताभि. त्रिरपरि निक्षिप्ताभिः, त्रिकात् त्रिरभ्यस्तात् द्वादश, चतुष्कात्त्रिरभ्यस्तात् षोडश, पञ्चकात्त्रिरभ्यस्तात् विंशतिः, ताभिरसौ मातव्यौ ॥

Karavinda (Sutra 11)

केन पदेन विकल्प्यन्ते । तथा वक्ष्यति—'पदे युगेऽरत्नी' इत्यादि । एतान्येव चतुर्विधानि पदानि द्विगुणानि त्रिगुणानि च प्रक्रमाः । ते च सप्तविधाः । तत्र साग्निचित्ये सोमे पदैर्विमानं न लभ्यते अग्निक्षेत्रासंभवात् । एवं सप्तविधेऽग्नौ विंशत्यङ्गुलस्य निवृत्तिर्व्याख्याता,[1] अनग्निचित्ये[2] तु सर्वेषामेव पदप्रक्रमाणामिच्छया विकल्प इति केचित् । अन्ये पुनरेवं व्यवस्थामिच्छन्ति—पदैश्चतुर्विधैर्विंशत्यङ्गुलेन वा प्रक्रमेण मानमनग्निचित्ये । एकविधाग्नौ विंशत्यङ्गुलेन, द्विविधादिषु पञ्चविधपर्यन्तेषु चतुर्विंशत्यङ्गुलेन, षड्विधादिषु द्वादशविधपर्यन्तेषु त्रिंशत्यङ्गुलेन लौकिकेन वा द्विपदेन, त्रयोदशविधादिषु षट्त्रिंशदङ्गुलेनेत्यादि । सर्वेषामपि पक्षे अग्नयः पञ्चचत्वारिंशदङ्गुलेन प्रक्रमेण सम्भवन्ति । तत्राग्न्यनुगुणा वेदेर्विवृद्धिः कर्तव्या । यूपैकादशिन्यां न्यायस्य[3] प्रदर्शितत्वात् । यथा—पञ्चाशद्विधेऽग्नौ षट्पञ्चाशदङ्गुलो दण्डः प्रक्रमस्थानीयः, एकशतविधे अशीत्यङ्गुल इत्यादि ।

अथास्या वेदेर्विहरणमाह—

**Sundararaja** (Sutra 3, 4, 5, 6 7 and 8)

यावदायाम प्रमाणमित्युक्तस्य मानस्याय प्रपञ्चः ।

अथास्या एव वेदेरनेकरज्ज्वा विहरणमाह—

**Sundararaja** (Sutra 9, 10 and 11)

त्रिकचतुष्कयोस्तिर्यक्पार्श्वमान्यो अभ्यस्ताभिः उपक्षिप्ताभिः यथा—त्रिका त्रिरभ्यस्ता द्वादशिका, चतुष्का त्रिरभ्यस्ता[4] षोडशिका पञ्चिका, त्रिरभ्यस्ता विंशतिका । एताभिस्तिसृभिरभ्यस्ताभिरंसौ मातव्यौ । एताभिरेव चतुरभ्यस्ताभिः पञ्चदशिकया विंशिकया च[5] श्रोणी मातव्ये । द्विरभ्यस्ताभिरप्येताभिरंसौ मातुं शक्येते । सर्वत्र द्वादशिकाऽऽसयोः । तिर्यङ्मानो पञ्चदशिका । श्रोण्योरितरा पृष्ठ्याया पार्श्वमानी एव षड्भी रज्जुभिर्विहरणम् । एवमुत्तरत्र ॥

**द्वादशिकापञ्चिकयोस्त्रयोदशिकाऽक्ष्णयारज्जुः ॥ (12)**

**ताभिरंसौ ॥ (13)**

**द्विरभ्यस्ताभिश्श्रोणी[6] ॥ (14)**

---

1. विंशत्यङ्गुलस्य वृद्धिः व्याख्याता । 2. अग्निचित्ये तु ।
3. यूपैकादशिन्या तस्य । 4. भिस्त्रिरभ्यस्ताभि ।
5. पञ्चदशिकया पञ्चविंशिकया च ।
6. त्रिरभ्यस्ताभिश्श्रोणी ।

Kapardi (Sūtra 12, 13 and 14)

यूपावटीयाच्छङ्कोः पश्चात्पञ्चसु शङ्कुं निहत्य तस्मिन् त्रयोदशिकां प्रतिमुच्य यूपावटीये पञ्चिकां द्वादशिकां च प्रतिमुच्य ताभिरंसौ मातव्यौ। द्विरभ्यस्ताभिश्श्रोणी । यूपावटीये त्रयोदशिकां साभ्यासां प्रतिमुच्य साभ्यासां द्वादशिकां च प्रथमनिहते पञ्चिकां च साभ्यासाम्, ताभिः श्रोणी मातव्यौ।

Karavinda (Sūtra 12)

स्पष्टार्थमिदम् ॥

Saravinda (Sūtra 13, and 14)

यूपावटीयशङ्कोः पश्चात् पञ्चदशसु शङ्कुं निहत्य तस्मिंस्त्रयोदशिका प्रतिमुच्य यूपावटीये द्वादशिकां प्रतिमुच्य ताभ्यामंसौ। तथा प्रथमनिहतशङ्कौ द्विरभ्यस्ता पञ्चिकां प्रतिमुच्य यूपावटीये द्विरभ्यस्तां त्रयोदशिका प्रतिमुच्य ताभ्यां श्रोण्यौ। अर्धाभ्यासप्राप्तमिदमायामचतुर्गुणाभ्यासप्राप्त वा ॥

Sundararaja (Sūtra 12, 13 and 14)

द्विरभ्यस्ताभिः षड्विंशिकादिभिः[1]।

पञ्चदशिकाऽष्टिकयोः सप्तदशिकाऽक्ष्णया रज्जुः ॥ (15)

ताभिश्श्रोणी ॥ (16)

Kapardi (Sūtra 15 and 16)

प्रथमनिहताच्छङ्कोः पुरस्तादष्टसु शङ्कुं निहत्य तस्मिन् सप्तदशिकामष्टिकां च प्रतिमुच्य प्रथमनिहते पञ्चदशिकाम्। ताभिः श्रोणी ॥

द्वादशिका पञ्चत्रिंशिकयोस्सप्तत्रिंशिकाऽक्ष्णयारज्जुः ॥ (17)

ताभिरंसौ (18)

Kapardi (Sūtra 17 and 18)

प्रथमनिहताच्छङ्कोः पुरस्तात्प्रक्रमे शङ्कुं निहत्य तस्मिन् सप्तत्रिंशिकां पञ्चत्रिंशिकां च प्रतिमुच्य यूपावटीये द्वादशिकाम्। ताभिरंसौ मातव्यौ ॥

एतावन्ति ज्ञेयानि वेदिविहरणानि भवन्ति ॥ (19)

---

1. षट्त्रिंशिकादिभिः।

**Kapardi** (Sutra 19)

एतावन्त्येव शुद्धमूलानि ज्ञातुं शक्यानि वेदिविहरणानि भवन्ति। अन्ये शुद्धमूलाः कल्पयितुमशक्याः। तस्मादेतावन्तीत्यवधार्यन्ते—

**Karavinda** (Sutra 15 and 16)

प्रथमनिहतशङ्कोः पञ्चदशिका, ततः पुरस्तादष्टासु सप्तदशिका, ताभ्यां श्रोण्यौ। आयामत्रिगुणाभ्यासप्राप्तमिदं आयामतृतीयद्विकाभ्यासप्राप्तं वा॥

**Karavinda** (Sutra 17 and 18)

द्वादशिकेति। इदमपि गतार्थम्। यूपावटीये द्वादशिका, प्रथमनिहतशङ्कोः पुरस्तात्प्रक्रममात्रे शङ्कुं निहत्य तस्मिन् पञ्चत्रिंशिका, ताभ्यामंसौ, पञ्चमद्वयाभ्यासप्राप्तमिदं, पञ्चगुणाभ्यासप्राप्त वा।

**Karavinda** (Sutra 19)

एतावन्तीति॥ शुद्धमूलतया ज्ञातुं शक्यानि एतावन्त्येवेत्यवधारणा। एतावन्त्युक्तानि, अन्यान्यपि उन्नेयानि, सच्छेदाभि. रज्जुभिर्निर्ह्रासवृद्धिभ्यां च वेदिविहरणानि भवन्त्येव, यद्यपि इदं विहरणमेकरज्ज्वा द्विशयोगेनैव व्याख्यतम्, तथा त्रिशङ्कुपञ्चशङ्कुभ्यामपि निर्ह्रासवृद्धिभ्यां यथायोग विहर्तव्यः, इतरथा तयोर्विधानस्यादृष्टार्थत्वकल्पनाप्रसङ्गात्, अतो निदर्शनमेतत् सर्वविहरणानाम्।

*Sundararaja* (*Sutra 15, 16, 17, 18 and 19*)

अथ चतुर्थं विहरणमाह। छेदरहिताण्येतावन्ति। सच्छेदान्यन्यान्यपि[1] बहूनि सन्ति यथा—

अर्धद्वादशिकार्धचतुर्थिकयोरर्धत्रयोदशिकाऽक्षणयारज्जुः, ताभिरसौ। पञ्चदशिकासपादैकादशिकयोः पादोनैकान्नविंशिकाऽक्षणयारज्जुः, ताभिश्श्रोणी इत्यादि।

अष्टाविंशत्यूनं पदसहस्रं महावेदिः॥ (20)

**Kapardi** (Sutra 20)

नवशतानि द्विसप्ततिश्च (972) पदक्रमाणि[2] प्रक्रमप्रमाणानि[2]

1. छेदरहितान्येव भवन्ति। सच्छेदानि त्वन्यान्यपि।

2. पदप्रमाणानि।

वा चतुरस्राणि महावेदेः । महद्ग्रहणं किमर्थम् ? पदप्रमितायां महावेद्यां सदोहविर्धानादीनामपि पदेनैव मानार्थं, प्रक्रममितायामरत्निप्रक्रमैरेव नवारत्नि तिर्यङ्मानीत्यरत्निमान सदमो विहितम् । नवारत्नि तिर्यगिति[1] नियतप्रमाणविधानात् अरत्निनैव विधानमनुमीयते । तथा हविर्धानस्य, अचरत्निविस्तारं नवारत्नायामामित्यनुमीयते । तत्कथ पदेन तयोर्मान लभ्यते इत्युच्यते, चत्वारिंशदधिकानि पचशताङ्गुलप्रमाणानि पदविमिताया वेद्‍ेरायाम , पद पचदशाङ्गुलमिति वचनात् । सदसः पश्चात् पञ्चचत्वारिंशदङ्गुल पोडशाधिक शतद्वय सदोहविर्धानयोर्मध्य पञ्चचत्वारिंशत्सचर. । हविर्धानस्य पोडशाधिक शतद्वयम् । अवशिष्टमष्टादशाङ्गुलम् । तस्मादुत्तरवेदिसदोहविर्धानाना अन्तर्वेद्यसभवात् वृद्धिः कल्पनीया । अरत्नेर्वा ह्रास कल्पनीय । तदुभयमचोदित भवति । अतो येन वेदिर्मिता तेनैव तेपा मानाय महद्ग्रहण स्थितम् ।

**Karavinda (Sutra 20)**

द्विसप्तति. नवशतानि च पदपरिमितानि क्षेत्राणि महावेदि., प्रक्रममानेऽप्येवम् । पदग्रहण किमर्थं, उच्यते –पदग्रहणमहद्ग्रहणाभ्यामेतद् ज्ञायते –वेद्या पदेन माने सदोहविर्धानयोरपि पदेन मान नारत्निभिः, उत्तरवेदिश्च युगमात्री न सर्वतो दशपदेति प्रक्रममिताया वेद्यामरत्निविहितयोस्सदोहविर्धानयोस्सर्वतो दशपदाया उत्तरवेदेश्चासभवात् पदेनैव सदोहविर्धानयोर्विमान युगमानोत्तरवेदिरिति सिद्धम् । सख्यानप्रयोजनम् वोदत्तृतीये यजत इत्यादिषु ।

**Sundararaja (Sutra 20)**

पदग्रहण प्रक्रमस्याप्युपलक्षणम् ।

दक्षिणस्मादंसाद् द्वादशसु[2] दक्षिणस्यां श्रोण्यां निपातयेत् ॥ (21)

छेद विपर्यस्योत्तरत उपदध्यात् ॥ (22)

सा दीर्घा चतुरस्रा ॥ (23)

तया युक्तां संचक्षीत ॥ (24)

**Karavinda (Sutra 21, 22, 23 and 24)**

दक्षिणस्मादसादारभ्य द्वादशस्वेव श्रोण्यां निपातयेत् । त्रीणि पदानि श्रोणिदेशे, शिष्टानि विपर्यस्योत्तरस्मिन्नसे मनसा स्थापयेत् । एवं कृते सप्त-

---

1. तिर्यगरत्निमान ।

2 दक्षिणस्मादन्ताद्द्वादशसु,

विंशतिविस्तारा षट्त्रिंशदायता दीर्घचतुरस्रा[1] भवति[1]। तथाभूता[1] वेदि सप्तविंशति षट्त्रिंशत्या गुणिते सति अष्टाविंशत्यूनपदसहस्र भवति।

सौमिकयावेदेर्वितृतीयदेशे यजेतेति सौत्रामण्या वेदेर्विज्ञायते॥ (25)

**Kapardi** (Sutra 25)

वेदितृतीये यजेतेति दार्शिकत्राशनवयो[2]रसंभवात्सौमिक लभ्यते। अतस्सौमिक्या इत्युक्तम्।

*प्रक्रमस्य द्विकरणी प्रक्रमस्थानीया भवति॥ (26)*

त्रिकरणी वा॥ (27)

**Kapardi** (Sutra 26 and 27)

तृतीयकरणी प्रक्रमस्थाना, स्थानान्ताद्विभापेति छप्रत्यय। तृतीयकरणी प्रक्रम कृत्वा षट्त्रिंशिकायामित्यादिना विहरेत्। तृतीयकरण्या वक्ष्यमाणेन विधिना।

अष्टिकादशिकेति तिर्यङ्मान्यौ[3]॥ (28)

द्वादशिका पृष्ठ्या॥ (29)

**Kapardi** (Sutra 28 and 29)

अष्टिका पुरस्तात्तिर्यङ्मानी। द्वादशिका पृष्ठ्या। द्वादशसु षड्रासमस्यापरस्मादन्तात्पञ्चसु लक्षण चतुर्षु लक्षण कृत्वा पृष्ठ्यान्तयोरन्तौ नियम्य पञ्चकेन[4] दक्षिणा पसार्य शङ्कु निहन्यात्। एवमुत्तरतस्ते श्रोणी। विपर्यस्तयासौ। पञ्चकेन दक्षिणापायम्य चतुर्षु शङ्कु निहन्यात्। एवमुत्तरतस्तावंसौ भवतः।

*श्रीणि चतुर्विंशानि पदशतानि सौत्रामणिकी वेदिः॥ (31)*

**Kapardi** (Sutra 30)

दक्षिणस्मादंसादारभ्य चतुर्ष्वेव दक्षिणस्या श्रोण्या निपात्य शेष[5]

---

1. चतुरस्राभवति तथा भूताया गणयेत्, 2 पाशुकयो,

3 (क) अष्टदशिकेति,

(ख) अष्टिका दशिकेति। तिर्यङ्मान्यौ। अष्टिका पुरस्तात् तिर्यङ्मानी। द्वादशिका पृष्ठ्या।

4. नियम्य पञ्चदशकेन दक्षिणापायम्य पञ्चकेन 5 शेष

विपर्यस्येत्यादि पूर्ववत्[1] । द्वादशपदविस्तारा द्वादशपदायामा भवति एवं वृद्धि क्षीत ॥

द्विस्तावा वेदिर्भवतीत्यश्वमेधे विज्ञायते ॥ (31)

**Kapardi (Sūtra 31)**

कस्य द्विस्तावा? सौमिक्या प्रकृतत्वात्प्रकृतित्वाच्च ।

**Karavinda (Sūtra 22 23 and 24)**

क्षेत्रतृतीयग्रहणं न प्रमाणमिति तृतीयग्रहणमिति कथं सङ्ख्यायत इत्यत आह—

वेद्या दक्षिणस्मादंसादारभ्य द्वादशसु दक्षिणस्या श्रोण्या वेद्या निपातयेद्रज्जुं वा तां निपात्य तद्बहिश्छिन्द्यात् । लेखाया बहिर्भूतं छेद विपर्यस्य—विपर्यासं कृत्वा इतरत—इतरस्मात् पार्श्वे स्थापयेदेव सप्तविंशतिविस्तारा षट्त्रिंशदायता दीर्घचतुरस्रा वेदिर्भवति, तथा युक्ता तथा भूता गणयेत् । एतेन विषमचतुरस्राणां सङ्ख्यानप्रकारो वेदितव्य ।

**Karavinda (Sūtra 25)**

सुत्रामदेवत्या सौत्रामणी, तस्या वेदितृतीये यजेत इति श्रूयते । वेद्यास्तृतीयो देश वेदितृतीयदेश, स कस्या, सौमिक्या किमोदनं शालीनां सक्तु वाडव परिमितानामिति वत् ॥

**Karavinda (Sūtra 26 27 28 and 29)**

प्रक्रमतृतीयकरणे व्याख्याता प्रक्रमस्थानीया भवति । 'स्थानान्ताद्विभाषा' इत्यादिना स्वार्थे छप्रत्यय । तथा षट्त्रिंशतिकायामित्यादिना सौमिकवद्विमान त्रिकरणी चोक्ता, षष्टिकादशिके तिर्यङ्मान्या द्वादशिका पृष्ठ्या तत्पक्षे षष्टप्रमाणा पुरस्तात् तियक् दशप्रमाणा पश्चात्तिर्यक्, द्वादशायाम द्वादशिन्याया षडुपममस्य चतसृषु पञ्चसु लक्षणं पञ्चसु श्रोण्या चतसृष्वंसौ । वेदितृतीयत्व क्षेत्रत इत्याह—

Karavinda (Sutra 31)

प्रकृतत्वात् प्रकृतित्वाच्च गौमिक्या एव द्विस्तावा—द्विगुणा वेदिरश्वमेधे भवति, पशुगणसबन्धाद्यूपाना चोदकप्राप्तरथाक्षमात्रान्तरालता प्रत्यक्षविहितद्विस्तावचनात् बाध्यते। अतोऽत्र यथा सभवान्तराला एव एकविंशतियूपाः। त्रिस्तावाग्नात्वा त्रिपदक्रमः द्विस्तावा। यूनैकादशिनी पक्षे वेदिविवृद्धिर्भवतीत्येव।

Sundararaja (Sutra 21, 22 23 and 24)

सङ्ख्यानोपायमाह—

दक्षिणस्मादंमादारम्यापरान्ते पृष्ठ्याया दक्षिणतो द्वादशसु रज्जुं निपातयेत्। तद्दक्षिणतश्छेद दोर्घ त्रिकोणं मनसा[1] विपर्यस्य उत्तरपार्श्वे उपदध्यात्, मा षट्त्रिंशत्प्राचिका सप्तविंशतिव्यासा दीर्घचतुरस्रा भवति, तथाभूता गणयेत्। सप्तविंशतिषट्त्रिंशतोस्सवर्गे कृते[2] नव शतानि द्विसप्ततिश्च भवन्ति।

Sundararaja (Sutra 25 and26)

प्रक्रमग्रहण पदस्याप्युपलक्षणम्, एवं पदशतानीति पदग्रहणं[3] प्रक्रमस्योपलक्षणमिति शेषः॥

Sundararaja (Sutra 27, 28 and 29)

दशाङ्गुलपदस्य निकरणी सप्तदशाङ्गुलयः एकादश तिलाश्च अं 17 ति 11 द्वादशाङ्गुलस्य विंशत्यङ्गुलस्य सप्तविंशशतितिलाश्च अं 20 ति 27 पञ्चदशाङ्गुलस्य तिलोनषड्विंशतिरङ्गुलयः। एव प्रक्रमाणामपि द्रष्टव्यम्॥

Sundararaja (Sutra 30)

काठकाग्नीनामप्येवा।

Sundararaja (Sutra 31) No comment.

इति पञ्चमः खण्डः

---

1. त्रिकोणमञ्जसा.
(ख) त्रिशतो विषमवर्गं,

2. (क) स्संवर्गेण कृते

3. ग्रहणम्॥ (निकरण्या)

Karavinda (Sutra 1)

द्विस्तावाया वेद्या अश्वमेधे प्रक्रमस्य द्विकरिणी प्रक्रमस्थाने भवति प्रमाणद्विकरण्या विहरेत् ।

Karavinda (Sutra 2, 3, and 4)

पद पञ्चदशाङ्गुलं द्विपद त्रिंशदङ्गुलं, त्रिपद पञ्चचत्वारिंशदङ्गुलम् द्विपदे त्रिपदे च प्रक्रमव्यवहारादुभयमिह ग्राह्यम् । अथवा प्रक्रमः पदविक्षेपवाची, पदादयोऽत्र मानसाधनभूता गृह्यन्ते । अतो न विक्षेपमात्रेण प्रयोजनम् । किन्तु तत्सम्बन्धिना केनचिद्द्रव्येण, अतो विक्षेपफलभूत संयोगविभागाभ्यामुपलक्षितदेशान्तरालपरिमितरज्ज्वादिना प्रयोजनम्, गच्छन् हि सर्वो जनः एक पद विक्षिप्य निदधाति, तत्र निर्विकार मगच्छन् समः पुरुषः स्थितनिधीयमानयोः पदयोरन्तराल यथा पदपरिमित भवति तथा गच्छति, अतो विक्षिप्तेन पदेन पदद्वय व्याप्तमिति द्विपदः प्रक्रम., स्थितमपि पद तत्सहकारीति ताभ्या पदत्रयव्याप्तेस्त्रिपदश्च भवति । प्रक्रमे याथाकामी—काम इच्छा, तदनतिक्रमो यथाकामम्, तस्य भाव. यथाकाम्यम्, याथाकाम्यमेव याथाकामी—यथेष्टमित्यर्थः, विविध शेत इति विशय, उभयत्र प्रयोगो दृश्यत इत्यर्थः । ननु प्रक्रमेषुवैषम्यमपि दृश्यते, यथा चतुरो विष्णुक्रमान् प्राचः क्रामत्युत्तरमुत्तरं ज्याय समिति । नाय दोषः तस्य वचनस्योत्तरोत्तर ज्यायस्त्वविधिपरत्वात्, प्रक्रमे गृह्यमाणे द्विपदमेव त्रिपदमेव वा गृह्णीयात्, न मिश्रयेदित्यर्थः, चतुरो विष्णुक्रमानित्यत्र वाचनिकत्वात् क्रमवैषम्यस्य न क्रमवैषम्यानुयोगः । अतो विशेषितप्रक्रमविधौ द्वित्रिपदप्रक्रमयोरेवान्यतर गृह्णीयान्न मिश्रयेदित्यर्थः । पदादिसूत्रे वक्ष्यमाण पदविकल्पनिबन्धन. प्रक्रमयोरपि विकल्पो भवतीत्येव ।

Karavinda (Sutra 5 and 6)

यजमानाध्वर्यू प्रसिद्धौ, हि शब्दो हेतौ, चेष्टन्त इति चेष्टा. कर्माणि । अयमर्थः—पदादयो यजमानस्य ग्राह्या. स्वामित्वात्, कुतः यथाकामित्वात्,तस्य अध्वर्योर्वा । वाशब्दो विकल्पार्थः । यस्मादेषोऽध्वर्युश्चेष्टानां कर्ता भवति तस्मादस्य पदादयो ग्राह्या. चेष्टाकर्तृत्वात्, यजमानस्य प्राप्तयर्थं वचनमध्वर्योस्तु बाधकबाधनार्थमतो विकल्प. ।

Sundararaja (Sutra 1, 2, 3 and 4)

शब्दार्थस्य—शब्दप्रवृत्तिनिमित्तस्य विशयित्व—अनेकवृत्तित्वम् । इदं—प्रक्रमे याथाकाम्य शब्दार्थस्य विशयित्वादुक्तमित्यर्थः । 'द्विपदः प्रक्रमः' इति बोधायन । 'त्रिपदः प्रक्रम.' इति कात्यायनः । उभयमप्याचार्यस्यानुमतमिति विज्ञायते ।

Sundararaja (Sutra 5)

पदेनाङ्गुलिभिर्वा प्रक्रमो ग्राह्यः स्वामित्वात् ।

कारणमाह—

Sundararaja (Sutra 6) No comment

रथमात्री निरूढपशुबन्धस्य वेदिर्भवतीति विज्ञायते ॥ (7)

Kapardi (Sutra 7)

रथप्रमाणा निरूढपशुबन्धस्य वेदिर्भवतीति श्रुतिः ।

तस्य खल्वाहू रथाक्षमात्री पश्चात्तिर्यग् ॥ (8)

ईषया प्राची ॥ (9)

विपथयुगेन पुरस्तात् ॥ (10)

Kapardi (Sutra 8 9 and 10)

खलुशब्दोऽलङ्कारे । तत्र तस्मिन्नर्थे रथप्रमाणविदो रथकारा आहु[1]। रथाक्षमानी पश्चात् तिर्यगीषया प्राची, विपथयुगेन पुरस्तात्, रथाक्षमात्री पश्चात्तिर्यङ्मानी । रथग्रहण शकटनिवृत्त्यथम् । ईषामात्री पृष्ठ्या । विपथयुगेन—व्यापन्न पन्था युगेन तद्विपथयुगम् । अभ्यन्तर युगछिद्रयोरन्तरालम् । तत्प्रमाण पुरस्तात्तिर्यङ्मानी ।

यावता वा बाह्ये छिद्रे ॥ (11)

Kapardi (Sutra 11)

यावता प्रमाणेन युगस्य बाह्ये छिद्रे भवतः तावद्वा पुरस्तात्तिर्यङ्मानी वेदे ।

Karavinda (Sutra 7 8 9, 10 and 11)

रथमात्री–रथप्रमाणा निरूढपशुबन्धस्य वेदिरिति श्रुतिः । श्रुत्युक्तमभियुक्तोक्त्या दर्शयति ।

खलुशब्दो वाक्यालङ्कारार्थः । तत्राहुरभियुक्ता —रथाक्षमात्री रथप्रमाणा पश्चात्तिर्यक्तिरश्ची ईषया संमिता प्राची । व्यापन्नः पन्था येन स विपथ यारगमथ इत्यर्थः । विपथस्य युगो विपथयुग । तेन संमिता पुरस्तात्तिरश्ची । अथवा यावता वा बाह्ये छिद्रे यावता प्रमाणेन गृहीते बाह्ये छिद्रे भवत तावती वा पुरस्तात्तिर्यक् ।

1. आहु । रथाक्षमात्री पश्चात् तिर्यङ्मानी

Sundararaja (Sutra 7, 8, 9, 10 and 11)

इत्याहुराचार्याः—पश्चात्तिर्यङ्मानी रथाक्षमात्री, ईषामात्री प्राची, विपथयुगमात्री पुरस्तात्तिर्यङ्मानी । विगतः पन्था यस्माद्युगात् तद्विपथयुगम् । बाह्यच्छिद्रसहित षडशीत्यङ्गुल युगम्[1] । यावता वा बाह्ये च्छिद्रे बाह्यच्छिद्रयोरन्तरालमशीत्युङ्गुलम् ।

तदेकरज्ज्वोक्तम् ॥ (12)

पञ्चदशिकेनैवापायम्यार्धाक्षेणाधयुगेन श्रोण्यंसान्निर्हरेत् ॥ (13)

Kapardi Sutra 12 and 13)

तदेकरज्जुरिति किं सौमिकी गृह्यते श्राहोस्वित्प्रथममौमिकी गृह्यते ? पञ्चदशिकेनेति दर्शनात्, तत्र हि पञ्चदशिके लक्षणम्, नेतरत्र । ईषामात्री ईषा षट्त्रिंशद्धा विभज्य एक भाग प्रक्रमस्थानीय कृत्वा सौमिकवत्पञ्चदशिकेनापायम्य अर्धाक्षेण श्रोणी मिनुयात् । अर्धयुगेनांसौ मिनुयादिति केचित् । अपरे पुनः प्रथमामेकरज्जुं गृह्णन्ति । यदि सौमिकी गृह्यते अदृष्टकल्पना प्राप्नोति कथं पञ्चदशिकेनेति चेत्, लक्षणया 'षट्त्रिंशिकायाम यत्पञ्चदशक तदपि षड्भागोनमेव । तस्मात्पञ्चदशिकेनेति षड्भागोना लक्षयितुं न शक्यते । तेनादृष्टकल्पना भवति । नन्वन्यत्रापि लक्षणा ? सा तु लौकिकी, किं च साधारणत्वाच्च सैवैका रज्जुस्साधारणी । तस्माच्च सैव ग्राह्या । एवमुत्तरत्रापि योजनीयम् । अर्धाक्षे अर्धयुगे च लक्षण कृत्वा षड्भागोनेनापायम्य अर्धाक्षे श्रोणी । अर्धयुगे त्वंसौ ।

Karavinda (Sutra 12, and 13)

एतद्विहरणमेकरज्जुविहरणेन व्याख्यातम् । एकरज्जुरिति द्वित्रिपञ्चशङ्कुरज्ज्वादीना ग्रहण, इतरथा उत्तरयोर्विधानस्यादृष्टार्थत्वकल्पनाप्रसङ्गादिति सौमिकया व्याख्यातम् । तथा पञ्चदशिकेनेति षड्भागोने कृतलक्षणस्य ग्रहणम् । तच्च निरजनमात्रप्रदर्शनम् । इतरथा अदृष्टार्थत्वप्रसङ्गादिति तत्रैवोक्तम्, तत्रानेकरज्जुभिरिहापि विहरणमुक्तम्, तदिहाप्यविरोधात् गृह्यत एव । ईषामात्रा षट्त्रिंशद्भाग प्रक्रम कृत्वा तेनैव विहरेत् ।

Sundararaja (Sutra 12 and 13)

'षट्त्रिंशिकायामष्टादशोपसमस्य' इत्यादिना एकरज्ज्वा तन्मान-

1. त्यङ्गुल वा ।

मुक्तम् । ईषायाप्यष्टत्रिंशो भागः पंचाङ्गुलमर्धाष्टमतिलाश्च[1] प्रक्रमस्थाने द्रष्टव्यम् । यद्वा एकरज्जुशब्देन यावदायाममिति विहरणमभिप्रेतम् । अत्र पक्षे पञ्चदशिकेनेति लक्षणया षड्भागोनतृतीयमेवोच्यते[2] । सोमे तत्पञ्चदशप्रक्रममभूदिति[3] । एवमुत्तरत्रापि बाह्यच्छिद्रान्तरालपक्षे[4] तदर्धेनासनिर्हरणम् ।

अथाप्युदाहरन्ति ॥ (14)

Kapardi (Sutra 14)

अथशब्दस्समुच्चये । एवं चोदाहरन्ति रथप्रमाणविदो रथकाराः—

अष्टाशीतिशतमीषा ॥ (15)

तिर्यगक्षश्चतुश्शतम् ॥ (16)

षडशीतियुगं च ॥ (17)

अस्य रथश्चारण उच्यते ॥ (18)

इति रथपरिमाणम् ॥ (19)

Kapardi (Sutra 15, 16, 17, 18 and 19)

एव रथपरिमाण सर्वतो मानमुदाहरन्ति—ब्रुवते । सामर्थ्यसिद्धे-श्चाङ्गुलिर्गृह्यते । रथेषाप्रमाण[5] अष्टाशीत्युत्तरमङ्गुलशतम् । तिर्यक्शब्दः पूरणार्थः । अक्षप्रमाण चतुरधिक शतम् । युगस्य प्रमाणं षडशीतिः । एवलक्षणो यो रथस्य चारणः, चरत्यनेनेति चारण । चरण एव चारणः । चारणग्रहण क्रीडादिरथनिवृत्त्यर्थम् । अथवा अस्यशब्दस्य स्थाने यस्यशब्दमध्याहृत्य योजनीयम् । वर्णव्यत्यासेन वा ।

अरत्निभिर्वा ॥ (20)

चतुर्भि. पश्चात् ॥ (21)

षड्भि· प्राची ॥ (22)

त्रिभि· पुरस्तात् ॥ (23)

तदेकरज्ज्वोक्तम् ॥ (24)

पञ्चदशिकेनैवापायम्य द्वाभ्यामप्यर्धेनेति श्रोण्यंसान्निर्हरेत् (25)

---

1 पञ्चाङ्गुलमष्टार्धतिलाश्च ।
2. तृतीयमेव लक्षणमुच्यते ।
3. प्रथम मानूदिति ।
4 बाह्यच्छिद्रपर्यन्तपक्षे ।
5. रथेषा प्रमाणमेतत् मष्टाशी ।

Kapardi (Sutra 21, 22, 23, 24, and 25)

अरत्निभिर्वा मातव्यमिति शेषः । चतुर्भिः पश्चात्तिर्यङ्मानी । षड्भिः प्राची पृष्ठ्या । त्रिभिः पुरस्तात्तिर्यङ्मानी । तदेकरज्ज्वोक्त-मित्यादि—गतमेतत् ।

यजमानमात्री चतुरस्रक्तिर्भवतीति पैतृक्या वेदेर्विज्ञायते ॥ (26)

तदेकरज्ज्वोक्तम् ॥ (27)

पञ्चदशिकेनैवापायोम्यार्धेन ततश्श्रोण्यंसान्निर्हरेत् ॥ (28)

Kapardi (Sutra 26, 27, and 28)

पैतृक्या वेदे. श्रुतिः—यथा दिक्षु स्रक्तयो भवन्ति तथा मातव्या । तदेकरज्ज्वेति गतार्थम् ।

Karavinda ((Sutra 15, 16, 17, 18 and 19)

वेदार्थविगमस्य बहुविधान्तराश्रयत्वात् । तक्षशास्त्रे गार्ग्यागस्त्या-दिभिरङ्गुलिसङ्ख्ययोक्त रथपरिमाणश्लोकमुदाहरति[1]—

अथापिशब्दो समुच्चये, उदाहरन्ति मुनय अष्टाशीतिश्च शतं चाष्टाशीतिशत, चत्वारि च शत च चतुश्शतम्, पञ्चाशीतिश्च षडशीति, आयोधनपुष्यजैत्रचारणादिभेदेन रथस्यानेकविधत्वामु ग्यस्य तैरुक्त अष्टा-शीतिशतमित्यादि, अस्यार्थ —अस्य बहुविधस्य मध्ये यस्य ईषा अष्टा-शीतिशतमङ्गुलय, चतुर्शतक शतमक्ष, युग च षडशीति, एवविधो रथ-श्चारण उच्यत इति । एव रथपरिमाणमुदाहरन्ति मुनय. ।

ननु अक्षस्य तिर्यङ्मानीत्वमुक्तम्, युगेषयो का प्राची का तिरश्चीति न ज्ञायते । उच्यते—अक्षस्य तिर्यक्त्वविधानादेवयुगेषयोरपि या द्राघीयसी सा प्राची, या ह्रसीयसी सा तिरश्चीति सामर्थ्यादीषा प्राचीति गम्यत इति मन्यन्ते । छिद्रान्तरालपक्ष षोडशाङ्गुलहीना पुरस्तात्तिरश्ची ।

Karavinda (Sutra 20, 21 22 and 23)

(अरत्निभिर्वा पुरस्तात्) गतम् ।

Karavinda (Sutra 24 and 25)

इदमपि गतम् । अत्रारत्नावरत्निद्वये च लक्षणम् ।

Karavinda (Sutra 26, 27 and 28)

---

1. श्लोकमुपनिबध्नात्याचार्य, अङ्गुलप्रमाण च तत्रोक्तमिह स्वीक्रियते ।

पितृणामिव वेदि—दैनूको महापितृयज्ञवेदि. । चोदकप्राप्तेऽपि यजमानमात्रे पुनर्वचनं विस्तारस्यापि तथात्वा (य) त् । (आयाम) प्रतिदिश सक्तय. महादिशु कोणा 'सर्वा ह्यनुदिश'[1] इति दर्शनात्, अत्र प्रयोग—अग्रेणान्वाहार्यपचनं किञ्चिदन्तरमवशिष्य तस्य पुरस्ताद्यजमानमात्र द्विकरण्या चतुरश्रं सपाद्य तस्य करणामध्येषु पया सक्तयो भवेयु. तया पञ्चदशिकेनेत्यादिना विहृत्यार्धेन तत्र तस्य यजमानमात्रस्यार्धेन श्रोण्यसान्निर्हरेत्तन्निर्ह्रासो निर्ह्रासो विवृद्धिर्वेत्युक्तयोनिर्ह्रास, महावेद्यां पञ्चदशिकेनैवापायम्य द्वादशिके शङ्कुन्निहन्नीति विवृद्धि, पुनरस्मिन् पञ्चदशिकेनैवायम्य अर्धयजमानमात्र शङ्कु निहन्यात् दक्षिणा प्राची वेदि: ॥

Sundararaja (Sutra 14 15 16, 17, 18 and 19)

अङ्गुल्यस्सरयेया । अङ्गुलिश्चोर्ध्ववाहो पुरुषस्य विशतिशततमो भाग इति वक्ष्यते । 'पचारत्नि पुरुष, चतुर्विंशत्यङ्गुलयोऽरत्नि. इति । सा च चतुस्त्रिंशत्तिलेत्याचक्षते । यथोक्त बोधायनेन—

"अङ्गुलिप्रमाण चतुर्दशाणव चतुस्त्रिंशत्तिला पृथुसश्लिष्टा इत्यपरम्" इति चतुरधिक शत चतुश्शत युगमिति विषययुगमुच्यते प्रस्तुतत्वात् । अन्यत्तु[2] युग शताङ्गुलमिति तच्छास्त्रविद । षण्णवत्यङ्गुलमित्याचार्यपादीया. । यथाऽऽहु.—

चतुर्हस्तो धनुर्दण्डो धनुरन्तर युगम् ।

इति । 'हस्तश्चतुर्विंशतिरङ्गुलय' इति च ।

Sundararaja (Sutra 20 21, 22 and 23)

पशुबन्धवेदीत्येके[3] ।

द्वाभ्या श्रोणी । षड्पर्धनांसो ।

Sundararaja (Sutra 26)

पचारत्नि. ।

Sundararaja (Sutra 27, and 28)

तत्र इति पशुपन्तातमि । दक्षिणाप्राची पृष्ठ्या । महादिशु श्रोण्यसा । अत्र स्पष्टमायमाह कात्यायन—

---

1 सर्वस्मिन्ननुदिश तिर ।

2 अन्ये तु ।

3 (क) पशुबन्धवेदीत्येवम् ।

(ख) पशुबन्धवदीयम् ।

'पैतृक्यां द्विपुरुषं चतुरस्रं कृत्वा करणीमध्येषु शङ्कवस्ससमाधिः' इति । तत्र प्रकारः—पुरुषमात्रद्विकरण्या दशतिलोनया सप्ततिशताङ्गुलया समचतुरस्रं कृत्वा करणीनां मध्येषु शङ्कून्निहत्य दशारत्नयो रज्ज्वोः पाशान्[1] पूर्वापरयोः प्रतिमुच्य तयोर्मध्ये दक्षिणोत्तरयोर्नियम्य बहिस्स्पन्द-मपच्छिन्द्यात् । एतां चतुररत्नीमपि केचिदिच्छन्ति । तत्र प्राज्यं[2] पुरोडाशा आसादयितुं न शक्यन्ते ।

दशपदोत्तरा वेदिर्भवतीति सोमे विज्ञायते ।। (29)

तदेकरज्ज्वोक्तम् ।। (30)

पञ्चदशिकेनैवापायम्यार्धेन ततश्श्रोण्यंसान्निर्हरेत् ।। (31)

**Kapardi** (Sutra 29, 30 and 31)

पदग्रहणं प्रदर्शनार्थम् । प्रक्रममितायां महावेद्यां दशपदोत्तरवेदिः सर्वतो दशपदा, 'प्रमाणेन प्रमाणं विधीयत' इति वचनात् । क्षेत्रतो वा दशपदा । तदा एकपदविस्तारं त्रिपदायामं दीर्घचतुरस्रं कृत्वा तस्याक्ष्णया रज्जुं गृहीत्वा चतुरस्रं कुर्यात् । प्रक्रमेऽप्येकप्रक्रमविस्तारं त्रिप्रक्रमायाम चतुरस्रं विहृत्य तस्याक्ष्णया रज्जुं गृहीत्वा चतुरस्रं कुर्यात् । तदेक-रज्ज्वोक्तं—प्रर्धेन ततः—तस्येत्यर्थः षष्ठ्यर्थे तसिल् ।

तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते ।। (32)

**Kapardi** (Sutra 32)

युगेनोक्तप्रमाणेन यजमानस्य वा पदैः । यजमानग्रहणादध्वर्योर्न लभ्यते । यजमानग्रहणं प्रदर्शनार्थमिति केचित् । तस्मादेव वचनादुत्तर-वेदिर्युगमात्री लभ्यते । सोमे पदमानायां महावेद्यां उत्तरवेदिं युगेन वा पदैर्वा विमाय शौल्बेन मानेन पश्चाच्छम्यया[3] मानमदृष्टार्थं कर्तव्यम् । शम्यया परिमिमीत इत्येतद्वचनमदृष्टार्थं न प्रमाणविधि. इत्युक्तं भवति ।

**Karavinda** (Sutra 29)

महावेद्या प्रथमनिहताच्छङ्कोः पुरस्तात्पञ्चविंशतिषु शङ्कुं निहत्य तत्पुरस्ताद्दशसु शङ्कुं निहत्य पञ्चदशिकेनेत्यादिना विहरेत् ।।

**Karavinda** (Sutra 30 and 31)

ततोऽर्धेन पञ्चपदेनेत्यर्थः । 'सर्वतो दशपदा' इति शतपथब्राह्मणे

---

1. दशारत्निरज्ज्वाः पाशौ ।
2. केचिदिच्छन्ति । तन्न, आज्यं ।
3. शौल्वेन पश्चाच्छाम्यया ।

श्रूयते 'प्रमाणेन प्रमाण विधीयते चतुरस्रमिति तदनुरूपक्षेत्रतो दशपद इति कात्यायन । अस्मिन् पक्षे पदविस्तार त्रिपदायाम दीर्घचतुरस्र विहृत्य तस्याक्ष्णयारज्जुप्रमाणोत्तरवेदि । अस्मिन्नपि पक्षे एतत्क-रण्यर्धेन श्रोण्यसाना विहरणम् ॥

Karavinda (Sutra 32)

तामुत्तरवेदिं युगप्रमाणेन । तदुक्त[1] 'षडशीतिर्युगम्' इति । तेन वा यजमानस्य वा पदैर्विमाय पश्चाददृष्टार्थं शम्यया सर्वतो मिमीते। शम्याप्रमाण चोक्त सूत्रान्तरे 'षट्त्रिंशच्छम्या' इति पशुबन्धे त्वन्यस्याभावात् परिमाणार्थमेव शम्याविधानम् । मानैवास्यै सेति लिङ्गाच्च । अस्मादेव वचनात् सौमिक्युत्तरवेदिर्युगमात्र्यपि लभ्यते (भवति) ॥

Sundararaja (Sutra 29 30 and 31)

दशपदा—सर्वत । क्षेत्रतश्शतपदा ।

Sundararaja (Surta 32)

युगमपि दशपदाया एव मानसाधन वेणुवत् । केचित् तस्य स्वत[2] प्रमाणमाहु, तद्विचारणीय सूरिभि । यजमानग्रहण अध्वर्युनिवृत्त्यर्थम् । शम्यया परिमाणमदृष्टार्थम् ।

पदे युगेऽरत्नावियति शम्याया च मानार्थेषु यथाकामी ॥ (33)

शब्दार्थस्य विशयित्वात् ॥ (34)

Kapardi (Sutra 33 and 34)

पदादिषु मानार्थेषु यथाकामी—यथेच्छा तथा गृह्णीयात् । किमुक्त भवति ॥

| | |
|---|---|
| अणवश्चतुर्दश | तिल |
| चतुस्त्रिंशत्तिला | अङ्गुल (पृथुतस्संस्पृष्टा इत्यपरम्) |
| द्वादशाङ्गुल | प्रादेश |
| त्रयोदशाङ्गुल | वितस्ति |
| पञ्चदशाङ्गुल | पदम् |
| चतुर्विंशत्यङ्गुलय | अरत्नि. |
| द्वात्रिंशदङ्गुल्य | जानु |

1 युगप्रमाणमुक्त षडुत्तरधविमाने ।
2 पदपादायामेव मान वेणुवत् । केचित् स्वतत्र ।

| | |
|---|---|
| षट्त्रिंशदङ्गुला | शम्या |
| षडशीत्यङ्गुल | युगम् |
| चतुश्शत | अक्ष. |
| विंशत्युत्तर शत | पुरुष. |

इत्येवमादिशुल्बान्तरोक्तलक्षणमानार्थेषु प्रमाणावयवा गृह्येरन् । लक्षणे वर्गेण[1] विमाय तत्र यथाकामी शब्दार्थस्य विशयित्वात् । पचदशाङ्गुल पदमपि भवति । यजमानपदमपि । तत्रान्यतरद्ग्राह्यमित्याधाने । इयद्द्वादशविक्रामा इति । तत्र स्वसविंत्ति अपरसविंत्ति लोकप्रसिद्धि शास्त्रप्रसिद्धि वा गृह्णीयादित्यर्थ· ।

विमितायां पुरस्तात्पार्श्वमान्या उपसंहरेत् ।। (35)

श्रुतिसामर्थ्यात् ।। (36)

Kapardı (Sutra 35 and 36)

एव चतुरस्रे आपादिते पार्श्वमान्या पुरस्तादुपसहरेत्, श्रुतिसामर्थ्यात्—"चतुश्शिखण्डे युवती कनीने" इति युवतिसादृश्यानुवाद सामर्थ्यम् ।।

*Karavinda (Sutra 33 and 34 )*

पदे युगेऽरत्नावियति प्रादेशे प्रक्रमे शम्यायां चेति हिरण्यकेशिशुल्बे बौधायनीयशुल्बे च । अथाङ्गुलीप्रमाण चतुर्दशाणव चतुस्त्रिंशत्तिला पृथुसश्लिष्टा इत्यपरम् । दशाङ्गुल क्षुद्रपदम् । द्वादश प्रादेश । पृथोत्तरयुगे त्रयोदशिके प्रक्रामे च (पञ्च) दश । अष्टाशीतिशतमीषा । षडशीतियुगम् । द्वात्रिंशज्जानुः षट्त्रिंशच्छम्या, बाहुर्द्विपद प्रकाम, द्वौ प्रादेशावरत्निरिति । तथा पचारत्नि पुरुषश्चतुररत्निर्वा याम इति च । तत्रैव इयत्यग्रे जुहोति, इयत्यग्रे हरति, इयन्त गृह्णाति, इयन्त करोति, इयद्भवतीत्यादि ब्राह्मणव्याख्यानावसर एवाचार्येण जानुदघ्नादिभि परिमाणान्याख्यात । तत्र पदादिषु मानसाधनतया निर्दिष्टेषु यथाकामी स्याद्यथेच्छा तथा कुर्यादित्यर्थ । शब्दार्थस्य विशयित्वादिति गतम् । अयमर्थ — पदादिषु यजमानस्याध्वर्योर्वाऽवयवभूताङ्गुलल्या परिकल्पितानि अणुतिलपरिकल्पिताङ्गुल्या परिकल्पितानि वा पदादीनि गृह्णीयात् । पदादि-

1 लक्षणेनोक्तेन (मार्गेण) वर्गेण ।

शब्दार्थस्योभयत्रापि प्रयुक्तत्वादिति । अणवो धान्यविशेषाः । ([1]आचार्येणैव निरूढपशौ रथपरिमाणज्ञानार्थं तक्षशास्त्रोक्तादष्टाशीतिशतमित्युदाहरणात्, श्येने पंचारत्निः पुरुष इत्यादेः ब्रवीतिशब्देन प्रमाणविदां समयानुकथनान्न शास्त्रान्तरपरिगृहीताङ्गुलिपदादिपरिग्रहानुयोगः । द्विपदस्त्रिपदो वेति प्रक्रमप्रस्तावे यजमानस्याध्वर्योर्वेति वचनान्न केवलमवयवादिविधिनाङ्गुलिपरिच्छिन्नपदादिग्रहणम्) ॥

प्रासङ्गिकं परिसमाप्य प्रस्तुतशेषं ब्रूते—

**Karavinda** (Sutra 35 and 36)

व्याख्यातमेतद्द्वाशिव्याम् । इह तु श्रुतिसामर्थ्यात् 'चतुश्शिखण्डे युवती कनीने' इत्यस्याः श्रुतेरहीयसी पुरस्तादित्येक इत्युपसंहाराच्च विकल्पः धर्मोपदेश उक्तः ।

**Sundararaja** (Sutra 33 and 34)

पदचातुर्विध्यमुक्तम् । युगत्रैविध्यं च षडशीतिपण्णवतिशताङ्गुलैः । अरत्निर्द्विविध—चतुर्विंशत्यङ्गुलो हस्तश्चेति । इयानिति प्रादेशोऽभिप्रेतः । स च द्विविधः—द्वादशाङ्गुलः प्रसारिते अङ्गुष्ठप्रदेशिन्याविति । शम्या त्रिविधा—'चत्वारोऽष्टद्वात्रिंशदङ्गुला शम्या' इति कात्यायनः ।

---

1 ननु अङ्गुलीनामङ्गुलिभिरनिर्वचनं परिमाणं ताभिः पदादीनां परिमाणं च शास्त्रान्तरोक्तम् अष्टाशीतिशतमित्यादिलोके अथाप्युदाहरन्ति इति पठित्वा इति रथपरिमाणमित्युपसंहरन्ति । यत्तु श्येने पञ्चारत्निः पुरुषः चतुररत्निर्व्यायामः चतुर्विंशत्यङ्गुलयोऽरत्निस्तदर्धः प्रादेश इति ब्रवीतिरिति ब्रवीतिशब्देन प्रमाणविदां समयाय ब्रूते तेन शाखान्तरोक्तानामङ्गुल्यादीनां शास्त्रान्तरोक्तं परिमाणं ग्राह्यम् इति मन्यन्ते- यदिह तदेव परिमाणं भवतु कुतो यजमानस्याध्वर्योर्वाऽवयवपरिच्छिन्ना अङ्गुल्यादयो गृह्यन्ते-उच्यते-यदयं प्रक्रमो द्विपदस्त्रिपदो वेति प्रथम प्रस्तुते यजमानस्याध्वर्योर्वा इति प्रमाणभेदं ब्रूते अतोऽवगम्यते न केवलमङ्गुलिपरिमिता एवाङ्गुल्यो गृह्यन्ते किन्तु पुरुषविशेषाय परिच्छिन्न इति तस्माद् युक्तं मानयायाभूरेप्रभेदु पदादिषु यायावरामी कल्पार्थस्य विकल्पितादिति युक्तमित्यवगम्यमाने इदं पाठान्तरं परिभाषितोऽयं दृश्यते ।

'षट्त्रिंशच्छम्या' इति बोधायनः, लौकिकी तृतीया । एषु मानेषु[1] याथाकाम्यं भवति, शब्दार्थस्यानेकत्र वृत्तेः ।

Sundararaja (Sutra 35 and 36)

भ्रहीयसी[2] पुरस्तादित्यस्य वैकल्पिकत्वं प्रागेवोक्तम् ॥

इति षष्ठः खण्डः

1. एषु मानार्थेषु ।
2. भ्रहीयसीं ।

# अथ सप्तमः खण्डः

नवारत्नितिर्यक्सप्तविंशतिरुदगायतमिति सदसो विज्ञायते ॥ (1)

अष्टादशेत्येकेषाम् ॥ (2)

तदेकरज्ज्वोक्तम् ॥ (3)

पञ्चदशिकेनैवापायम्यार्धपञ्चमेश्श्रोण्यंसान्निर्हरेत् ॥[1] (4)

Kapardi (Sūtra 1 2 3 and 4)

नवारत्नि प्राची तिर्यङ्मानी, सप्तविंशतिरुदीची पार्श्वमानी । एव मन्तव्यमिति सदसश्श्रुति[2] । पदेन प्रक्रमेण वा मातव्यम् । करणमुक्तम्[2] । प्रथमनिहताच्छङ्कोर्दक्षिणत प्रक्रमे शङ्कु निहत्य तस्मिन् पाश प्रतिमुच्य तस्य पुरस्तादर्धाष्टमे पृष्ठ्यायां दक्षिणत प्रक्रमशङ्कु । तत्सदमो मध्यमौदुम्बरीस्थानम् । प्रथमनिहताच्छङ्को पृष्ठ्यायामेव पुरस्तादर्धाष्टमे शङ्कु निहत्य तस्मिन् पाश प्रतिमुच्योपर्युपरि शङ्कुमुदगपसार्यार्धचतुर्दशे नवसु वा शङ्कु निहन्यात्[3] । पृष्ठ्याया यश्शङ्कु तस्मिन् प्रतिमुच्यापर्युपर्यौदुम्बरीस्थानीय दक्षिणापसार्यार्धपञ्चदशे दशसु वा शङ्कु निहन्यात् । सदस[3] आयाम । तस्मिन्नायामे तदधमभ्यस्य यथासूत्र विहरेत् । सप्तविंशतावर्धचतुर्दशमभ्यस्य दक्षिणस्मादसादेकादशसु पदेषु निरञ्जनमर्धपञ्चमे लक्षण श्रोण्यसादधमष्टादशसु वा नव प्रक्षिप्यार्धाष्टमे निरञ्जनमधपञ्चमलक्षण श्रोण्यसाधमायामयोरन्तौ नियम्य निरञ्जनम् । तेन पश्चादपसार्यार्धपञ्चमे शङ्कु । पुरस्तादपसार्यार्धपचमे शङ्कु । ते श्रोणी । सदस विपर्यस्यासौ । प्राग्वदमान हविर्धानम्[4] । आग्नीध्रमान चाननाचार्येण नोक्तम् । अतद्गुल्यान्तरोक्त ग्राह्य वैहृतत्वात्[5] । सदस पुरस्तात्त्रिषु प्रक्रमेषु दशप्रक्रमविस्तार द्वादशायाम[6] हविर्धान मिनुयात् । एकरज्ज्वा पचशङ्कुना त्रिशङ्कुना[7] वा हविर्धानस्य

---

1 पञ्चमयो श्रोण्यसान्निर्हरेत् ।

2 मातव्यमिति सदसश्श्रुति । करणमुक्तम् ।

3 निहन्यात् । सदस आयाम ।

4 हविर्धाने पञ्चमाने ।

5 ग्राह्य आगमितत्वात् ।

6 दशायामं—A ।

7 B शङ्के नास्ति ।

पाश्चात्यमध्यमशङ्कौ पाशं प्रतिमुच्योदगपसार्यं द्वादशप्रक्रमे[1] शङ्कुः । तदाग्नीध्रायतनम् । तया रज्ज्वा दक्षिणाऽपसार्य द्वादशसु मार्जालीयम् । पृष्ठयाया सदसः पौरस्त्यशङ्कौ पाश प्रतिमुच्योदगपसार्य पादोनैकादशसु शङ्कुं निहृत्य तस्माच्चोत्तरतः षट्सु शङ्कुः । ताभ्यां च पुरस्तात् षट्सु प्रक्रमेषु शङ्कुं निहन्यात् । एव पचशङ्कुना[2] वा समचतुरस्रं मिनुयात् । अष्टप्रक्रमविस्तारं द्वादशायाम प्राग्वंशं मिनुयात् । द्वादशविस्तारं षोडशायाममित्यन्ये ।

Karavinda (Sutra 1 and 2)

तिर्यङ्माना नवारत्निः प्राग्भवति उदवसप्तविंशतिरायतं । अष्टादशायतमित्येकेषां शाखिनाम् ।

Karavinda (Sutra 3 amd 4)

पदविमिनाया वेद्यां सदोहविर्धानयोरपि पदेनैव मानमित्युक्तं, प्रक्रममाने त्वरत्निविमानमेव,[3] हविर्धानस्यापरिमितं वेति[4] कर्मोपदेश उक्तः, अपरिमित सप्तविंशतेः परं सदोविमानमुच्यते, महावेदेः पश्चात्तिरश्चयाः पृष्ठयाया दक्षिणतो दशपदेष्वारभ्य यावत्पुरस्तात् तिरश्चयाः तावती लेखामालिखेत्, रज्जुं वा पातयेत्, एवं पृष्ठ्या उत्तरतोऽपि अष्टासु पदेषु पश्चिमान्तादारभ्य तयोरेव लेखयोः पूर्वपश्चिमेषु दक्षिणत आरभ्य यावदुत्तरं उदीची लेखामालिखेत्, सा सदसः पृष्ठ्या भवति । अष्टादशिकाया नवोपसमस्यार्धपचमेष्वर्धाष्टमेषु लक्षणं कृत्वा पृष्ठचान्तयोरित्यादिना विहृत्यार्धपंचमेषु शङ्कुन्निहन्यात्तत्सदो भवति ।* हविर्धानाग्नीध्रप्राग्वंशप्रमाणानीहाचार्येणानुपदिष्टान्यपि शुल्बान्तरोपदिष्टानि ग्राह्याणि । हविर्धानं दशायाम[5], दशविस्तारमाग्नीध्र[6], षडायामविस्तारमर्धमन्तर्वेद्यर्धं वहिर्वेदिर्भवति । प्राग्वंशष्षोडशायामो द्वादशविस्तारः । द्वादशायामो नवविस्तारो वा । प्रथमनिहनात् शङ्कोः पुरस्तात्पचदशसु[7] शङ्कुः तत्पुरस्तात् नवायामविस्तारं हविर्धानं दशपदं वा तद्द्विशङ्कुप्रभृतीनामन्यतमे न[8] कुर्यात् ॥

---

1. दशप्रक्रमे ।
2. त्रिशंकुना ।
3. तयो. अरत्निविमानमेव ।
4. वेदि ।
5. द्वादशायाम ।
6. ग्नीधीयम् ।
7. पदान्यतीत्य ।
8. तद्विष्कभप्रभृतिनायम्यान्यतमेन ।

* पदविमाने महावेद्या- सप्तवि ······नादष्टादशपद एव सदस आयाम. ॥पा॥

Sundararaja (Sūtra 1 and 2)

उदगायतमित्येव । नवारत्निरेव प्राची । तत्र विंशतिचतुर्विंशत्यङ्गुलप्रक्रमेण अष्टादशारत्निः[1] । उत्तरेषु क्रतुषु सप्तविंशत्यरत्निः । देशस्तु प्रयोगकल्प[2] एवोक्तः, 'अपरस्माद्धर्वंसात्' इत्यादिना[3] ।

Sundararaja (Sūtra 3 and 4)

उदीची—पृष्ठ्या ।

प्रादेशमुखाः प्रादेशान्तराला भवन्तीत्युपरवाणां विज्ञायते ॥ (5)

अरत्निमात्रं चतुरस्रं विहृत्य स्रक्तिषु शङ्कून्निहत्यार्धप्रादेशेन तं तं परिलिखेत् ॥ (6)

श्रुतिसामर्थ्यात् ॥ (7)

Kapardi (Sūtra 5, 6 and 7)

उपरवमानमपि निगदव्याख्यातम् । अरत्नीति गतार्थम् ।

Karavinda (Sūtra 5)

अभिषवकाले ग्रावभिरेषामुपरि र (व) वन्त इत्युपरवाः । उपराः—ग्रावविशेषाः, तेन तद्वन्त इति वा उपरवा अवटविशेषाः ।

Karavinda (Sūtra 6 and 7)

दक्षिणस्य हविर्धानस्य दक्षिणस्यां श्रोण्यां द्विशङ्कुवादनामन्यतो-मेनारत्निप्रमाणं चतुरस्रं विहृत्य कोणेषु शङ्कून्[4] निहत्यार्धप्रादेशेन कर्क-टेन रज्ज्वा वा तान् शङ्कून् परितो लिखेत् । एवं प्रादेशमुखा अन्योन्यतः प्रादेशान्तराला भवन्ति । एषा श्रुतिरेवमर्थवती भवति । पदमानेन वेदिः ॥

अथ देवजनदेशविमानभागा उच्यन्ते—पदमाने एकपञ्चाशत् प्राचीं निरतिरश्चीं देवयजमानयोग्या भूमिं कृत्वा तन्मध्ये तदायामा देवयजन-योग्यां भूमिं कृत्वा तन्मध्ये तदायामां प्राचीं निपातमालिख्य रज्जुं प्रसार्य तदन्तयोः शङ्कू निखाय प्राग्वंशप्रभृति तदनुरूप नरमन्त्राने कुर्यात्, पदपा-दन्ते प्राग्वंश षोडशायामं द्वादशविस्तारं द्वादशायाम नवविस्तार वा निर्माय तस्य मानादि शालीन् प्राच इत्यादि तथादि तत्रैव तच्छङ्कोरारभ्य त्रिपदा बहिर्वेदिस्तदन्तो शङ्कुः, ततस्तत्पुरस्तात् षट्त्रिंशन्महावेदिः प्राची, विनाप-

1. अन्येन भाने अष्टादशारत्निः ।

2. प्रयोगकाम ।          3 वेधनादित्यादिना ।

4. चतुरस्रशङ्कून् षट्त्रिंशन्महावेदिः प्राची ।

श्चात् तिरश्ची, चतुर्विंशति पुरस्तात्तिरश्ची[1] एव महावेदिं विमाय पश्चिमान्ते त्रिपदस्सचर, तत्पुरस्तात्प्राक्त्वेन नवपदमुदक्त्वेनाष्टादशपद सद, दक्षिणोत्तरमष्टादशायाम तन्मध्ये पृष्ठ्याया दक्षिणत पदमात्रे भवति।[2] तदौदुम्बरीस्थान, सदस पूर्वार्धे पुरस्तादर्धं पदमात्र सचरमवशिष्य तत्पश्चात्पृष्ठ्याया होत्रीयमित्यादयो धिष्ण्या अरत्निमात्रा पिशीलमात्रा वा। तेषा च तस्य तस्योत्तरत विसस्थितसचर सदस पुरस्तात् त्रिपदस्सचर। तत्पुरस्तात् नवायामविस्तार हविर्धान, त्र्यरत्निविस्तार नवायाममिति मध्यम मध्यमे छदिषि तूष्णीमितरे च्छुविपी इति दर्शनात्। 'दशायामविस्तार हविर्धानम्' इति बोधायन। यूपावनीयाच्छङ्कौ पश्चात्पदमात्रसचर। तत्पश्चाद्युगमात्रोत्तरवेदि। उत्तरवेदिहविर्धानयोरन्तरालमन्तर्वेदि। पृष्ठ्याया दक्षिणतो दक्षिणहविर्धान, उत्तरत उत्तर हविर्धान, दक्षिणहविर्धानस्यदक्षिणश्रोण्यामुपरवा, हविर्धानस्य पश्चादाग्नीध्रस्य (दाग्नीध्रीयश्च) बाहुसम पृष्ठ्याया दक्षिणतो द्वादशसु मार्जालीय। तथैव तस्या एवोदक् द्वादशस्वाग्नीध्रीय, सर्वधिष्ण्या पिशीलमात्रा सदसोऽस्मादुत्तरत पादोनत्रिपदे पादोननवपदे च शङ्कू। आग्नीध्रमण्टपस्य ते श्रोणी। हविर्धान पश्चिमान्तादारभ्य प्राक्त्रिपदेषु पृष्ठ्याया उत्तरत। पादोनैकादशसु पादोनसप्तदशसु शङ्कू तावाग्नीध्रपण्टपस्यासौ। षड्विंशिकाया पश्चात् पृष्ठ्याया पूर्वान्ते अधमन्तर्वेद्यर्धं बहिर्वेदि। त्रिपदविष्कम्भस्त्रिपदपरीणाहो यूपावट इति बोधायन। उत्तरस्माद्वेद्यसादुदक्प्रक्रमे चात्वाल उत्तरवेदिसमित, चात्वालमध्यो वेद्यसतुल्य। अर्धान्ते चात्वालात् पश्चाद्द्वादशसु तद्बहिर्वेद्युत्कर वेद्यसोत्करयोर्मध्ये उत्तरत षोडशसु शामित्रधिष्ण्य। एतत्पदमाने। प्रक्रममाने तु सदोहविर्धानयोररत्निमानमग्नेरुत्तरवेदेर्वा पश्चात्त्रीन् प्रतीच प्रक्रमानतीत्य तिर्यग्हविर्धान नवारत्नीत्यादि यावत्। सभवायामविस्तार सद। धिष्ण्या पिशीलमात्रा प्रक्रमेणव सर्वमान षट्त्रिंशदङ्गुलपरिमिता उत्तरवेदिस्तु दशपदा युगमात्री वा तत्स्थानेऽग्निर्वा। अन्यत्सर्वं प्रक्रमकृत। यूपैकादशिनीपक्ष दशरथाक्षामेकादशो (परां) परवां रज्जु मीत्वा तस्याश्चतुर्विंशेन भागेन वेदिं विमिमीते। प्रक्रमस्थानीया भवतीत्युक्त (क्त प्राच्यैकादशिन्या) मेकादशिन्या। प्राच्यैकादशिनीपक्षे अर्धषष्ठानि पदान्यसौ यूपार्धं वदे पुरस्तात् पदार्धमात्रमसमपच्छिद्य तत्पुरस्तात् प्राञ्च निदध्यादिति बोधायन। एकादशैकादशिनीपक्षे अर्धषष्ठानि

1 न पश्चिमशङ्कोदक्षिणत पञ्चदशसु दक्षिणा श्रोणी उत्तरतश्च पञ्चदशसु- उत्तराश्रोणी। पुरस्थाच्छङ्कोदक्षिणत उत्तरतश्च द्वादशस्वसौ॥ पा॥

2 तत्रायामविस्तारयोमध्ये औदुम्बरीस्थान औदुम्बर्या दक्षिणत उत्तरतश्च नवायाम। तत पृष्ठ्याया दक्षिणतोऽष्टापद च भवति॥ पा॥

प्रतिमे द्वादशस्वसौ चात्वालोऽसादुदक्क्रमे।
पुर. पश्चात्सदोधानात्त्यजेत्प्रक्रमपञ्चकम् ॥[1] (9)
दक्षिणे तु हविर्धाने पश्चात्त्रीन् प्रक्रमास्त्यजेत्।
पार्श्वद्वये प्रक्रमौ द्वौ अङ्गुलद्वयसंयुतौ ॥ (10)
अरत्निमात्र मध्ये चोपरवाणा तु लक्षणम्।
एवमेव विमान स्यात्पदैरपि चतुर्विधं ॥ (11)
पद पञ्चमसयुक्त धिष्ण्यविष्कम्भ इष्यते।
शम्यामात्रस्तु चात्वालो[2] व्यक्त बोधायनोऽब्रवीत्।
*अन्यथाऽग्नौ विरोधस्स्यात् मान चान्यन्न विद्यते (12)*

**व्यायाममात्री भवतीति गार्हपत्यचितेर्विज्ञायते ॥ (8)**

**चतुरस्रेत्येकेषाम् ॥ (9)**

**परिमण्डलेत्येकेषाम् ॥ (10)**

**Kapardı** (Sutra 8 9 and 10)

चतुररत्निर्व्यायाम । तत्प्रमाण गार्हपत्यचिते । चतुरस्रा गार्हपत्यचितिरित्येकेषा शाखिना मतम् । परिमण्डला गार्हपत्यचितिरित्येकेषा श्रुति ॥

**करणं व्यायामस्य तृतीयायामं सप्तमव्यासं कारयेत् ॥ (11)**

**Kapardı** (Sutra 11)

चतुरस्राया करणमुच्यते। व्यायामतृतीया पार्श्वमानी व्यायामसप्तमी तिर्यङ्मानी। एव करण कारयेत्। कुर्यादिति वक्तव्ये कारयेदिति वचनादन्यैस्तक्षादिभि प्रवीणैरध्वर्युणेत्यवगम्यते। क्रियन्तेऽनेनेष्टका इति करण दारुमयम्।

**साएकविंशतिर्भवन्ति ॥ (12)**

**Kapardı** (Sutra 12)

तेन करणेन कृता इष्टका एकविंशति तस्या गार्हपत्यचितौ भवन्तीति शेष ।

**Karavinda** (Sutra 8)

व्यायामश्चतुररत्नि ॥

---

1 पञ्चमम्। 2 शम्या सर्वत्र चात्वालो।

**Karavinda** (Sutra 9 and 10)

एकेषां शाखिनामुभयमपि भवति ।

**Karavinda** (Sutra 11 and 12)

क्रियन्यतेऽनेनेष्टका इति करणम्, तच्च दारुमय लोहमय वा । द्वात्रिंशदङ्गुल आयाम, त्रयोदशाङ्गुलयश्चतुर्विंशतितिलाश्च व्यास । उत्सेधश्च जानो· पञ्चमभाग । एकविंशतिरिति सङ्ख्यामपत्ति ब्रूते । पञ्चचित्तीत्रमित्यादिषु समुदायसख्यावगत्यर्थम् ।।

**Sundararaja** (Sutra 8)

अथाग्निचित्याया—

चतुरत्निर्व्यायामः ।

**Sundararaja** (Sutra 9 and 10)

तत्र चतुरस्रायाम्—

**Sundararaja** (Sutra 11 and 12)

तृतीय द्वात्रिंशदङ्गुलम् । सप्तम दशतिलोन चतुर्दशाङ्गुलम् । ता एकविꣳशतिर्भवन्त्येकैकस्मिन् प्रस्तारे ।

**प्रागायामाः प्रथमे प्रस्तारे ।।** (13)

**अपरस्मिन्नुदगायामाः ।।** (14)

**Kapardi** (Sutra 13 and 14)

प्रागायामाः—प्रागायताः प्रथमे प्रस्तारे । उदगायामाः—उदगायताः द्वितीये प्रस्तारे । एवमुपहिते भेदो[1] न भवति । अनेन ज्ञायते सर्वत्र भेदो वर्जनीय इति । शब्देनैवोक्त भगवता बोधायनेन "सर्वत्र भेदो वर्जनीय." इति । अधरोत्तरयो· पार्श्वसस्थान[2] भेद इत्युपदिशन्तीति । अनेनाचार्येणोक्तमेतत् 'व्यत्यास त्रिनुयात्' इति ।

**Karavinda** (Sutra 13)

उपधीयमाने प्रागायामा स्यु ।

**Karavinda** (Sutra 14)

अपरस्मिन् द्वितीये तु उदगायता भवेयुः भेदाभावाय । उक्त च बोधायनेन 'सर्वत्र भेदान्वर्जयेत्' इति ।

1 च्छेदो ।

2 पार्श्वसपान ।

Sundararaja (Sutra 13, and 14)

इष्टका उपधेयाः ।

मण्डलायां मृदो देहं कृत्वा मध्ये शङ्कुं निहत्यार्धव्यायामेन सहमण्डल[1] परिलिखेत् ॥ (15)

Kapardi (Sutra 15)

यदि मण्डला गार्हपत्यचितिः मृदो मृत्तिकाया 'ह' इति निपातः अत्रेत्येतस्मिन्नर्थे । उल्लेखन कृत्वेति देहबिम्ब श्लक्ष्णीकृत्य तन्मध्ये शङ्कुं निहत्यार्धव्यायामेन मण्डल परिलिखेत् । तद्व्यायाममात्र मण्डल भवति । केचिदत्र सहशब्दश्रवणादतिशयतृतीयेनेति वर्णयन्ति । क्षेत्रसमत्वाय तदनीप्सितमिहाचार्यस्य अर्धव्यायामेनेति वदतः । यदीप्सितमभविष्यत् मृदो देह कृत्वा मण्डल कुर्यादित्येवावक्ष्यत् । उक्त [त्वादेशादन्यदिति । तावती भूमिमिति वक्ष्यति च । कथ सहेत्युच्यते ? यो मण्डल चिकीर्षेत् स एव कृत्वाऽर्धव्यायामेन परिलिखेत् । ह इति निपातः । एवमध्याहृत्य योजनीयम् । अथवा श्रुतिरेवेयमेवभूता ।

तस्मिश्चतुरस्रमवदध्याद्यावत्सम्भवेत् ॥ (16)

तन्नवधा व्यवलिख्य त्रेधमेकैकं प्रधिक विभजेत् ॥ (17)

Kapardi (Sutras 16 and 17)

तस्मिन्निति मण्डल परामृश्यते। तस्मिन्मण्डले चतुरस्रं यावच्छेते तावच्चतुरस्र लिखेत् । समपरिणाह चतुर्धा विभज्य[2] अवान्तरदिक्षु लक्षण कृत्वा तेपु स्रक्तयो यथा भवन्ति तथा चतुरस्रमालिखेत् । दिक्षु चत्वारि धनुस्समा.[3] । तच्चतुरस्र नवधा व्यवलिख्य एकस्य प्रमाणेन समचतुरस्रं करण कारयेत् । त्रेधमेकैक प्रधिक विभजेत् । गमनाय प्रधीयत इति प्रधिकम् ।तच्च पार्श्वधनु । तत्प्रतिकृतित्वात् प्रधिकमित्युच्यते । एकैक प्रधिक त्रिधा कृत्वा करणादि कारयेत् । चतुर्भिस्त्रिंशदङ्गुलाष्टचत्वाङ्गुलाश्चतुरस्रप्रमाणम् । मण्डलमध्ये तस्य तृतीयेनैक करण प्रधिकमध्य द्वाविंशतित्रयोदशाभ्या कारयेत् । त्रिंशदङ्गुलैन त्वेक तक्षयेत्[4] । यथा धनुराकार यथा ज्याफलकयोर्मध्ये तिलोनमङ्गुल भवति तथोन त्रिभिस्त्रयोदशाङ्गु-

---

1 निहत्यार्धव्यायामेन मण्डल । 2 चतुर्धा सम्भुज्य ।

3. धनू षि भवन्ति ।

4. कोशे न दृश्यते ।

लमेक[1] करण अरत्निमात्र तिलाभ्यामेक सप्तविंशत्यङ्गुलमष्टभिस्तिलै-रूनमेक तक्षत् । पूर्वमङ्गुलद्वय अग्निफलकाभ्या सह मध्ये यथा भवति तथा तृतीयेन करणेन विपर्यस्यान्यमेवमिष्टका कारयेत् ।

उपधाने चतुरस्रस्यावान्तरदेशान्प्रति स्रक्तीस्सम्पादयेत् ॥ (18)

**Kapardı (Sutra 18)**

उपधानवाले प्रथमे प्रस्तारे अवान्तरदेशान् कोणदेशान् प्रति चतुर-स्रस्य स्रक्तीस्सम्पादयेत् सयोजयेत् । चतुरस्रे नार्धेष्टकाश्शरते[2]। चतुरस्रे नवेष्टकाश्शेरते । अधिकेषु द्वादश । नवसु द्वादशसु च एकविंशतिर्भवन्ति[3] ।

मध्यानीतरस्मिन्प्रस्तारे ॥ (19)

**Kapardı (Sutra 19)**

द्वितीये प्रस्तारे मध्यानि चतुरस्रे मध्यानि अवान्तरदेश प्रतिसम्पा-दयेत् ।

व्यत्यास चिनुयाद्यावत प्रस्ताराश्चिकीर्षेत् ॥ (20)

**Kapardı (Sutra 20)**

यावत प्रस्तारान्कर्तुमिच्छेत् तावद्व्यत्यास चिनुयात् । य प्रथमस्स तृतीय । पञ्चमश्च यो द्वितीयस्स चतुर्थ ।

पिशीलमात्रा भवन्तीति धिष्ण्याना विज्ञायते ॥ (21)

चतुरस्रा इत्येकेषाम् ॥ (22)

परिमण्डला इत्येकेषाम् ॥ (23)

मृदो[4] देहान्कृत्वा ॥ (24)

**Kapardi (Sutra 22 and 23)**

बाह्वोरन्तराल पिशीलमिति केचित् । मुष्टिकृतोऽरत्नि पिशीलमि-त्यन्ये । प्रादेश पिशीलमित्यपरे । चतुरस्रा धिष्ण्या इत्येकेषा श्रुति । परि-मण्डला इत्येकेषाम् ।

---

1 भवति तयेनर त्रिभिस्त्रयोदशाङ्गुलमेक ।

2 नवष्टकाश्शरते ।

3 नव द्वादश एकविंशतिभवन्ति ।

4 मण्डलाया मृदो ।

पाग्नीध्रीयं नवधा व्यवलिख्य एकस्यास्स्थानेऽश्मानमुपदध्यात् ॥ (25)

यथासंख्यमितरा व्यवलिख्य यथायोगमुपदध्यात् ॥ (26)

Kapardi (Sutras 24, 25 and 26)

मृदो देहानिति प्रदर्शन तस्मिन् चतुरस्रमित्यादे । अश्मनवमा इति सिद्धेऽप्येकस्याः स्थान इति वचन द्व्यैष्टकानामवटेपूपधानस्य ज्ञापनार्थम् । व्यक्तमुक्त बोधायनेन । लोकबाधानि द्रव्याण्यवटेपूपधेयानि । यथायोगमुपदध्यात् अग्निकल्पे यावत्सङ्ख्याका धिष्णिया आम्नाताः तावत्सङ्ख्याकानि तान्यवलिख्य करणानि कृत्वा यथायोग यथा युज्यते तथोपदध्यात् ॥

Karavinda (Sutra 15)

मण्डलाया गार्हपत्यचित्या करण बहुप्रयाससाध्यमिति प्रकारान्तरेणेष्टकासम्पत्ति ब्रूते ।

समे शुचौ क्वचिद्भूतले व्यायाममात्राधिक विस्तार जानुपञ्चमोर्ध्वप्रमाण ससर्जनीयद्रव्यैस्ससृष्टाया सप्रकृष्टायाः मृदो बिम्ब कृत्वा तन्मध्ये व्यायामचतुरस्रक्षेत्र मण्डल कृत्वा तन्मध्ये शङ्कु निखाय अर्धव्यायामेन सह अतिशयतृतीयेन सह मण्डल परिलिखेत् ॥

Karavinda (Sutra 16)

तस्मिन्मण्डले यावत् प्रमाण चतुरस्र कर्तुं शक्य तावल्लिखेत्, एव कृते मण्डलमध्ये समचतुरस्र एक, तत्पार्श्वेषु चत्वारि धनुराकाराणि भवन्ति, तानि प्रधय इत्युच्यन्ते। प्रधिर्नाम रथचक्रावयव । प्रधीयते प्रधाव्यते वाऽनेनेति प्रधि. । तत्सारूप्यात् मण्डलावयवा अपि प्रधय इत्युच्यन्ते ॥

Karavinda (Sutra 17)

तच्चतुरस्र नवधा विभजेत् । त्रिभागावलेखनेन नवधा विभज्य प्रधि त्वेकैक त्रेधा विभजेत् । चतुरस्र नवेष्टक चत्वार प्रधय त्रिधा विभक्ता द्वादशमात्र्य[1] एव विंशतिरिष्टका । मण्डलमध्ये चतुरस्रकरणोऽय प्रयोग. । मण्डलमध्ये प्राच्युदीची सम्पाद्य मण्डललेखाया. परीणाह चतुर्धा सभुज्य सभोगेषु तत्र लक्षणानि कृत्वा लक्षणाल्लक्षण लिखेत् । एव कृते मण्डलमध्ये चतुरस्र भवति । तत्र विष्कम्भार्ध चतु पञ्चदशाङ्गुलयोऽर्धद्वाविंशतितिलाश्च मध्यचतुरस्रकरणे । (सप्त) सप्ततिरङ्गुलयोऽष्टतिलाश्च तस्यास्य

---

1 द्वादशेष्टका

तृतीयो भाग । पञ्चविंशतिरङ्गुलय पञ्चविंशतितिलाश्च करणानि कुर्यात् तान्युच्यन्ते—सर्वत पञ्चविंशतितिलसहित पञ्चविंशत्यङ्गुलमेक करण प्रथिपु । त्रीणि करणानि । प्रधिमध्याश्चतुर्भि । तस्य पार्श्वे चतुर्दशाङ्गुलय सप्तसप्तदश तिलाश्च । पृष्ठ पञ्चविंशतितिलसहित पञ्चविंशत्यङ्गुलमुखम् । एकोनत्रिंशदङ्गुल (पादोनत्रिंशदुङ्गुल) त विष्कम्भार्धप्रमाणया रज्ज्वा कर्कटेन वा विलिख्य तक्षयेत् । प्रध्यन्तयोस्तदेवपार्श्वं पृष्ठ च । मुख तु षट्त्रिंशदङ्गुल, दक्षिणस्य दक्षिण पार्श्वं सव्यस्योत्तरम् । एतान्येव चतुर्णां प्रधीना करणानि । एव चतुष्करणी मण्डलचिति ॥

**Karavinda (Sūtra 18 and 19)**

मण्डलायामुपधानकाले प्रथमप्रस्तारे चतुरस्रस्य स्रक्ती कोटी अवान्तरदेशान् कोणदिश प्रति सयोजयेत् । द्वितीये प्रस्तारे चतुरस्रस्य मध्यानि अवान्तरदेशान् प्रति सयोजयेत् । एव भेदो न स्यात् । भेदो नाम प्रस्तारान्वयगतानामिष्टकाना प्रान्तेषु साम्य, तत्सर्वत्र परिहरणीयमिति तत्र तत्र व्याख्यानवचनात्[1] ज्ञायते । वचनमप्यस्ति सर्वत्र भेदान्वर्जयेदिति ॥

**Karavinda (Sūtra 20)**

व्यत्यस्य व्यत्यस्येत्यर्थ । प्रस्तारा इष्टकास्सघातविशेषाः । ते पञ्चचितीक चिन्वीतेति विहिता यावन्तस्स्यु तावन्तो व्यत्यस्य व्यत्यस्य चिनुयादिति अस्मादेवावधारणात् ज्ञायते, अग्निधर्मा इष्टकायतनोर्ध्वप्रमाणादयोऽत्र प्राप्नुवन्तीति प्रस्तारेषु प्रथमतृतीयपञ्चमास्समा । द्वितीयचतुर्थौ समौ[2] । ननु कथ लभ्यते अतिशयतृतीयेनेति । उच्यते—सह शब्दसामर्थ्याच्चतुरस्रस्य मण्डलकरणे अतिशयतृतीयस्य करणीशेषत्वविधानाच्चातिशयतृतीयेन सह विष्कम्भार्धेन मण्डलकरणम् । एतस्या एव गार्हपत्यचिते चतुरस्रमण्डलतया प्राप्ते क्षेत्रस्य साम्यमभिमतमिति चतुरस्रमण्डलकरणन्यायोऽनुसर्तव्य । चतुरस्रपूर्वकत्व चास्य मण्डलकरणस्य दृश्यते । ततोऽपि स एवानुसर्तव्य[3] ।

---

1 व्याख्यानवचनात्

2 'किंतु प्रथमतृतीये । द्वितीयवदेव द्वितीय । एकस्मिन् प्रथमवदेव' इत्यधिक कोशान्तरे ।

3 'ननु चतुरस्रपूर्वके मण्डले अतिशयतृतीयस्य करणीशेषत्व न मण्डलमात्रकरणे, नैष दोष, यथा चतुरस्रस्य मण्डलस्य चोभयमिह शिष्टम् तथा मण्डलस्य चतुरस्रपूर्वकत्वाति चतुरस्रमूले प्रथमोपादानादवसीयते । मण्डलस्य चतुरस्रपूर्वकत्व प्रयोजन चतुरस्रमण्डलयो क्षेत्रसाम्यमेव, गार्हपत्यचिते' इत्यधिक कोशान्तरे ।

केचित् सहेति द्विपदं कृत्वा सार्धव्यायामेन सम्बन्धयन्ति। तेषामनयोः पदयोः प्रयोजनविशेषान्नैव पश्यामः। तस्मात्सूक्तमतिशयतृतीयेन सहेति ॥

Karavinda (Sūtra 21)

त्रिपद पिशील, मुस्टीकृतोररत्नि. पिशीलमित्येके। बाह्वोरन्तराल पिशीलमिति बोधायनः। धिष्ण्या अग्नय. 'अग्नयो वा अथ धिष्ण्या.' इतिदर्शनात्, तच्छब्देन तदायतनानि लक्ष्यन्ते। अग्नीनामायतनभुव. पिशीलमात्राणि भवन्ति। अपवादाभावे आकारभेदेऽपि क्षेत्रस्य साम्य भवत्येव ॥

Karavinda (Sūtra 22 and 23)

गतमेतत्। अत्र साग्निचित्ये क्रतौ विशेषमाह।

Karavinda (Sūtra 24 and 25)

मृदो देहान् कृत्वा मृत्सम्बन्धिनो देहानुपचयान् बिम्बानि कृत्वा आग्नीध्रीयमेक नवधा प्राक् वैनोदक्त्वेन च त्रिधा व्यवलिख्य मध्यस्थमेकमेकेनाश्मना उपदध्यात्[1]। अन्यास्तत्प्रमाणाभिरिष्टकाभिरितरान् होत्रीयादीना मृदो देहान् यथासङ्ख्यं यस्य यस्य धिष्ण्यस्याग्ने या या सङ्ख्या द्वादश षोडश एकविंशति चतुर्विंशतिमित्याद्या तया सङ्ख्यया त त व्यवलिख्य यथायोग यत्र यत्र देशे याया इष्टका युज्यते तत्र तत्र ता ता इष्टकामुपदध्यात्। द्वादश षोडश एकविंशति चतुर्विंशति वा होत्रीये, एकादश ब्राह्मणाच्छंसीये, षट् मार्जालीये अष्टावष्टावन्येषु धिष्ण्येषूपदधातीति विज्ञायते इति। अन्यधिष्ण्याः प्रशास्त्रीयपोत्रीयनेष्ट्रीयाच्छावाकीयचात्वालशामित्रावभृथा। करणानि वा कृत्वेष्टका कुर्यात्। चतुरस्रपक्षे सर्वतः प्रादेशा होत्रीयस्य, द्वादशेश प्रादेशे द्वे नवाङ्गुले द्वे षोडशपक्षे सर्वतो नवकानि, एकविंशतिपक्षे नवके[2] द्वे सप्ताङ्गुलय सप्ततिलाश्च[3] द्वे, तदेक सर्वत सप्ततिलास्सप्ताङ्गुलय[4] एक, अत्र चतुरस्रमेकत. पञ्चधा विभज्य चतुरो भागान् प्रथमेन चतुर्धा विभजेत्। द्वितीयेनैक पञ्चधा। चतुर्विंशतिपक्षेऽप्येते एव करणे। तत्र पूर्ववत् पञ्चधा विभज्य चतुरो भागान् सप्ततिलसप्ताङ्गुलेन[5] पञ्चधा विभजेत्। इतरेणैक चतुर्धा। ब्राह्मणाच्छंसीयस्याष्टौ होत्रीये द्वादश्यः, तिस्र

1. तन्मध्यस्थमेक भागमपोह्य उपधानकाले तत्स्थाने तत्प्रमाणमश्मानमुपदध्यात्।

2 नवाङ्गुले

3 पञ्चविंशतिलाश्च

4. पञ्चतिलासप्ताङ्गुलय

5. पञ्चतिलसप्ताङ्गुलेन

आग्नीध्रीया, मार्जालीयस्यैकत प्रादेशा, अन्यतोऽध्यर्धा षट्। अन्येषा पोत्रीयादीना आग्नीध्रीयेष्टका षण्मार्जालीये अष्टरे द्वे। मण्डलपक्षे करण-बाहुल्यप्रसङ्गाद्यवलेखनमेवोच्यते। आग्नीध्रीयस्य प्राक्चोदक्च त्रेधा विभाग। होत्रीयस्य द्वादशपक्षे एकतस्त्रिधा विभागोऽन्यतश्चतुर्धा। षोडश पक्षे सर्वतश्चतुर्धा। एकविंशतिपक्षे त्वेकत पञ्चधा कृत्वा चतुरो भागाश्चतुर्धा विभज्य पञ्चम पञ्चधा विभजेत्। चतुर्विंशतिपक्ष त्वेकत पञ्चधा विभज्य चतुरो भागान् पञ्चधा कृत्वाऽन्य भाग चतुर्धा विभजेत्। एकादशपक्षे त्वेकतश्चतुर्धा विभज्य त्रीन् त्रेधा कृत्वा अन्य द्विधा विभजेत्। षट्पक्षे त्वेकतस्त्रिधा कृत्वाऽन्यतो द्विधा विभजेत्। अष्टपक्षे चैकतस्त्रिधा विभज्य द्वौ भागौ त्रिधा कृत्वाऽन्य द्विधा कुर्यात्। धिष्ण्यानामेकचितीकत्वात् सुकरत्वाच्चैष एव प्रकारो वरमित्याचार्यो[1] मन्यते। तत्र श्लोका।

व्यायाममात्रे चित्येऽग्नौ करण दारव भवेत्।
लोह वा तच्चतुर्भिस्स्यात्[2] फलकाभिस्तदुच्यते॥
द्वात्रिंशदङ्गुलायाममङ्गुल्यस्स्युस्त्रयोदश।
चतुर्विंशतितिलविस्तार[3] करणे[4] भवेत्॥
मण्डलात्मनि तत्र स्यात्करण च चतुर्विधम्।
मध्यमेक[5] पृथौ त्रीणि तान्युच्यन्ते यथाक्रमम्॥
सपञ्चविंशतितिला अङ्गुल्य पञ्चविंशति।
सर्वत करण त्वेक मध्येऽन्ये (ते) नेष्टकाकृति॥
प्रधिषु त्रीणि तानि स्यु प्रध्यन्ते करण[6] त्रिभि।
फलकै प्रति (धि) मध्यीय चतुर्भि करण भवेत्॥
पृष्ठ पञ्चतिलोपेता अङ्गुल्य पञ्चविंशति।
पार्श्वे चतुर्दशाङ्गुल्य तिलसप्तदशान्विता॥
सपादोनतिलस्त्रि (त्रि) शदेकोनत्रिंशदङ्गुलम्।
मुख स्यात्प्रधिमध्यीयकरणस्यान्तयोरपि[7]॥
पृष्ठपार्श्वेषु तत्रेमे मुख षट्त्रिंशदङ्गुलम्।
अन्तयोर्यत्र यस्य स्यात्पार्श्वं नान्यस्य तत्र तत्॥
करणाना मुखान्यत्र विष्कम्भार्धप्रमाणया।
आलिख्य तक्षयेद्रज्ज्वा कर्कटेनाथवा लिखेत्॥

1 प्रकार इत्याचार्यो।
2 सकलैश्च। फलकैस्तदिहो।
3 विहार।
4 करणे।
5 मध्यएक।
6 प्रध्यन्तकरणे।
7 करण स्यात्तयोरपि

षट्त्रिंशदङ्गुलायामा धिष्ण्यास्सर्वतस्समा ।
तत्रतत्र यथासङ्ख्यमुच्यन्ते करणान्यथ ।।
प्रादेशमेकतो यस्मादन्यतोऽष्टादशाङ्गुलम् ।
मार्जालीयेनेन कृता धिष्ण्ये षट्स्युरिष्टका ।-
प्रादेशस्सर्वतो यस्मादाग्नीध्रीये तु तत्कृता ।
द्वादशाङ्गुलमेकत्र यस्यान्यत्र नवाङ्गुलम् ।
होत्रीये द्वादशोपेता तत्कृता द्वादशेष्टका ।
नवाङ्गुल सर्वतस्स्याद्धोत्रीय[1] तेन षोडश ।।
तिलपञ्चकसयुक्तास्सप्ताङ्गुलय एकत ।
नवाङ्गुल चान्यतस्स्यात्करण त्वेकविंशतौ (कौ) ।।
तिलसप्त (पञ्च) कसयुक्ता अङ्गुल्यस्सप्त सर्वत ।
इदमत्रैकविंशे स्याच्चतुर्विंशेप्युभे इमे ।।
प्रथमे चैकविंशे स्यु षोडशान्येन पञ्चकम् ।
चतुर्विंशे द्वितीयेन विंशतिस्त्वन्यदन्यत ।।
या प्रादेशे (श) नुवाङ्गुल्यस्त्वष्टौ तास्तिस्र एव च ।
प्रादेशाब्राह्मणाच्छसिधिष्ण्ये त्वेकयुग्दश ।।
प्रादेशाष्षट्पदाध्यर्धद्वैचे त्यष्टके विधि ।
पोत्रियादौ यथायोगमुपधान तु सर्वत ।।
एकचित्याधिष्ण्यानां भेदस्यानवकाशत ।
वैषम्येणैव सङ्ख्याना करणानेकता भ (वे)यात् ।।
व्यवलिख्य यथासङ्ख्यमुपदध्यादिहेष्टका ।
यथायोगमिति त्वेवमाचार्यो मण्डलेऽब्रवीत् ।।
अधिकाशेन कर्णस्य हृते कर्णयुगे भुवा ।
हृते फलेन (फलोने) हीनाया युजो वा यद्भुवो दरम् ।।
तस्य वर्गस्य कर्णस्य वर्गात्तु परिशोधिते ।
परिशिष्टस्य मूल तु लम्बक तद्विदो विदु ।।
वेदिप्राचीमिता रज्जुरन्तरालोत्कटा कृता ।
दक्षिणोत्तरमायम्य वेदे पूर्वापरार्धयो ।।
वि (द्वि) तृतीयौ तु विज्ञेया प्रागुद्वदि स्तकर (त्तरम्) ।
मध्यदेशोत्रिमध्य तु वह्ने प्राच्यप्रतीच्ययो
लक्षणेन निमित्तार्थं (द्वि) विकृतीये त्वपायते ।
पश्चिमे चोत्तरश्चापि निमित्त स्यादपायते ।।
विपयस्य तु पूर्वत्र निमित्ते दक्षिणोत्तरे ।

1 सर्वतोयद्धोत्रीये

कृत्वा विष्कम्भ तुर्ये स्यादुभयस्यापि[1] लक्षणम् ॥
तयोर्लक्षणयोर्लेखा रज्जु वा प्राङ्निपातयेत् ।
लेखाया दक्षिण ग्राह्य मण्डलार्थं त्यजेदुदक् ॥
परिणाहे चतुर्था पट्सभुग्ने भुग्नलाञ्छने[3] ।
अङ्कादङ्कगता रेखा चतुरस्रस्य साधिका ॥
विष्कम्भार्धीयवर्गस्य द्विगुणस्यैव[4] मूलत ।
मण्डले चतुरस्रस्य करणी परिकल्पना (कल्पिता) ।'
यद्वा विष्कम्भमूलार्धं (वर्गार्धं) मलेन करणीकृति ·
मण्डले चतुस्ररस्य यावत्सभवजन्मन ॥
अक्ष्ण्यावस्थिता रज्जु यावत्सभवजन्मन ।
चतुरस्रस्य विष्कम्भ मण्डलस्य वदन्ति हि ।
विष्कम्भस्यान्तरा वर्गे विष्कम्भार्धस्य वर्गेन
शोधिते परिशिष्टस्य मूल स्याद्दललक्षणम् ॥
विष्कम्भस्याद्दलग्रस्तचापज्यार्धस्य वर्गके ।
पूर्वज्यादलवर्गे तु विष्कम्भार्धस्य वर्गत ॥
शोधिते परिशिष्टस्य मूल तद्धनुषश्शर ।
सज्यावर्गष्यड्गुणेषु वर्गश्चापस्य वर्गक, ॥
शराहतस्तु कोदण्डो दलितो धनुष फलम् ॥
विष्कम्भ आत्मद्विगुणेन (ऽपि) योज्य
स चात्मविंशेन स पञ्चमास्याम् ।
सपञ्चविंशेन च तौ समेतौ
व्यासेन सैषा परिणाहक्लृप्ति ।
नेमिद्विरेखादशधात्र कार्य
स्तद्भाग एकश्च तथा द्विधा च ।
व्यामन्त्वराणा परिधेस्सह स्यु
भागानतुर्येण स सप्तमेन ॥

चतुरस्र[1] सविशेषेण सविष्कम्भार्धेन चतुस्तिलोनेनाष्टपञ्चाङ्गुलेनावदध्यात्। चतुरस्र नवधा कृत्वा प्रधिक त्रेधा विभजेत्। प्रधिरेव प्रधिकः। प्रधिश्चक्रपर्यन्त.। *अथवा करणैरेवेष्टकाः कुर्यात्। त्रीणि करणानि—सम*चतुरस्र प्रधिमध्य प्रध्यन्तमिति। अत्र समचतुरस्र द्वाविंशत्यङ्गुल संकविंशतितिलम्। प्रधिमध्यस्य पार्श्वमान्याः प्रमाणमेतदेव। तिर्यङ्मान्या दशतिलोनत्रयोदशाङ्गुले एक पार्श्व फलक धनुराकारं तक्षत्। यथा अङ्गुलिः द्वादशतिलाश्च शरप्रमाण भवति। प्रध्यन्त तु प्रमाणम्[2]। तस्यापि चतुरस्रवदेक पार्श्वं, त्रयोदशाङ्गुल दशतिलोनमपर, षड्विंशक तिलद्वयोनमपर[3], तद्धनुरिव तक्षेत्, यथा अङ्गुलि सप्तविंशतिश्च तिलाश्शरो भवति॥

Sundararaja (Sutra 18, 19 and 20)

मण्डलचतुरस्रयोस्साधारणमिद भेदपरिहाराय, अनेनैव, ज्ञायते सर्वत्र भेदो वर्जनीय इति। *तथाच बोधायनः—*

भेदान् वर्जयेदधरोत्तरयो. पार्श्वसधान भेद इत्याचक्षते, तदाद्यन्तेषु न विद्यते–इति

*Sundararaja (Sutra 21)*

*पिदीलं पञ्चधा वर्णयन्ति—बाह्वोरन्तरालमित्येकम्,* कृतमुष्टिमरत्नि (कृतमुष्टिररत्नि.) द्वितीयम्। अकृतमुष्टिमरत्नि तृतीयं, द्वात्रिंशदङ्गुल चतुर्थं, षट्त्रिंशदङ्गुल पञ्चममिति।

Sundararaja (Sutra 22,23 and 24)

तान् कुर्यादिति शेषः।

Sundararaja (Sutra 25 and 26)

इतरान् धिष्ण्यान् यथासख्य *व्यवलिख्य* द्वादश षोडशेत्यादि होत्रीये, एकादश ब्राह्मणाच्छंसीये, *पञ्चमार्जालीये, अष्टावष्टावन्येष्विति। तेषा च* यथासंभव विभागा इति केचिदाहु। समचतुरस्राणा धिष्ण्यानां समचतुरस्रा एवेष्टकाः कार्या चतुरस्रमादेशादन्यदिति। तत्रारत्नीविष्कम्भाणां धिष्ण्यानामिष्टका *अष्टाङ्गुला आग्नीध्रीयस्य। होत्रीयस्य द्वादशकस्य मध्ये* चतस्रश्चतुरङ्गुलाः। परितोऽष्टावङ्गुला। षोडशिके षडङ्गुलास्सर्वा।

---

1. *चतुरस्रार्धेन।* 2 *प्रध्यन्त तु त्रिकोणम्।*
3. षड्विंशतिक अष्टाविंशति तिलद्वयोनमपर।

एकविंशकस्य मध्ये नव चतुरङ्गुला, परितो द्वादश षडङ्गुला । चतुर्विंशकस्य कोणेऽष्टाङ्गुला,[1] शेषो विंशतिश्चतुरङ्गुला । ब्राह्मणाच्छंसीये सप्त षडङ्गुला, चतस्रो नवाङ्गुला । मार्जालीये पञ्चाष्टाङ्गुला एका षोडशाङ्गुला । अष्टकानामेकाऽष्टादशाङ्गुला, सप्त षडङ्गुला । अन्ये त्वाहु — यथासङ्ख्यमितरानिति वचनात् सर्वा इष्टकास्तुल्यक्षत्रा एव । तत्र समचतुरस्राणामेव कर्तुमशक्यत्वाद्दीर्घचतुरस्रा अपि क्रियेरन्निति । तन्मतेऽप्याग्नीध्रीयस्य पूर्ववत् । होत्रीयस्य द्वादशकस्येष्टका अष्टाङ्गुलायामा षडङ्गुलव्यासा । षोडशकस्य पूर्ववदेव । एकविंशकस्य तु अष्टाङ्गुलायामा अरत्निस(प्त) मव्यासा । (चतुर्विंशकस्य षडङ्गुलायामाश्चतुरङ्गुलव्यासा । मार्जालीयस्य प्रादेशायामा अष्टाङ्गुलि यासा । अष्टकानाप्रादेशायामाष्षडङ्गुलव्यासा ) ब्राह्मणाच्छंसीयस्य द्वे करणे अष्टाङ्गुलायाम साष्टादशतिलषडङ्गुलव्यासमेकं करणम् । तेन तिस्र इष्टकाष्षडङ्गुलव्यासा[2] भवन्ति । नवतिलोननवाङ्गुलायाममपरम् । तेन अष्टाविष्टका । अन्येषु धिष्णीमात्रेष्वेतदनुसारेणेष्टका द्रष्टव्या ॥

अथ परिमण्डलाना षट्त्रिंशदङ्गुलविष्कम्भाना आग्नीध्रीयस्य मध्ये प्रादेशव्यास परिमण्डलमश्मान निधाय परितोऽष्टाविष्टकास्तासां करणं पार्श्वे द्वादशाङ्गुले, चतुर्दशाङ्गुलमष्टतिलोनमेकं तिर्यक्फलक, तद्धनुरिव तक्षेत्, यथा अङ्गुलि द्वादश तिलाश्च शरो भवति । सविंशतितिल चतुरङ्गुलमन्यत्तिर्यक्फलक, तच्च धनुरिव तक्षत्, अन्तर्वक्र तु भवति यथा पञ्चदशतिलाश्शर । एवमिष्टका अन्येषा धिष्ण्याना त्रीणि करणानि । सर्वेषा च द्वे द्वे फलके अष्टादशाङ्गुले । होत्रीयस्य द्वादशकस्य तृतीय फलक नवाङ्गुल सैकादशतिल, तद्धनुरिव तक्षत् यथैकविंशतितिलाश्शर एव षोडशकादीना च द्रष्टव्यम् । ब्राह्मणाच्छंसीयस्य तृतीय फलक दशाङ्गुल सपञ्चदशतिल[3], तद्धनुरिव तक्षत् पञ्चविंशतितिलाश्शर ,[4] सप्ततिलमिति-क्वचित् । मार्जालीयस्य तृतीयमप्यष्टादशाङ्गुल, तदर्धधनुरिव[5] तक्षेत्, द्व्यङ्गुल चतुर्दशतिलाश्शर । अष्टकाना तृतीयफलक चतुर्दशाङ्गुलमष्टतिलोन तद्धनुरिव तक्षेत् अङ्गुलिर्द्वादशतिलाश्च शर । अन्येषा च धिष्णीनामेतदनुसारेण द्रष्टव्यम् ॥

॥ इति सप्तम खण्ड ॥

इति द्वितीय पटल ॥

---

1 चतुर्विंशके मध्ये चतस्रोऽष्टाङ्गुला

2 ष्षडङ्गुलव्यास नवतिलोन ।

3 सपञ्चतिल ।

4 तिलाश्शर । मार्जा ।

5 शाङ्गुल धनुरिव

# तृतीयः पटलः

## अथ अष्टमः खण्डः

भवतीव खलु वा एष योऽग्निं चिनुते इति विज्ञायते ।। (1)

वयसां वा एष प्रतिमया चीयत इत्याकृतिचोदनात् ।। (2)

प्रत्यक्षविधानाद्वा ।। (3)

यावदाम्नानेन ।। (4)

वेणुना चतुरस्रे आत्मनि पुरुषानवमिमीते ।। (5)

**Kapardi** (Sutra 1, 2 3, 4 and 5)

उक्तानि हविर्यज्ञाना विहरणानि । सौमिकानि च साग्निचित्यस्य क्रतोरग्निक्षेत्रमानमिष्टकाना करणानि उपधानविधिश्च नोक्त । तद्वक्तु-काम प्रस्तौति—

प्रस्तावमात्रमनया श्रुत्या क्रियते न फलविधान । विधिविभक्तेर-भावात् । नित्योऽग्निरुत्तरवेदिवत् । अग्निष्टोम उत्तरवेदिरुत्तरेषु क्रतुष्वग्नि' इति नित्यवचनात् ।। यदि प्रस्तावोऽनया श्रुत्या स्वीक्रियते गार्हपत्यचिते पूर्वमेव प्रस्तावो न कर्तव्य । सत्यमेतत् । इह प्रस्तावचनस्येद प्रयोजनम्-वक्ष्यमाणानि धर्माणि महाग्नेरेव यथा स्युरिति । कानि पुनस्तानि? जानुद-घ्नादयो महाग्नेरेवेति कात्यायनीये शुल्बे महाग्नेरेवैते धर्मा इति स्पष्टमु-क्तम् । किं चास्येहाग्निशब्देन[1] निरुपपदेन चोदिता धर्मा यथा स्युरिति । यथा–'त वा एत यजमान एव चिन्वीत' इति यजमानो महाग्नेरेव कर्ता न गा-र्हपत्यादे. । गार्हपत्यधिष्ण्यानामध्वर्युरेव कर्ता । पश्चाद्विधातव्याना धिष्ण्याना पूर्वं विधानस्यैतत्प्रयोजनम् । योऽग्नेश्चेता स भवत्येव । यद्यपि बहवो भ्रातृव्या इति क्रियतेऽनया श्रुत्या । वयसा पक्षिणा एषोऽग्नि प्रतिमया प्रकृत्या चेतव्य इति आकृतेस्स्वरूपस्य विधान क्रियते । स चोत्पतता छाय-

1 किंचास्यैवाग्निशब्देन ।

येत्यर्थं इति बोधायनेनोक्तम्। वैशब्दो निश्चये। अमावप्याचार्यो वक्ष्यति 'वक्रपुच्छो व्यस्तपक्ष' इति। तस्माच्छ्येनचिदेव प्रथम। शुल्बान्तरे चोक्त 'श्येनचिदग्नीना प्रथमोऽग्नि' इति। यदि श्येनो नित्य कथ स्वर्गकाम इति? यूपद्रव्यवत्। यथा खादिर स्वर्गकामस्येति खादिरस्य नित्यत्व काम्यत्व च। प्रत्यक्षविधानाद्यावदाम्नायेन। वाशब्द पक्षव्यावृत्तौ। तेन नैवाऽकृतिचोदना नापि श्येत प्रकृति। कुत ? प्रत्यक्षविधानात्। प्रत्यक्षमेवात्र विधीयते। पक्षीभवतीत्यारभ्य पक्षपुच्छानामामपि प्रमाण विहितम्। तेन विरोधात्। ननूक्तमाकृतिचोदनति, नैषा चोदना, नापि विधि, विधिविभक्तेरभावात्। चीयत इति निर्दिश्यते न चिनुयाच्चेतव्यमिति वा। विध्यन्तरशेषभूतत्वाच्च पश्यामो न विधायिकेति। 'ब्रह्मवादिनो वदन्ति न्यङ्ङग्निश्चेतव्या 3 उत्ताना 3 इत्यारभ्य प्राचीनमुत्तान पुरुषशीर्षमुपदधाति' इति पुरुषशिरस उपधान विधीयते। तस्य शेषभूतमिद न विधायकम। श्येनचिदग्नीना प्रथम इति पिठकश्येनमधिकृत्यैतदुक्त पुरुषमानपक्षपुच्छस्य समाख्या श्येन इति। तस्मादविरोध। यावदाम्नान तावदेव सारूप्य। पक्षपुच्छवत्तया सारूप्य गृहीत्वा वयश्शब्दो वर्तते। तस्मात्पुरुषमात्रपक्षपुच्छवानग्निरिति तामेव प्रकृति निश्चित्य अन्ये आकृति[1]विशेषा वक्रपक्षा[2]दय काम्या इति सिद्धम्। वक्ष्यति 'काम्या गुणविकारा' इति। वेणुना चतुरस्र आत्मनि पुरुषानवमिमीते-अग्निकल्पे उक्तलक्षणेन वेणुना मिमीते—मिनोति स्थण्डिलार्धं क्षेत्र वक्ष्यमाणेन मार्गेण सर्वतो द्विपुरुष आत्मा द्वाभ्या चत्वारीति वचनाच्चत्वारि च पुरुणक्षेत्राण्यात्मनि—

पुरुष दक्षिणे पक्षे पुरुष पुच्छे पुरुषमुत्तरे ॥ (6)

**Kapardi (Sutra 6)**

पुरुषमेक दक्षिणे पक्षे पुरुष पुच्छे पुरुषमुत्तरे—एव त्रीणि चतुरस्राणि पुरुषप्रमाणानि, आत्मना सह[3] सप्त पुरुषक्षेत्राणि ॥

अरत्निना दक्षिणतो दक्षिण पक्ष वर्धयति ॥ (7)

एवमुत्तरत उत्तरम् ॥ (8)

**Kapardi (Sutra 7 and 8)**

अरत्निप्रमाणेन दक्षिणत दक्षिण पक्ष वर्धयति—दीर्घं करोति उत्तरतश्चोत्तर पक्षम्[4] ॥

---

1 प्रकृति॰—B।  2 वक्रपक्षा॰—A।

3 चतुरस्राणि आत्मना सह। पुरुष—B।

4 वत्यवर्धयमित्यादिषु।

Kapardi (Sutra 9)

प्रादेशेन वितस्त्या वा पश्चात्पुच्छम् ॥ (9)

*द्वादशाङ्गुलेन त्रयोदशाङ्गुलेन वा पश्चात्पुच्छं*[1] *वर्धयेदिति शेषः ।* एवमर्धाष्टमानि पुरुषक्षेत्राणि भवन्ति ।

Karavinda (*Sutra 1*)

अग्न्याधेयप्रभृति सोमान्तानां केवलविहारा उक्ताः । इदानीं साग्निचित्येषु क्रतुषु विहारविशेषविधित्सयाऽग्नेश्चयनविधायिकां श्रुतिं पठति ॥

भवतिस्समृद्ध्यर्थे । खल्विति शब्दो निपातसमुदायो वाक्यालङ्कारादौ वर्तते । 'रथ इव खलु वै'[2] तत् योऽग्निं चिनुते—अग्निं चयनेन संस्करोति स समृद्धो भवतीति विज्ञायते[3] ॥ [4]ननु मन्त्रस्य विधेः स्तावकतयाऽर्थवादोऽयम्। चिनुत इति वर्तमाननिर्देशः । *अतः नयमेव अग्निसंस्कारभूतस्य चयनस्य* विधायिका श्रुतिः कल्प्यते। सत्यम्, तैत्तिरीयके अस्या एव श्रुतेर्मुख्यत्वादप्राप्तार्थत्वेनानुवादत्वासम्भवाच्चयनस्याग्नेः विधायिका श्रुतिः कल्प्यते । अनारभ्यसम्बन्धान्नित्येति च । ननु चयनवद्भवत्यर्थोऽपि विधेयः । न विधेयः, कुतः, चयनस्याग्निसंस्कारत्वेन तत्फलानुवादासम्भवात् ॥

Karavinda (Sutra 2)

वयांसि—पक्षिणः श्येनादयः । प्रतिमा—प्रतिकृतिः तस्मात्सदृशमाकृतिरूपं चोदयतीति चोदना विधायिका श्रुतिः । एषोऽग्निर्यथा श्येनाकृतिर्भवति[5] तथा चेतव्य इत्यर्थः । शुल्बान्तरे च—श्येनचिदग्नीनां प्रथमोऽग्निरित्युक्तम् । वक्ष्यति च श्येनं *प्रकृत्य वक्रपक्षो व्यस्तपुच्छो भवतीति ।* तस्माद्वक्रपक्षादिविशिष्टश्येनोऽग्निः प्रकृतित्वेन कार्यः । स नित्यः । यूपप्रकृतिभूतखादिरादिवत् स्वर्गकामस्यापि भविष्यति ।

Karavinda (*Sutra 3 and 4*)

वाशब्दः पक्षव्यावृत्तौ । नैतदस्ति वयसां वा एष प्रतिमया चीयत इति एषा[6] श्येनाद्याकृतिविशेषचोदनेति । कुतः, प्रत्यक्षविधानात् । यतः पक्षी

---

1 उत्तरेण वा (?), उत्तरतश्चोत्तरं पक्षम् ।

2 ब्रह्मवर्चसमित्यादिषु ।

3 गतः ।

4 ननु प्रकुर्वन्नेहास्वर्गकामन् इत्यादि । प्रकुर्वन् हीत्यादि ।

5 *श्येनसदृशाकृतिः ।*

6 *मग्ने. ।*

भवतीत्यादिना वाक्येन व्यायाममात्रपक्षपुच्छवदाकृति प्रत्यक्षमेवाग्नेर्विधीयते। अत वयसा वा एष प्रतिमया चीयत इति वयस्सादृश्यमात्रमभिदधाति, नैषा श्यैनाकृतिचोदना भवितुमर्हति। किञ्च चीयत इति वर्तमानार्थनिर्देशादस्य वाक्यस्य पुरुषशीर्षोपधानविधिवाक्यशेषत्वाच्च नैषा विधायिका। यच्चोक्त शुल्बान्तरे—'श्येनचिदग्नीना प्रथमोऽग्निरित्युक्तमिति' नाय दोष। तत्र हि व्याममात्रपक्षपुच्छोऽग्निरित्यपि श्येन इत्युच्यते। तस्मादाम्नानेन वेदेन व्याममात्रपक्षपुच्छवत्ताया यावत्सादृश्य विहित तावदेव सपादयितव्य। तस्मात्पुरुषमात्रपक्षपुच्छवानग्नि प्रकृतिर्नित्यश्चेति स्थितम्। अस्याग्नेस्स्वरूपमाह।

**Karavinda** (Sutra 5 6 7 8 and 9)

वक्ष्यमाणप्रकारेण वेणुनाऽऽत्मनि चतुर पुरुषानवमिमीते अवमानमपि विमानमेव। इयति शक्ष्यामीति[1] त्वा अवमाय यजन्तइति दर्शनात्। सर्वतो द्विपुरुष आत्मा ताभ्या[2] चत्वारि पुरुषक्षेत्राण्यात्मा। एव पक्षयो पुच्छे च पुरुषसम्मितानि त्रीणि। एव सप्त पुरुषक्षेत्राणि अरत्निना दक्षिणतो दक्षिण पक्ष प्रवर्धयति दक्षिणतो—दीर्घं कुर्यात्। एवमुत्तरत उत्तरमपि पक्षमुत्तरतो पक्ष दीर्घं कुर्यात्। प्रादेशेन वितस्त्या वा पश्चात्पुच्छ। प्रादेशेन वितस्त्या वा पश्चात्पुच्छ। प्रादेशोऽङ्गुष्ठप्रदशिनीभ्या परिमित वितस्तिरङ्गुष्ठकनिष्ठिकाभ्या तयोरन्यतरेण पुच्छ प्रतीचीन वर्धयेत्। एवमर्धाष्टमानि पुरुषक्षेत्राण्यग्ने क्षत्र भवति।

**Sundararaja** (Sutra 1 and 2)

वेदेर्विमान सौमिक्या क्रमैर्द्विद्वादशाङ्गु लै।
आदित्रिसप्तसु द्वित्रिचन्द्रद्वियुगभूमिषु॥ 1 ॥
भूत्रिभूद्विशरैवेषु शङ्कवो दश पञ्च च।
सषट्त्रिलारत्निषष्ठोनाष्टत्रिंशदरत्निका ॥ 2 ॥
विमानरज्जुश्चिह्न स्यात्तस्यास्सप्तदशस्वथ[3]।
पाशौ कार्यौ तयोर्मध्ये प्रक्रमा द्वादश स्मृता ॥ 3 ॥
षट्त्रिंशिका वा रज्जुस्स्याद्विमाने द्व्यष्टलक्षणा।
श्रोणी पञ्चदशस्याथ मदोऽनन्त्यतुर्ययो ॥ 4 ॥
दशस्वष्टसु तत्कोणास्तृतीयऽरत्निमात्रका।
धिष्ण्या प्रादेशान्तराला मार्गीय तु तुरीयके ॥ 5 ॥

---

1 शक्ष्यामीति। 2 ताभ्यां।

3 विमानरज्जुचिह्न स्यात्तस्या सप्तदशस्वथ।

रुद्रेषु सप्तदशसु शङ्कू पादोनितेष्विह ।
कार्यो हि पञ्चमेऽर्केषु मार्जालाग्नीध्रधिष्णियौ ॥ 6 ॥
सप्तमे प्राग्वदाग्नीध्र धान सार्धचतुष्ठये ।
उत्करो दशमे शङ्कौ मनुपूत्तरत क्रमे ॥ 7 ॥
ऊवध्यगोहखननस्थानमेकादशे पुन ।
हविर्धानि प्राग्वदत्र पाशयोर्मध्ययोऽधिक ॥ 8 ॥
षोडशस्वधहीनेषु शामित्रो द्वादशे भवेत् ।
शङ्कवोरुत्तरवेदिरग्धाद्द्वयोस्सार्ध उपान्त्ययो ॥ 9 ॥
अन्तिमे द्वादशस्वमौ चात्वालोऽस्मादुदक्क्रमे[1] ।
पशुव धोऽस्तु चात्वालस्सोमेऽपीत्यवधार्यते ॥ 10 ॥
मानान्तरमनुक्तं वैव व्याख्यात इति कीर्तनात् ।
शम्यामात्रन्तु सर्वत्र व्यक्त बोधायनोऽब्रवीत् ॥ 11 ॥
अन्यथाऽग्नौ विरोधस्स्यान्मान चान्यत्र विद्यते ।
उत्तरेऽस्मे महावेद्यामास्ताव परिकीर्तित ॥ 12 ।
दक्षिणे तु हविर्धानि पश्चात्त्रीन् प्रक्रमास्त्यजेत् ।
पादोनद्वितय पार्श्वेऽरत्नौ तारवास्स्मृता ॥ 13 ॥
अर्धप्रादेशतस्तेषा भ्रमरा कोणशङ्कुषु ।
अग्रे णोपरवारत्यक्त्वा पादोनप्रक्रमत्रयम् ॥ 14 ॥
शम्यामात्रश्चतुस्स्रक्ति खरश्लिष्टस्तु[2] सञ्चर ।
औदुम्बरसदोमध्ये[3] पृष्ठ्या दक्षिणत क्रमे ॥ 15 ॥

प्रतिमया वयसा उत्पतता छायया । तथा च बोधायन —
'वयसामुत्पतता छाययेत्ययं'

इति । अनेन श्येनचितिर्नित्येति ज्ञायते । मन्त्रवर्णाश्च भवन्ति, सुपर्णोऽसि गरुत्मान् इत्यादीनि । लिङ्गानि च पुच्छाच्छिरोऽधिकृपति शिरसि पक्षयोरित्यादीनि । न हि चतुरस्रे शिरोऽस्ति ।

**Sundararaja (Sutra 3)**

पक्षीभवति व्याममत्रो पक्षौ च पुच्छ च भवतीत्यादि प्रत्यक्षविधानाद्वा आकृति प्रत्येतव्या । अनेन चतुरस्रोऽग्निर्विधीयते । स च सर्वाग्नीनां प्रकृतिरिति । तमेव तावदाह—

1 चत्वारोऽस्मादुदक्क्रमे ।
2 खर शिष्टस्तु ।
3 औदुम्बरी सदोमध्ये ।

Sundaraaja (Sutra 4 5 and 6)

यावदाम्नातेन यथासमाम्नातेन पुरुषमात्रेण वक्ष्यमाणेन पञ्चारत्निना । एवं केवलसप्तविधाग्नेर्मानमुक्त, पक्षान्तरमाह—

वितस्तिर्द्वादशाङ्गुला । यथोक्तं कात्यायनेन—

'पञ्चारत्निर्दशवितस्तिर्विंशतिशताङ्गुलश्च पुरुष'

इति । वितस्तिर्द्वादशाङ्गुलेत्येव नैघण्टुका । प्रादेशेनेत्यस्य व्याख्यानं वितस्त्येति । प्रादेशशब्दार्थस्य विशयित्वात् वितस्तिरेवात्र प्रादेशशब्देन ग्राह्या, नतु प्रसारिते अङ्गुष्ठप्रदेशिन्यावित्यर्थ । अथवा वाजसनेयके 'वितस्त्या पुच्छं' इति श्रुतत्वाद्वितस्तिशब्दस्यैव प्रसिद्धतरेण प्रादेशशब्देन व्याख्यानम् । वाशब्दो वाक्यार्थेऽवमवध्यते । तेन सर्वमिदं विकल्प्यते । तथाहि—पुच्छवृद्धेस्तावद्वैकल्पिकत्वमवगतम्, तैत्तिरीयके प्रवृद्धेरनुक्तत्वात् । व्यनक्ति च कात्यायनस्तथा पुच्छं वितस्त्येच्छन्[1] इति । पक्षवृद्धेरपि वैकल्पिकत्वम्, 'अरत्निना पक्षौ द्राघीयांसौ भवत'इत्युक्तवा इति द्राघीयस्त्वमुक्त्वा 'व्याममात्रौ पक्षौ च पुच्छं च भवति' इति पुरुषमात्रस्यैव निगमनात् । स्पष्टयति चैतद्बोधायन —

पुरुषमात्रेण वेणुना सपक्षपुच्छमरत्निना वा पक्षौ ।

द्राघीयांसौ भवत ।

इति । केचित्तु वितस्तिं त्रयोदशाङ्गुलां मन्वाना द्वादशाङ्गुलेन प्रादेशेन विकल्पयन्त पक्षपुच्छानामरत्न्यादिप्रवृद्धि नित्यामाहु । तेषामष्टविधप्रभृतीना यदन्यत्सप्तभ्य तत्सप्तधा विभज्य विधासप्तमकरणीमित्यादि न सगच्छते । तत्त्रयोदशाङ्गुलवितस्त्यभ्युपगमे पुच्छे विंशतिशताङ्गुलमात्र क्षेत्रमुपधातु न शक्यते । तत्र कश्चिदाह—पुरीषेण पूर्यतामिति, तत्सूत्रकारो न सहत । यदाह-'प्रयोजनत्वात् पुरीषस्य' इति 'यत्पच्यमानानां प्रतिह्रसेन, इति च । किंच पुरीषेण चेत्सर्वस्य न्यूनस्य पूर्ति, किमिति महता ग्रन्थेन इष्टकाप्रमाणार्थमधुना प्रयत्यते[2] । तस्मान्न विचि देनत्रयोदशाङ्गुला वितस्तिरिति । अन्ये मन्यन्ते—द्वादशाङ्गुलयोरेव वितस्तिप्रादेशयो आमिक्षापयस्ययोरिव विधिभेदाच्छब्दभेद । तयोश्च परस्पर विकल्प इति । तेषामपि पूर्वोक्तासगति स्पष्टैव । ब्राह्मणविरोधश्च । तैत्तिरीयके हि पुच्छस्य प्रवृद्धि प्राशिकरत्नेनापि नोक्ता । तस्मादर-

1 इष्टकाकरणानि विधास्यन्ते । तस्मादरत्निप्रादेशेन वृद्धे पाक्षिकत्वमेव ।

2. वितस्त्येच्छन् ।

त्निप्रादेशानां पाक्षिकत्वमेव[1] ज्यायो मन्यामहे । किंच यदेवेष्टाकानामष्टाङ्गुलानां[2] पञ्चमं करणं तदप्यस्मिन्नर्थे लिङ्गं कथम् ? तत्र हि प्रथमतृतीयकरणाभ्यामेव उपधाने शक्ये अन्यानि त्रीणि करणानि भेदपरिहारार्थानि । तत्र पञ्चमेन विनाऽप्युपधानं सुकरम् । अरत्न्यादिप्रवृद्धौ नित्यायां तत्प्रकारश्च दर्शितो भगवता बोधायनेन—

'उपधाने पूर्वापरयोः पक्षपार्श्वयोः ।'

इत्यादि । अन्यश्च प्रकारः—आत्मनि पुरस्तात् दशार्धेष्टका । उदगायता पञ्चदश[3]। पक्षाग्रयोर्मध्ये तिस्रस्तिस्रः प्राच्यः । पुच्छपार्श्वयोः पञ्चपञ्च । पुच्छाग्रकोणयोर्द्वे प्रादेशमात्र्यौ । ताभ्यामध्यर्धेऽष्टके[4] उदीच्यौ । पक्षाग्रकोणेष्वेकैका अध्यर्धा उदगायता । अप्यययोश्च पञ्चपञ्च यथासूत्र । पुच्छाग्रमध्ये द्वे प्राच्यौ । शेषे पञ्चम्यः । एष द्विशत प्रस्तारः । अपरस्मिंस्तु पक्षपार्श्वयोष्षट्षडर्धेष्टका उदीच्यः । आत्मनि दक्षिणत उत्तरतश्च षट् षट् प्राच्यः । श्रोण्यंसेषु द्वेद्वे अध्यर्धे उदीच्यौ पुच्छाप्यये पञ्च प्रागायता आत्मानमरत्निनोपेता । शेषे पञ्चम्यः । पुच्छाग्रेषु मध्यमामुद्धृत्य द्वे अर्धेऽष्टके उदीच्यौ । एष द्विशत प्रस्तारः । एवं चतुर्भिः करणैरुपधाने सिद्धे यत्पञ्चमं करणं तदरत्निप्रादेशाभावेऽपि भेदपरिहारेण द्विशतपूरणार्थम् । निरूपणीयं चैतत्सर्वं सूरिभिरित्युपरम्यते ॥

एकविधः प्रथमोऽग्निः ॥ (10)

द्विविधो द्वितीयः ॥ (11)

त्रिविधस्तृतीयः ॥ (12)

त एवमेवोद्यन्त्यैकशतविधात् ॥ (13)

Kapardi (Sutra 10, 11, 12, and 13.)

एकः पुरुषो यस्मिन्निति एकविधः, एकपुरुषादेकोत्तरं चिन्वीतेति प्रथमातिक्रमे कारणाभावादिति प्रथमः एकपुरुषविधा इष्टका अस्मिन्विधीयन्ते इति अग्निक्षेत्रम् । 'आतश्चोपसर्गे' इत्यङ् । एकाकारो विधा यः, विधा पुरुष इत्यर्थः । अधिकृतत्वात् पुरुषस्य । एवं सर्वत्र लोचनीयम् । उद्यन्ति गच्छन्ति आ एकशतविधात् । अभिविधावाङ् ।

तद्व ह स्म सप्तविधमेव चिन्वीत ॥ (14)

सप्तविधो वाव प्राकृतोऽग्निः ॥ (15)

---

1 प्रादेशेन युक्ताः पाक्षिकत्वमेव । 2 यदर्धेष्टकानामष्टाङ्गुलानां ।
3 उदगायताः पञ्चादश । 4 ताभ्यामुदग्दक्षिणेऽर्धेष्टके ।

तत ऊर्ध्वमेकोत्तरानिति विज्ञायते ।। (16)

**Kapardi (Sutra 14 15 and 16)**

निपातसमूह पक्षव्यावृत्तौ । एकविधादयो न चेतव्या इति । वावेत्य वधारणे । सप्तविध एव प्राकृतोऽग्नि –प्रकृतिरित्यर्थ । स्वार्थ एव तद्धित । सप्तविधादूर्ध्वं एकोत्तरानिति वाजसनेयिना श्रुति । सप्तार्धं एव प्रथम प्रकृतिश्च पुरुषमात्रेणेत्यारम्य सप्तार्धस्य विधानादुपधानविधौ दक्षिणे पक्षे उपदधातीति श्रूयते । तत ऊर्ध्वमकोत्तरानिति एकपुरुषाधिका परमिति द्वितीये प्रयोगे अर्धनवम तृतीयेऽर्धदशममित्येव द्रष्टव्यम् ।

**Karavinda (Sutra 10 11 12 13 14, 15 and 16)**

सप्तविधस्य प्रकृतित्वमाशङ्क्य तेनैव प्रकृतित्व प्रतिपादयितुमाह– विधायते मीयत इति विधा अग्निविमान, पुरुषमात्रेण वेणुना पुरुषक्षेत्राणि एकैकशोऽत्र मीयन्त इति विधाशब्द पुरुषक्षेत्रवाची । एका विधा यस्याग्ने स एकविध । प्रथमातिक्रमे कारणाभावात् प्रथम एकविधस्स एव प्रकृति , इतरे विकृतय , ते चाग्नय एवमेकपुरुषवृद्धया उद्यन्ति अधिका भवन्ति- वर्धन्त इत्यर्थ । आ एकशतविधात् । आङत्राभिविधौ । कथ विधाशब्दस्य विमानपर्यायत्व, उच्यते—विदधाति करोतीत्यथ । करणीव्यापारेषु विमा नेषु करोति तत्रतत्र दृश्यते । अतो विधाविमानयो पर्यायत्वम् । तस्मादेक- विध प्रथम । स एकविध प्रकृतिश्च । द्विविधादयस्तद्विकारा इति । तदुह- वै सप्तविधमेव चिन्वीत—तदुहवा इति निपातसमुदाय पक्षव्यावृत्तौ । नैत- दस्त्येकविध प्रथम इति । किं ? तस्मिन् सप्तविधमेव प्रथम चिन्वीतेति । कुत ? सप्तविधो वाव प्राकृतोऽग्नि । वाव इत्यवधारणे । एष वाव सर्वतो राजा' इत्यादौ दर्शनात् । प्रकृतिरेव प्राकृत स्वार्थे तद्धित , तस्मात्सप्तविध एव प्रकृतिभूतोऽग्नि । तस्मात् सप्तविध एव प्रथम चेतव्य नैकविध तस्मिन्नेव पक्षपुच्छाद्यङ्गानामुपदेशादित्यभिप्राय सप्तविध इत्यर्धाष्टम एवोच्यते ।यावानग्निस्सारत्निप्रादेशस्सप्तविधस्सपद्यत इति वक्ष्यमाण- त्वात् । तत ऊर्ध्व ततस्सप्तविधादूर्ध्वमेकोत्तरानकेनाधिकानग्नीश्चिन्वीतेति श्रुति । अग्निर्वलोक्न वाजसनेयकमिति । तस्माद्द्वितीयाद्याहारेषु सप्तवि- धमेव चिन्वीतेत्येतदपि लभ्यते । एवोत्तरपक्षेऽष्टविधादौ द्वितीयेऽर्धनवम तृतीयेऽर्धदशम इत्येवमेकोत्तरविधत्व एकशतविधात् द्रष्टव्यम् ।

**Sundararaja (Sutra 10 11 12 and 13)**

विधीयन्त इति विधा—पुरुषमात्र क्षेत्रम् । प्रथमाहारे एकविध । एव द्विविधादि । एकशततम आहारे एकशतपुरुष ।

Sundararaja (Sutra 14 15 and 16)

पक्षान्तरमाह्—प्रकृतिरेव प्राकृत प्रज्ञायए । सप्तविधादूर्ध्वमेकोत्तरानेकशतविधात् । सर्वत्रारत्निप्रादेशाना न वृद्धि, विधानामेव वृद्धिवचनात् । 'एकविंशे पुरुषाभ्यासो नारत्निप्रादेशानाम्' इति लिङ्गाच्च । व्यक्तोक्तमेतद्वोधायनेन— अर्धाष्टमा. पुरुषा प्रथमोऽग्नि अर्धनवमा द्वितीयोऽर्धदशमास्तृतीय' इत्यादि । यस्त्वेकविधादिक्रमेणाहरते तस्य सप्तविधादिष्वप्यरत्निप्रादेशानामभाव, एकोत्तरत्वविरोधात् सारत्नि प्रादेशे सप्तविध आहृते उत्तरेऽपि नारत्निप्रादेशा ।

एकविधप्रभृतीना न पक्षपुच्छानि भवन्ति ।। (17)

सप्तविधवाक्यशेषत्वात् ।। (18)

श्रुतिविप्रतिषेधाच्च ।। (19)

Kapardı (Sutra 17 18 and 19)

वाजसनेयिकमिति अग्निविकल्पविधानात् विकल्प सप्तार्धमपि द्वितीये विहारे चिन्वीतेत्येतदपि लभ्यते ।

इतश्च पश्याम सप्तार्धविध एव चेतव्य इति । यस्मादेकविधप्रभृतीना पड्विधपयन्ताना न पक्षपुच्छानि भवन्ति । किमुक्त भवति ? यत पक्षपुच्छानि न भवन्ति तेषु न शेरत इत्यथ । कुत इत्याह्–सप्तेति । सप्तविधमग्नि प्रकृत्य विधीयन्त इत्यय । रथन्तर दक्षिणे पक्षे उपदधाति बृहदुत्तरपक्ष इत्येवमादयो न वियुज्यन्ते । तस्मान्न चेतव्या एकविधादय । सप्तविध एव चेतव्य । तेष्वेव पक्षपुच्छानि किमिति[1] न क्रियेरन्नित्यत आह्—श्रुतीति । विरोधो—विप्रतिषेध । यद्येकविधस्य पक्षपुच्छात्मना विभाग क्रियते, पक्षपुच्छात्मना व्यायाममात्रता हीयते । अथप दोषो न भवेदिति व्यायाममात्रता पक्षपुच्छात्मना गृह्यत, तदैकविधत्व हीयेत । तस्माद्विरोध । अतश्च विरोधान्न कर्तव्या एकविधादय षड्विधायन्ता । कथमष्टविधाद्या मातव्या इत्यत आह—

अष्टविधप्रभृतीना यदन्यदसप्तम्यस्तत्सप्तधा विभज्य प्रतिपुरुषमावेशयेत् ।। (20)

Kapardı (Sutra 20)

अष्टविधप्रभृतीना एकशतविधपर्यन्ताना यदन्यत्सप्तभ्य सप्तार्धेभ्य तत्सप्तधा सप्तार्धेभ्यो यदन्यत्सप्तार्धेभ्य प्रक्षेप्तव्यमासीत् तत्सप्तार्धधा

1 पक्षपुच्छानि सप्तविधवाक्यशेषत्वात् सप्तविधमग्नि प्रकृत्य किमिति ।

विभज्य—सप्तार्धेभ्य इति कुत[1] एतल्लभ्यते ? सप्तविध इत्युक्तेऽर्धाष्टम एव गृह्यते । अरत्निप्रादेशाना तदन्तर्गतत्वात् । वक्ष्यति सप्तविध इति । अष्टविध एक प्रक्षेप्तव्य नवविधे द्वौ । दशविधे त्रय इत्येव द्रष्टव्यमेकशतविधात्[2] पुरुषात् । पुरुष सप्तार्धधा विभक्त कृत्वा प्रतिपुरुषमेको भाग क्षेप्तव्य । सप्तस्वर्धपञ्चारत्निप्रादेशेषु[3] पुरुषे त्रिंशत्पञ्चदशभागीया । अर्धपुरुषे पञ्चदश । एवमेकस्मिन्पुरुषक्षेत्रे द्वे शते पञ्चविंशतिश्च पञ्चदशभागीयाश्शेरते । अष्टविधे ता प्रक्षेप्तव्या । एकस्मिन्पुरुषक्षेत्रे त्रिंशत्पञ्चदशभागीया । तासु प्रक्षिप्तासु पञ्चपञ्चाशदधिकशतद्वयमापद्यते । षोडशाना वर्गं षट्पञ्चाशदधिकम् । तच्चतुरस्राच्चतुरस्रमित्यनेन न्यायेन एकस्मिन्पञ्चदशभागीयाक्षेत्रेऽपनीते या रज्जु सा पुरुषस्थानीया । तस्या पञ्चमो [भागोऽरत्निस्थानीय । तेन मानेन कृते सर्वपुरुषक्षेत्र लिप्त भवति । एव नवविधादिषु द्रष्टव्यम् ।

**Kapardı (Sutra 21 and 22)**

आकृतिविकारस्याश्रुतत्वात्[4] ॥ (21)

पुरुषमात्रेण विमिमीते, वेणुना विमिमीते, इति विज्ञायते ॥ (22)

यदि पुरुषक्षेत्रमेकन क्षिप्यते, विक्रियेताकृति । न विद्यते श्रुतिर्यस्यास्सा अश्रुति । आकृतिविकारस्य श्रुतेरभावात् इत्यर्थ । पुरुषमात्रेणेति द्रव्यमपेक्षते । वेणुनेति च मात्रामपेक्षते । तयोर्नष्टाश्वदग्धरथवत्सबन्ध । पुरुषमात्रेण वेणुना मिनोति ।

यावान्यजमान ऊर्ध्वबाहुस्तावदन्तराले वेणोश्छिद्रे करोति मध्ये तृतीयम् ॥ (23)

**Kapardi (Sutra 23)**

यजमानग्रहणादध्वर्युप्रमाणो वेणुर्न गृह्यते । छिद्रयोरन्तराल यजमानमात्र यथा भवति तथा छिद्रे करोति[5] । तयोर्मध्ये वेणोश्छिद्रमेक करोतीति शेष ।

---

1 कृत ।

2 इत्येव स्पष्टमेकशतविधात् ।

3 सप्तविधे सप्तस्वर्धपञ्चारत्निप्रादेशेषु ।

4 आकृतिविशेषस्याश्रुत (ति) त्वात् ।

5 करोति । मध्ये तृतीयम्, तयोर्मध्ये ।

अपरेण यूपावटदेशमनुपृष्ठ्य वेणुं निधाय छिद्रेषु शङ्कून्निहत्य उन्मुच्यापराभ्यां दक्षिणा प्राक्परिलिखेदान्तात् ॥ (24)

Kapardi (Sutra 24)

सञ्चयस्य पश्चादनुपृष्ठ्य पृष्ठ्या यथा तथा वेणुं निधाय त्रिषु छिद्रेषु शङ्कू निहत्य अपराभ्यां शङ्कुभ्यामुन्मुच्य दक्षिणाप्राक् सव्यं परिलिखेदान्तात् अग्निक्षेत्रात् ।

उन्मुच्य पूर्वस्मादपरस्मिन्प्रतिमुच्य दक्षिणा प्रत्यक् परिलिखेदान्तात् ॥ (25)

Kapardi (Sutra 25)

पूर्वस्माच्छङ्कोः प्रतिमुच्यापरस्मिन् प्रतिमुच्य दक्षिणाप्रत्यक्परिलिखेदान्तात् ।

Karavinda (Sutra 17)

सप्तविधोऽग्निः प्रकृतिः, अन्येऽग्नयो विकृतय इत्युक्तम्, तत्रैकविधादीनां पण्णां विशेषमाह—

न भवेयुः । कुतः ? सप्तविधवाक्यशेषत्वाच्छ्रुतिविप्रतिषेधाच्च । पक्षी भवतीत्यादिपुच्छविधायकवाक्यस्य सप्तविधप्रकरणपाठात्तच्छेषत्वावगते । किं चैकविधे पक्षादिविभागकरणे व्याममात्रताहानिः व्याममात्रपक्षादिकरणैकविधताहानिरिति व्याममात्रपक्षपुच्छैकविधत्वविधायकयोः श्रुत्योर्विरोधान्नैकविधादौ पक्षादयो भवेयुः । तथा करणोपधानादीनि एकविधप्रभृतीनामित्यत्र वक्ष्यति । ननु सपक्षपुच्छेषु विधाभ्यासेऽपचये च विसप्तमकरणी पुरुषस्थानीया कृत्वा विहरेदित्यष्टविधाद्युपचयमते एकविधादौ अपचयेऽपि सप्तधा विभागं दर्शयति । तत्पक्षपुच्छविभागार्थं। इतरथा अपचयविषयेऽपचयस्य दृष्टार्थत्वप्रसङ्गात् । तेनैकविधानामपि भवतीति गम्यते । तत्कथं तेषां तानि न भवन्तीति । उच्यते—एकविधः प्रथमोऽग्निः, तद्वद्वै सप्तविधमेव चिन्वीतेत्येवमाद्योर्विरुद्धार्थाभिधायिन्योर्द्वयोः श्रुत्योः समुच्चयाभावाद्विकल्प एवावकल्पते । तस्मादेकविधो वा प्रथमः सप्तविधो वा प्रथमः । तत्र यदैकविधः प्रथमः प्रकृतिश्च, तदा द्वितीयाद्याहारेषु एकोत्तरा एव द्विविधादयः प्रयोक्तव्याः । प्रकृतिभूतैकविधे पक्षपुच्छानामनाम्नानादेकविधादीनां पण्णां पक्षपुच्छानि न भवन्ति । सप्तविधे तु विद्यन्त एव । एवमष्टविधादीनां तद्विकारत्वात्तेषु च विद्यन्त एव । यदा सप्तविधः प्रकृतिः इतरे तद्विकाराः तदैकविधादयोऽप्यष्टविधवत् सपक्षपुच्छा एव भवेयुः, एवं

विधाश्चयोक्तः सप्तविधविभागोऽर्थवान् भविष्यति, तत्रातिरात्रवद्विकृतेरपि कदाचित् प्रथमतोऽनुष्ठानं एकविधस्य लभ्यत एव । अस्मिन्नपि पक्षे एकोत्तरनियमोऽस्त्येव । यदैकविधः प्रकृतिः प्रथममाहारः, तदाऽसावपक्षपुच्छः । द्वितीयादिष्वाहारेषु द्विविधादयो यावत्सप्तविधमपक्षपुच्छा एव। सप्तविधादयस्सपक्षपुच्छा एव । यदैकविधो विकृतिः प्रथमाहारः, तदाऽसौ सपक्षपुच्छः । द्वितीयादिष्वाहारेषु द्विविधादयस्सर्वे सपक्षपुच्छा एव । यदा सप्तविधः प्रकृतिर्वा विकृतिर्वा प्रथमः, तदा तत ऊर्ध्वमष्टविधादयस्सप्तविधा एव । तस्मादेकविधादीनां षण्णामपक्षपुच्छत्वं सपक्षपुच्छत्वमुभयमप्यस्त्येवेति सर्वमुपपन्नम् । अष्टविधादिष्वेकोत्तरेषु कथमतिरिक्तस्य विभाग इत्यत आह—

Karavinda (Sutra 20)

अस्यार्थः—अष्टविधादिष्वर्धाष्टमेभ्यो यदन्यदधिकमागन्तु तत्सप्तधा सप्तार्धधा विभज्य प्रतिपुरुषं—पुरुषे पुरुषे भागमेकैकमावेशयेत् । अर्धमर्धं यावानग्निस्सारत्निप्रादेशस्सप्तविध इति लिङ्गात्, कुतः ? आकृतिविकारस्याश्रुतत्वात्—श्रुतेरभावात् प्रमाणाभावादित्यर्थः । तत्रकस्मिन् पुरुषक्षेत्रे पञ्चविंशतिर्द्वे शते च पञ्चदशभागीयाक्षेत्राणि, आसां त्रिंशत्त्रिशतपञ्चदशभागीयाः पुरुषेपुरुषे प्रक्षेप्तव्याः । अर्धे पञ्चदश, अयमर्थः—प्रक्षेप्तव्यं पञ्चदशधा विभज्य तस्य द्विभागसहितं पुरुषं य करोति आकृतेरविकारत्वाय सा तस्य पुरुषस्य करणी ग्राह्या । तावान्वेणुर्भवतीत्यर्थः ।

इदानीं विमानमुच्यते—

Karavinda (Sutra 22)

श्रुतिद्वयमिदम् । तत्रैका श्रुतिर्द्व्यापेक्षणी, अन्या परिमाणापेक्षणी । तयोः नष्टाश्वदग्धरथवत्सम्प्रयोगः । पुरुषमात्रेण वेणुनेत्यर्थः । यावान् —यत्परिमाणो यजमानः ऊर्ध्वभूतबाहुः तत्परिमाणं यथा छिद्रयोरन्तरालं भवति तथा वेणुच्छिद्रे कुर्यात् । पञ्चारत्निः पुरुषः इति वक्ष्यति । एतद्वेणुः । यूपावटस्य पश्चात् मञ्चन्मवनित्यानुपृष्ठ्य पृष्ठ्यायां वेणं निधाय छिद्रेषु शङ्कू निहत्यापराभ्यां शङ्कुभ्यां वेणुमुन्मुच्यापरस्मिन् छिद्रे कीलं प्रतिमुच्य पूर्वस्मिन् शङ्कौ प्रतिमुच्य तेनैवापरशङ्कुमूलादारभ्य दक्षिणाप्रागायतात् परिलिखेत् । [illegible] वेणुनाऽऽक्रम्य रेखा यावद्दिगन्तराभिमुखो भवति तावत्परिलिखेदित्यर्थः । उन्मुच्य पूर्वस्माच्छङ्कोरपरस्मिन् शङ्कौ प्रतिमुच्य दक्षिणा प्रत्यक्पूर्ववत् परिलिखेत् ।

Sundararaja (Sutra 17, 18 and 19)

श्रुतिविप्रतिषेधो व्याममात्रौ पक्षौ च पुच्छं च भवतीति। चतुरस्र-विषय चैतत्। श्येनचिदादयस्तु सपक्षपुच्छा एव भवन्ति, तदाकृतेरेव विधेय-त्वात्।

Sundararaja (Sutra 20 )

यदधिक सप्तम्य. पुरुषक्षेत्राङ्गुलयश्च चतुर्दशसहस्राणि चत्वारि शतानि 14400। तान्सप्तम्योऽधिकं पुरुषैर्हत्वा सप्तभिर्विभज्य लब्ध पुरुषक्षेत्राङ्गुलिषु सयोजयेत्। तास्तत्र पुरुषक्षेत्राङ्गुलयो ज्ञेया.। यथा अष्टविधे पुरुषक्षेत्राङ्गुलय. चतुर्दश सहस्राणि चत्वारि शतानि च सप्तम्यो-ऽधिकेनैकेन पुरुषेण हत्वा सप्तभिर्विभज्य लब्ध द्व सहस्र सप्तपञ्चाशच्चाङ्गु-लयः पञ्चतिलयुक्ताः। एताः पुरुषाङ्गुलिषु सयोजयेत्। तास्तत्र पुरुषक्षे-त्राङ्गुलय· षोडशसहस्राणि चत्वारि शतानि सप्तपञ्चाशच्चाङ्गुलय· पञ्चतिलाधिका 16457–ति 5 अस्य मूल अष्टाविंशतिशतमङ्गुलय, दशतिलाधिका. 128 ति 10। एतत्पुरुषस्थानीयस्य वेणो प्रमाणमिति हेतौ वक्ष्यते। विधासप्तमप्रकरणे पुरुषस्थानीया कृत्वा विहरेदिति'। एव नवविधे पुरुषाङ्गुलीः 14400 द्वाभ्या हत्वा सप्तभिर्विभज्य लब्ध चत्वारि सहस्राणि शत चतुर्दशाङ्गुलय दशतिलाधिका। तद्युक्ता पुरुषाङ्गुलय. अष्टादश सहस्राणि पञ्च शतानि चतुर्दश दशतिलाधिका.[1] 18514 ति 10 तस्य मूल षट्त्रिंशच्छतमङ्गुलयो द्वौ तिलौ 136–ति 2 एव नवविधे पुरुष-प्रमाणम्। एवमेव दशविधादिषु द्रष्टव्यम्।

अन्यः प्रकारः—यावन्तोऽग्नेः पुरुषा तत्संख्यया पुरुषाङ्गुलीर्हृ-त्वा सप्तभिर्विभज्य लब्ध पुरुषाङ्गुलय. पूर्वोक्ता एव षोडशसहस्राणि चत्वारि शतानि सप्तपञ्चाशच्च पञ्चतिलाधिकाः 16457–ति 5। एव नवविधादिषु एकस्मिंश्चाङ्गुलिक्षेत्रे तिलाष्पट्पञ्चाशत् शत सहस्र च 1156 एवमरत्निप्रादेशरहितानां सपक्षपुच्छाग्नीनां पुरुषावेशः, पुरुषवेणुश्च। अत्र चतुरस्राग्ने प्रस्तावादेकेविधाग्नीना चतुरस्राणा अपक्षपुच्छत्वादष्टवि-धप्रभृतीनामित्युक्तम्। यदा तु श्येनचिदादिविधेस्साधरणत्वात् वयसा वा एष प्रतिमया चायते, इत्याकृतिविधानाच्च श्येनाद्याकारत्वेन सपक्षपुच्छत्वमेकवि-धादीनाम्। तदा यन्न्यून सप्तभ्यस्तत्सप्तधा विभज्य प्रतिपुरुष जह्यादिति द्रष्टव्यम्। तत्र व्यक्त[2] एव विभागप्रकारः। तथा सति एकविधश्येनचिति द्वे

1. चतुर्दशाङ्गुलयो दशतिलाधिका।

2 तत्राप्युक्त।

सहस्रे सप्तपञ्चाशच्च पञ्चतिलयुक्ता पुरुषाङ्गुलयः 2057-ति5 । तन्मूलं पञ्चचत्वारिंशदङ्गुलयो द्वादश तिलाश्च । पुरुषद्विविधे तु पुरुषाङ्गुल्यश्चत्वारि सहस्राणि शतं चतुर्दश च त्रिंशत्तिलसंयुक्ता[1] । पुरुषवेणुस्तु चतुस्तिलाधिकाश्चतुष्षष्टिरङ्गुलयः । एवं त्रिविधादिषु द्रष्टव्यम् । यो यत्राग्नौ पुरुषस्थानीयः तत्र तस्य विंशतितमो भागो विहरणे इष्टकानां चाङ्गुलि कल्प्या । तिलाश्च तस्याश्चतुस्त्रिंशत् । तत्र श्लोकौ —

व्योमाकाशाब्धिवेदैर्यदभीष्टं पुरुषैर्हतात् ।[2]
हरेत सप्तभिर्भागं तन्मूलं पुरुषो भवेत् ॥1॥
चतुरस्रश्येनचितो प्रादेशारत्निहीनयोः ।
तत्रतत्राङ्गुलिः कल्प्या विंशत्यंशतः ॥ 2 ॥

सारत्निप्रादेशे तु बौधायनेनोक्तो विभागः —

'यदन्यत्प्रकृतेस्तत्पञ्चदशभागान् कृत्वा विधाया विधाया द्वौद्वौ भागौ समस्येत्, ताभिरर्धाष्टमाभिरग्निं चिनुयात्' ॥

इत्यादि । तत्र प्रकारः —अर्धाष्टमेष्वारत्निके पुरुषे पुरुषाङ्गुलीश्चतुर्दशसहस्राणि चत्वारि च शतानि हत्वा पञ्चदशभिर्विभज्य लब्धं द्विगुणीकृत्य पुरुषाङ्गुलीषु संयोजयेत् । तास्तत्र पुरुषाङ्गुलयः । यथा अर्धनवमे पुरुषेषु पुरुषाङ्गुलीरेकत्र हत्वा पञ्चदशभिर्विभज्य लब्धं नव शतानि षष्टिश्चाङ्गुलयः, ता द्विगुणा पुरुषाङ्गुलीषु संयोज्य दृष्टा पुरुषाङ्गुलयः षोडशसहस्राणि त्रीणि शतानि विंशतिश्च 16320, तन्मूलं[3] तत्र पुरुषप्रमाणं पादोनाष्टविंशतिशतमङ्गुलयः । एवमर्धदशपुरुषे अष्टादश सहस्राणि द्वे शते चत्वारिंशच्च पुरुषक्षत्राङ्गुलयः । पुरुषवेणुश्च पञ्चविंशच्छताङ्गुलयः तिलद्वयाधिका इत्यादि द्रष्टव्यम् । ये रथचक्रचित्प्रउगचिदादयः तेष्वरत्निप्रादेशैर्युक्तेषु वियुक्तेषु चैवमेव पुरुषमानीय तस्य विंशतितमभागमङ्गुलिं प्रकल्प्य विहरणमिष्टकानां च । यथा प्रउगचिति—14400 एकविधे एक सहस्रं चतुश्चत्वारिंशच्छताङ्गुलयः[4] षट्तिलोना पुरुषः, तस्य विंशतितमो भागः तत्राङ्गुलिरित्यादि । तत्र श्लोकौ—

आकाशश्रुतिवेदकात् पुरुषंद्विगुणंहृतात्।
हरेत तिथिभिर्भाग तन्मूल पुरुषो भवेत् ॥1॥
चतुरस्रश्येनचितो प्रादेशारत्नियुक्तयो ।
प्रउगादिषु चैव स्यात्पुरुषाङ्गुलक्लृप्तये ॥2॥

ये त्वरत्निप्रादेशवृद्धि नित्यामाहु तेषामेतत्सूत्रे बोधायनेनोक्तेऽर्थे क्लेशेन योजयितव्य स्यात्–सप्तभ्यस्सार्धसप्तभ्य इति, एव सप्तविधा सार्धाष्टमविधेति, एवमुत्तरत्र विधासप्तमकरणी विधाष्टमकरणीमिति। अत्राधिगता पुरुषाणा प्रतिपुरुषमावेशनमुक्तम्। तत्र हेतुमाह—

Sundararaja (Sutra 21)

प्रकृत्या अन्याकृतेर्विकारस्य श्रुत्यभावात्। यदि त्वधिका पुरुषा क्वचिदेवैकस्मिन्[1] प्रदेशे आत्मनि पक्षे वा निधीयेरन्[2]। प्रकृतिर्ह्यन्यथाकृतिर्विक्रियते।

Sundararaja (Sutra 22)

पुरुषमात्रेण–यावान् पुरुष ऊर्ध्वबाहुस्तावता वेणुनाऽग्निं[3] विमिमीतइति श्रुतिद्वयस्यार्थ।

Sundararaja (Sutra 23)

बाह्यच्छिद्राभ्या वहिस्मीकरणार्थमुपाह्रियते छिद्रयोश्च बाह्यार्थे।

Sundararaja (Sutra 24)

अपरेण यूपावटदेश सञ्चरमवशिष्यैव वेणुनिधानम्।[1] आन्तादर्वाक्चक्षुर्निमिताच्चतुरस्रपूर्वान्तादुन्मुच्य[4] पूर्वस्मादपरस्मिन् प्रतिमुच्य दक्षिणा प्रत्यक्परिलिखेदान्तात्।

इति अष्टम खण्ड

1 क्वचिदेवैकस्मिन्।

2 पक्षे पुच्छे वा निधीयेरन्, तदा।

3 पुरुषमात्रेण वेणुनाऽग्निं।

4 अन्तात्पूर्वाच्चक्षुर्निमित्ताच्चतुरस्रपूर्वान्तादिति मावदुन्मुच्य।

## अथ नवमः खण्डः

उन्मुच्य वेणु मध्यमे शङ्कावन्त्यं वेणोश्छिद्र प्रतिमुच्योपर्युपरिलेखासमरं दक्षिणा वेणु निधायान्त्ये छिद्रे शङ्कु निहत्य तस्मिन्मध्यमं वेणोश्छिद्रं प्रतिमुच्य लेखान्तयोरितरे प्रतिष्ठाप्य छिद्रयोश्शङ्कू निहन्ति ॥ (1)

Kapardı (Sutra 1)

दक्षिणे शङ्कौ अन्यतर वेणोश्छिद्र प्रतिमुच्योपर्युपरिलेखासम्भेद दक्षिणाग्र वेणु निधाय अन्त्ये छिद्रे शङ्कु निहत्य तस्मिन् शङ्कौ मध्यम वेणोश्छिद्र प्रतिमुच्य लेखान्तरयोरन्तरे[1] छिद्रे प्रतिष्ठाप्य छिद्रयोर्लेखान्तयोरेव शङ्कू निहन्ति ।

स पुरुषश्चतुरस्र ॥ (2)

Kapardı (Sutra 2)

स चतुरस्र पुरुष ॥

एव प्रदक्षिण चतुर आत्मनि पुरुषानवमिमीते ॥ (3)

Kapardi (Sutra 3)

एव चत्वारि पुरुषक्षेत्राणि आत्मनि यथा भवन्ति तथा प्रदक्षिण मिनुयात् ।

पुरुष दक्षिणे पक्षे ॥ (4)

पुरुष पुच्छे ॥ (5)

पुरुषमुत्तरे ॥ (6)

Kapardi (Sutra 4 5 and 6)

दक्षिणे पक्षे—दक्षिणे पार्श्वे । मध्यमपु त्रिपु वेणु प्रतिमुच्य अपराभ्यामित्यादि पूर्ववच्चतुरस्रं पुरुष । एवमुत्तरपक्ष उत्तरपार्श्वे, मध्यमेष्वेव त्रिपु प्रतिमुच्य उत्तरम् । पुच्छे तु पाश्चात्यमध्यमशङ्कौ मध्यम वेणोश्छिद्र प्रतिमुच्य तिर्यग्वेणु निधाय छिद्रयोश्शङ्कू निहत्योन्मुच्योत्तराभ्यां प्रसव्य

1 लेखान्तयोरितरे ।

परिलिखेत्। दक्षिणस्मादुन्मुच्योत्तरस्मिन् पुरुषमात्रे शङ्कौ प्रतिमुच्यान्त्य च्छिद्रशङ्कुप्रभृति प्रदक्षिण परिलिखेत्। उन्मुच्य वेणु मध्यमे प्रतिमुच्य उपर्युपरि लेखासम्भेद पश्चाद्वेणु निधाय अन्त्य इत्यादि समान[1] तत्पुच्छम्।

अरत्निना दक्षिणतो दक्षिणम्॥ (7)

इत्युक्तम्॥ (8)

Kapardı (Sutra 7 and8)

एव विमितस्य दक्षिणपक्षस्य दक्षिणत उत्तरस्योत्तरत अरत्निना वर्धयेत् पक्षयोस्तिर्यङ्मानी सारत्निपुरुषमात्रा पश्र्वमानी च पुरुषमात्र, एव पुच्छस्य पश्चादपि प्रादेशेन वितस्त्या वा वर्धयेत् तत्तत्सु पार्श्वमानी स प्रादेश पुरुष, पुरुषमात्रे तिर्यङ्मानी॥

पृष्ठ्यातो वा पुरुषमात्रस्याक्ष्णया वेणु निधाय पूर्वस्मिन्नितरम्॥ (9)

ताभ्या दक्षिणमस निर्हरेत्॥ (10)

Kapardı (Sutra 9 and 10)

सञ्चरमवशिष्य शङ्कु निहत्य तस्मात् पश्चात् पु प ात्रे शङ्कु निहत्य तस्मिन् पुरुषचतुरस्रस्याक्ष्णयासम[2] वेणु निधाय प्रतिमुच्य वा पूर्वस्मिन्[3] शङ्कौ इतर पुरुषमात्र वेणु निधाय प्रतिमुच्य ताभ्या दक्षिणमस निहरेत्।

विपर्यस्य श्रोणी॥ (11)

Kapardı (Sutra 11)

अपरस्मिन् शङ्कौ पुरुषमात्र प्रतिमुच्य दक्षिणा श्रोणिं उदगपसार्योत्तरामेव श्रोणिं विहरेत्।

पूर्ववदुत्तरमसम्॥ (12)

Kapardı (Sutra 12)

गतमेतत्।

1 इत्यादि पूर्ववत्।

2 पुरुष चतुरस्राक्ष्णया सम पष्ठ्यातो वा।

3 प्रतिमुच्य पूर्वस्मिन्।

Karavinda (Sutra 1, 2 3 4 5 6 7, 8 and 9)

अपरस्मादुन्मुच्य वेणु मध्यमे शङ्कावन्य वेणोश्छिद्रं प्रतिमुच्य उपर्युपरिलेखासमरं दक्षिणा वेणु निधाय। लेखासमर —लेखायास्सपात। तस्योपरिष्टात् सन्निकृष्टं निधायान्त्यछिद्रे शङ्कुन्निहत्य तस्मिन् मध्यम वेणोश्छिद्रं प्रतिमुच्य लेखान्तयोरितरे छिद्रे प्रतिष्ठाप्य छिद्रयोश्शङ्कु निहन्ति, स चतुरस्र पुरुषसंज्ञो भवति, एवं प्रदक्षिण चतुर पुरुषानात्मनि कुर्यात्। पश्चिमे शङ्कावेव वेणोश्छिद्रं प्रतिमुच्य पश्चादनुपृष्ट्य निधाय पश्चिमयोरपि छिद्रयोरपि शङ्कु निखाय पूर्ववद्द्वितीय पुरुष कुर्यादेवमुत्तरतोऽपि उत्तराप्रत्यगुत्तराप्राक्चालिख्य पुरुषद्वय विमिमीते। अपरेण यूपावटदेशं सञ्चरमवशिष्य पृष्ठधाया शङ्कु निहत्य तस्मिन् वेणोश्छिद्रं प्रतिमुच्य पृष्ठचाया वेण निपात्य छिद्रयोर्द्वौ शङ्कू। पश्चिमे शङ्कौ वेणो छिद्रं प्रतिमुच्य पृष्ठचायामेव पश्चान्निपात्य द्वौ शङ्कू। एव पञ्च शङ्कव। मध्यमपूर्वयोश्शङ्कौ प्रतिमुच्य उल्लिख्य पूर्वतत्पुरुषद्वय कुर्यात्। [दक्षिणत उपान्त्ययो छिद्र प्रतिमुच्य उल्लिख्य दक्षिणपक्षे पुरुष उत्तरत उपान्त्ययो प्रतिमुच्य उत्तरपक्षे पुरुष] पुच्छे तु पश्चिम शङ्कौ वेणोमध्यमछिद्र प्रतिमुच्य दक्षिणोत्तर वेण निधाय छिद्रयोश्शङ्कु निहत्य तयोश्छिद्र प्रतिमुच्य पश्चिमोत्तर पश्चिमदक्षिण चालिख्य पुरुष कुर्यात्। एव कृत्वा आरत्निना दक्षिणतो दक्षिण पक्ष प्रवर्धयति। उत्तरमपि पक्षमुत्तरतोऽरत्निनैव प्रादेशेन वितस्त्या वा पश्चात् पुच्छ प्रवर्धयति॥

Sundararaja (Sutra 4)

दाक्षिणात्यानां पञ्चानां शङ्कूनां मध्यमेषु त्रिषु वेणुं प्रतिमुच्य अपराभ्यामित्यादि ।

Sundararjaa (Sutra 5)

पाश्चात्यानां त्रयाणां दक्षिणयोरन्त्ये छिद्रे प्रतिमुच्य मध्यमे छिद्रे शङ्कुं निहन्यात् । एवमुत्तरयोरेव स्थितानां पञ्चानां मध्ये मध्यमेषु त्रिषु वेणुं प्रतिमुच्योत्तराभ्यामित्यादि[1] द्रष्टव्यम् ।

Sundararaja Sutra 6)

दक्षिणपक्षवत् ।

Sundararaja (Sutra 7 and 8)

वेणो पञ्चमं लक्षणं कृत्वा तेन पक्षौ प्रवर्धयेत्, एवं दशमे लक्षणं कृत्वा । पुच्छं प्रकारान्तरमाह—

Sundararaja (Sutra 9 10 11 and 12)

द्वावत्र वेणू उभयतश्छिद्रौ पुरुषमात्रस्सविशेषश्च । पृष्ठ्यायां पुरुषान्तरालान् त्रीन् शङ्कून्निहत्य मध्यमे सविशेषं प्रतिमुच्य पूर्वस्मिन्नितर तयोरन्त्ये छिद्रे यत्र सपततस्म दक्षिणांस ।

विपर्यस्य पुरुषमात्रं पाश्चात्ये प्रतिमुच्य श्रोणी पूर्ववदुत्तरांस । एवं पक्षपुच्छेष्वपि । सविशेषो वेणुस्सप्ततिशतमङ्गुलयो दशनिलोना ।

रज्ज्वा वा विमायोत्तरवेदिन्यायेन वेणुना विमिमीते ॥ (13)

Kapardi (Sutra 13)

रज्ज्वा वाऽन्यतरया विमायोत्तरवेदिवद्वेणुना पश्चाद्विमिमीते अदृष्टार्थम् ।

स पक्षपुच्छेषु विधाभ्यासेऽपचये च विधा सप्तमकरणीं पुरुषस्थानीयां कृत्वा विहरेत् ॥ (14)

Kapardi (Sutra 14)

विधाभ्यासेऽष्टविधप्रभृतय । विधापचये एकविधादय । तेष्वेकविधादिषु विधासप्तमकरणी येन वेणुना विमिमीते तदर्धाष्टमं भवति ।

1 त्रिषु नियच्छ वेणुं प्रतिमुच्योन्मुच्य उत्तराभ्यामित्यादि ।

स पुरुषस्थानीय । एव चतुरस्र कृत्वा पूर्ववद्विभज्य विहरेत । सपक्षपुच्छेष्विति वचनमेकविधानार्थम्[1] । एतेष्वेकविधादिषु श्येनादिषु क्रियमाणेषु यद्येकविधा तत्पञ्चदशधा विभज्य द्वौ भागौ समस्य चतुरस्र कृत्वा तस्य मानेन वेणुना गृह्णीयात् । स पुरुषस्थानीय । एव सर्वत्र । यावद्विध तत्क्षेत्र समचतुरस्र [2]कृत्वा तस्य प्रमाण गृह्णीयात् यथा चत्वारि सहस्राण्यशीतितिला (4080) पुरुष । तेषा वर्ग –एका कोटि षट्षष्टिर्नियुतानि चत्वार्ययुतानि षट्सहस्राणि चत्वारि शतानि (16646400) यद्यष्टविध अष्टभिर्गुणयित्वा पूर्वार्धं सयोज्य पञ्चदशलब्ध द्विगुणीकृत्य मूल गृह्णीयात् । स तस्य पुरुषो भवति । अपचये त्वर्धसयोगो नास्ति । अरत्निप्रादेशाभावात् । अत्यल्पत्वमपचयेनतुल्यम् । अर्धतिलेन वा ऊनाधिके चयेन वा दोषो न भवति विशेषादर्शनात् । तत्र श्लोक —

> आकाशवस्वम्बरवेद (4080) वर्ग
> मिष्टप्रवृद्ध तिथिभिर्विभक्तम् ।
> लब्धस्य वृद्धस्य यमेन मूल[3]
> वृद्धौ क्षये तत्पुरुषस्य मानम ॥
> सदा भवेत्मापचयेच वृद्धौ ॥

इति

नन्वेकविधादय श्येनादयो वक्रपक्षपुच्छा कर्तव्या इति प्रतिपादितम् । तस्मात्किं महता प्रयत्नेन हेतूना दर्शनेन ? सत्यमेतत्[1] कर्तव्या एकविधादय इति कृत्वा क्वचित्तेषु[4] यद्येकविधादय कर्तव्या तदा मत्वर्थपतयोपादीयन्ते । तदा श्येनादय आकृतिविकारा पुरुषात्मका सन्त तद्विकृत्याधिशयेरन् । यथा पुरुषमात्रता विकृत्य पक्षपुच्छाना सप्तार्धविधे श्येनादय प्रवर्तन्ते एव पुरुष विकृत्य एकविधादिषु निविशेरन् । तत्र यदा सपक्षपुच्छत्वमेकविधादीना तदाय विधिरिति अष्टविधप्रभृतीनामपि मार्गान्तरेण विधानाददोष । सपक्षपुच्छेष्विति विधानात् । प्रउगादिष्वेकविधादयो न सन्ति । अष्टविधादयश्चेति केचित् । वक्ष्यन्ति च यावानग्निस्सारत्निप्रादेश' इति । अपरे पुनरेकविधादिषु न सन्ति नापचयेष्विति वर्णयन्ति । सारत्नि प्रादेश इति वचनात् ॥

Karavinda (Sutra 13)

अथवा एकरज्ज्वादीनामन्यतमया रज्ज्वाऽग्नि विमाय पश्चादष्टार्ध

1 वचनमेकविधार्थम्
2 मानेन पूर्ववद्विभज्य समचतुरस्र ।
3 यमा मूल सदा भवत्मापचय०
4 कृत्वा क्विंचा सर्वं०

वेणुना विमिमीते । उत्तरवेदिन्यायेन यथोत्तरवेदिर्युगेनयजमानस्य वा पदैर्विमाय शम्यया परिमीते अदृष्टार्थं, एवमत्रापि रज्ज्वा विमाय वेणुना मानमदृष्टार्थं स्यात्, तथोत्तरवेदिविकारत्वादग्ने, रज्ज्वा विमाय वेणुना शम्यया चादृष्टार्थं विमान भवेदिति ॥

Karavinda (Sutra 14)

सपक्षपुच्छेषु प्रउगादिव्यतिरिक्तेष्वग्निष्वभ्यासेऽष्टविधादावपचये चैकविधादौ विधाविधान करणीनामुच्यते विधासप्तमकरणी पुरुषस्थानीया कृत्वा विहरेत् । यावत्योऽग्नेर्विधास्सन्ति तासा सप्तम या करोति सा विधा सप्तमकरणी ता पुरुषस्थानीया कृत्वा तयाऽऽत्मपक्षपुच्छानि विहरेदिति । अयमर्थ —यद्येकविधोऽग्नि, तमेव विध पञ्चदशधा विभज्य द्वौ भागौ समस्य समचतुरस्र कृत्वा तस्य प्रमाण पुरुषस्थाने कृत्वा अनेनात्मपक्षपुच्छानि विहरेदिति । एवमेव द्विविधादिषु कुर्यात् । चत्वारि सहस्राण्यशीतिश्च तिला[1] पुरुष । तेषा वर्ग एका कोटि षट्प्रयुतानि षण्णियुतानि चत्वार्ययुतानि षट्सहस्राणि चत्वारि शतानि (१६६४६४००) यद्यष्टविध पुरुषवर्गमष्टभिर्गुणित्वा पूर्वराश्यर्धेन च सयोज्य तत्पञ्चदशभिर्विभज्य लब्ध द्विगुणीकृत्य मूले गृहीते स तस्य पुरुषो भवति। अपचये त्वरत्निप्रादेशानामभावात् नार्धसयोग ॥ इतरदुपचयवत् । नन्वेकविधप्रभृतीना न पक्षपुच्छानि भवन्तीत्युक्त । सत्यमुक्तम् । तद्व्यायाममात्ररूपत्वेन[2] एकविधादौ न घटत इत्येवमर्थमिदमिति तत्रैव व्याख्यातम् । एकविधप्रकृतित्वप्रतिपादनाय च । तस्मान्नात्यन्तनिषेध, एकविधप्रभृतीनामपि पक्षपुच्छानि भवन्त्येव ॥

अत्र श्लोकमुदाहरन्ति—
आकाशवस्वम्बरवेदवर्ग
मिष्टप्रवृद्ध तिथिभिर्विभक्तम् ।
तस्य प्रवृद्धस्य यमेन मूल
सम्भावयेत्सापचये च वृद्धौ ॥

इति—

Sundararaja (Sutra 13)

अस्मिन् पक्षे शम्यामानवददृष्टार्थं वेणमानम् । अथाष्टविधादीनामेकविधादीना च विहरणमाह ॥

---

1 सहस्राण्यशीतिसप्तमकरणीतिला ।

1. तद्व्यायाम मात्रपुरुषत्वेन ।

Sundararaja (Sutra 14)

सपक्षपुच्छः अग्नय चतुरस्रश्येनकङ्कचिदलजचितश्च । तत्राष्टविधादिषु विधानामभ्यास । एकविधादिष्वपचय । विधाना (एकीभूताना) समस्ताना सप्तमस्य करणी विधासप्तमकरणी । चीयमानस्याग्नेर्योऽश तस्य करणी पुरुषस्थानीया । सा चाष्टविधप्रभृतीनामित्यत्रैव प्रदर्शिता[1] । अत्रापि मारत्निप्रादेशपक्ष विधार्धष्टिमकरणीमिति द्रष्टव्यम् । अपचयवचन श्येनचिदाद्यर्थम् । चतुरस्राणामेकविधादीनामपक्षपुच्छत्वात् । पूर्वत्र पुरुषावेशनमुक्त इदानी तस्य विहरणमुच्यते इत्यतो न पुनरुक्ति । यद्वा पूर्वसूत्रमष्टविधादिविषय चतुरस्रविषय च । इदमेकविधादीना श्येनादीना च साधारणमित्यस्ति विशेष । इद चानेन ज्ञायते—श्येनचिदादयो गुणविकारास्सप्तविधादिवदेकविधादिष्वपि भवन्ति । अत एव साधारणत्वाच्छाखान्तरीये सारत्निप्रादेशपक्षोऽपि भवन्ति । शाखान्तरीयत्व च तस्य पूर्वमेवोक्तम् । अत एव तस्य पक्षस्य यत्नसाध्यत्वात् तत्रैवोपधानप्रकारा, वक्ष्यते— यावानग्निस्सारत्निप्रादेश इत्यादि ।

**करणानीष्टकानाम् ॥ (15)**

**पुरुषस्य पञ्चमेन कारयेत् ॥ (16)**

Kapardi (Sutra 15 and 16)

इष्टकाना करणानि वक्ष्याम इति शेष । पुरुषस्य पञ्चमेन अरत्निना कारयेत् ।

**तासामेवैकतोऽध्यर्धास्तद् द्वितीयम् ॥ (17)**

**पुरुषस्य पञ्चमो भाग एकत प्रादेश एकत तत्तृतीयम ॥ (18)**

Kapardi (Sutra 17 and 18)

तासामेवेष्टकाना (कतिपया) एकतोऽध्यर्धा अर्धेनाधिकास्तासा करण तृतीय त्रिप्रादेशा पार्श्वमानी अरत्निमात्रा तिर्यङ्मानी द्वितीयस्य करणस्य । अरत्नि पार्श्वमानी । प्रादेशस्तिर्यङ्मानी तत्तृतीयकरणम् ।

**सर्वत प्रादेशस्तच्चतुर्थम् ॥ (19)**

**समचतुरस्रा पञ्चदशभागीयास्तत्पञ्चमम ॥ (20)**

Kapardi (Sutra 17 and 18 )

अष्टाङ्गुला पारिमाण्डल्याम[2] करणम् । समचतुरस्रा इति

1 प्रदर्शिता ।
2 अष्टाङ्गुला मावतारूपम् ।

किमर्थमिह सङ्ग्रहणम् ? यस्मिन्नग्नौ समचतुरस्रा एवेष्टकाः तत्राप्यासा प्रवेशो यथा स्यादित्येवमर्थम् । वक्ष्यति च 'अणूकाः पञ्चदशभागीयानां स्थान' इति । अणूकपञ्चदशभागीययोरेकविषयत्वम् ।

**Karavinda (Sūtra 15 and 16)**

इदानीमिष्टकानां करणान्युच्यन्ते—पारिभाषिकः पुरुषः पञ्चारत्निः । तस्य पञ्चमेनारत्निा । पञ्चमेनेति जातावेकवचनम् । पञ्चमैरित्यर्थः । कारयेत्कुशलैः । तैररत्निभिश्चतुर्भिः प्रथम करणम् ।

**Karavinda (Sūtra 17)**

तासा पञ्चमकृतानामेवेष्टकानां या एकतः—एकस्मिन् भागेऽध्यर्धारत्नचायामा. तासां करण यत्तद्द्वितीय कारयेत् । तासामेवेति सर्वत्र संबध्यते ॥

**Karavinda (Sūtra 18)**

यासामेकस्मिन् पार्श्वे चतुर्विंशत्यङ्गुलयः एकतो द्वादशाङ्गुलयस्तासा यत्करण तत्तृतीयम् ।

**Karavinda (Sūtra 19)**

यासा सर्वत. प्रादेश. प्रमाण तासा यत्करण तच्चतुर्थम् । सर्वतो ग्रहण प्रादेशग्रहणेन सर्वतः प्रादेशस्यापि क्वचिद्ग्रहण सूचयति ।

**Karavinda (Sūtra 20)**

पुरुषस्य पञ्चदशभागोऽष्टाङ्गुलयः । तेन परिमिता. पञ्चदशभागीया इष्टकाः ईदृशास्समचतुरस्राः, तासा यत्करण तत्पञ्चमम् । समचतुरस्रग्रहणादेव पञ्चदशभागीयाना कार्यणकादय. प्राप्ता । तत्र प्रागुदक्पश्चिमेषु चतुरस्रत्वनियमो नास्तीति ज्ञायते । द्वितीयादिव्यवहारः किमर्थः ? अदृष्टार्थमेव । तथोपधानादिषु दर्शनात् ।

**Sundararaja (Sūtra 15 and 16)**

अथैव विमितस्याग्नेरिष्टकाकरणान्याह—
एकमिद करण अरत्निमात्रं समचतुरस्रम् ।

**Sundararaja (Sūtra 17)**

षट्त्रिंशिका पार्श्वमानी, तिर्यङ्मानी चतुर्विंशिकैव ।

**Sundararaja (Sūtra 18)**

एवमर्धेष्टकाः ।

**Sundararaja** (Sutra 19 and 20

अष्टाङ्गुलाः ।

**ऊर्ध्वप्रमाणमिष्टकानां जानोः पञ्चमेन कारयेत् ॥ (21)**

**Kapardi** (Sutra 21)

उत्सेधप्रमाणमिष्टकानां जानुप्रमाणपञ्चमम् । द्वात्रिंशदङ्गुलं जानुः । तस्य पञ्चमभागेन त्रयोदशतिलाधिकषडङ्गुलेन कारयेत् । महाग्नेरिष्टकानामेवैतन्महाग्ने. करणानि विधाय विधानात् ।

**अर्धेन नाकसदां पञ्चचूडानां च[1] ॥ (22)**

**Kapardi** (Sutra 20)

जानुपञ्चमार्धेन नाकसदां पञ्चचूडानां चोत्सेधं सप्ततिलाधिकाङ्गुलत्रयोत्सेधेन कारयेत् ॥

**यत्पच्यमानानां प्रतिह्रसीत पुरीषेण तत्सम्पूरयेत् ॥ (23)**

**अनियतपरिमाणत्वात्पुरीषस्य ॥ (24)**

**Kapardi** (Sutra 21 and 22)

पच्यमानानामिष्टकानामुत्सेधतश्च परिमाणतश्च प्रतिह्रासो भवेत्तत्पुरीषेण पूरयेत् । कुत इत्याह—अनियतपरिमाणत्वात्पुरीषस्य—नियतपरिमाणा इष्टकाः अनियतपरिमाणं पुरीषम् । इयदेतत्पुरीषं प्रक्षेप्तव्यमिति नियमाभावात् तेनैव पूरयितव्यम् ।

**Karavinda** (Sutra 19)

सर्वासामिष्टकानामूर्ध्वप्रमाणमुत्सेध जानुपञ्चमेन कारयेत् । अङ्गुल्यधिकारे द्वात्रिंशज्जानुरिति बोधायन. । तस्य पञ्चम षडङ्गुलयः अर्धचतुर्दशास्तिलाश्च । तेन सम्मितमिष्टकानामूर्ध्वप्रमाणं भवति । जानुदघ्नं चिन्वीत प्रथमं चिन्वानः, पञ्च चितयो भवन्तीति श्रुत्योस्समावेशादूर्ध्वप्रमाणे सम स्यादश्रुतत्वादिति जानुपञ्चमा इष्टका भवेयु । जानुद्विगुणा नाभि । जानुत्रिगुणमास्यम् । जानुदघ्ने सहस्रा इष्टका नाभिदघ्ने द्विसाहस्रा द्विप्रस्ताराश्च । आस्यदघ्ने त्रिषाहस्रा. त्रिप्रस्ताराश्च । तत्र सर्वत्र विशेषाश्रवणात् जानुपञ्चममेवोर्ध्वप्रमाणमिष्टकानाम् । इष्टकाना कारयेदिति इहानुवर्तमाने पुनरपि तयोर्ग्रहणं गार्हपत्यधिष्ण्येष्टकानामपि जानुपञ्चमत्वाय ।

1 पञ्चचोडानां च ।

**Karavinda** (Sutra 20, 21 and 22)

अर्घेन पञ्चचार्धेन कारयेदित्येव ।नाकसदश्चूडोपधानमन्त्रविशेषा । तें रुपधेयाः ।पञ्चपञ्चेष्टका जानुपञ्चमस्यार्धेन कार्या उत्तरा 'नाकसद्भय उपदधाति'। इत्येकस्मिन् प्रस्तारे तासामुत्तराधरभावदर्शनात्। इष्टकाभिरेव जानुदघ्नादिसम्पादनात्, पुरीषोपधानमिष्टका समीकरणार्थे चितेर्वृद्धयर्थं च ।

करणपरिवलुप्तानां इष्टकाना पाकवशात् प्रतिह्रास —क्षय उपजायते । तत्पुरीषेण पूरयेत्, *अनेनेष्टका न दुष्यन्ति अवर्जनीयत्वात्, तस्य* 'मित्रं ता पचेति' लिगात्, वातातपाभ्यामपि शोषण पाक एव । अत एव पाकवशाद्धीनमिष्टकायामविस्तारोभयमुपधानकाले पुरीषेण पूरयेत् ।कुत. ? अनियतपरिमाणत्वात् पुरीषस्य ।न ह्येतावत् पुरीष प्रक्षेपणीयमिति नियम । तस्मात्पाकवशाद्धीनस्य पुरीषेण पूरणमेव । जलार्द्रा मृत् पुरीष । तेनेष्टकाना ह्रास पूरयेत् ।

***Sundararaja* (Sutra 19)**

'त्रिंशदङ्गुल जानुः, इत्याग्निवेश्य. । तस्य पञ्चम षडङ्गुलम्, षडङ्गुलोत्सेधा, इत्येव कात्यायनः ।

**Sundararaja** (Sutra 20)

अधङ्गुलेन ।

**Sundararaja** (Sutra 21 and 22)

शुष्यमाणाना सर्वेपामेतदुपलक्षणम् । यच्छोषपाकाभ्या प्रतिह्रसेत' इत्येव बोधायनः ॥

इति नवम. खण्डः

## अथ दशमः खण्डः

उपधानेऽध्यर्धा दश पुरस्तात्प्रतीचीरात्मन्युपदधाति[1] ॥ (1)

दश पश्चात्प्राचीः ॥ (2)

**Kapradi** (Sutra 1 and 2)

आत्मनि पुरस्ताद्भागे षट्त्रिंशदङ्गुलायामेन कारिताध्यर्धाः प्रतीचीः प्रत्यगायता· दशोपदधाति । आत्मन्येव पश्चाद्भागे ता एवेष्टकाः तत्सङ्ख्याकाः प्राचीः— प्रागायताः[2] ।

पञ्चपञ्च पक्षाग्रयोः ॥ (3)

पक्षाप्ययययोश्च विशयाः ॥ (4)

तासामर्धेष्टकामात्राणि पक्षयोर्भवन्ति ॥ (5)

**Kapardi** (Sutra 3, 4 and 5)

पञ्चपञ्च पक्षाग्रयोर्दक्षिणायताः उदगायताश्च । विशयाश्च पञ्च चोदगायता. दक्षिणायताश्च । इष्टकाशब्देन पञ्चभागीया एव गृह्यन्ते नाध्यर्धा 'विपरीता अप्यया' इति लिङ्गात् ।

पञ्चपञ्च पुच्छपार्श्वयोर्दक्षिणाः उदीचीश्च ॥ (6)

पुच्छे प्रादेशमुपधाय सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् ॥ (7)

**Kapardi** (Sutra 6 and 7)

पञ्चपञ्चाध्यर्धा दक्षिणायता उदगायताश्च यथा समीपे प्रादेशमात्रमवशिष्यते तथोपधेयाः ।

**Karavinda** (Sutra 1 and 2)

उपधानकाले द्वितीयकरणोत्पन्ना इष्टका. आत्मनि पूर्वान्ते दशोपदध्यात् । प्रतीचीः प्रत्यगायाता उदीचीरिति । ता एव दश पश्चात् प्राचीः आत्मनि पश्चिमान्ते प्रागायाता. ता एव ।

---

1. प्रतीचीरुपदधाति,

In the place of the three lines, only
प्रतीचीः—प्रत्यगायता. प्राची.—प्रागायता ।

**Karavinda** (Sutra 3 and 4)

ता एव प्राच्यौ रीत्यौ । पक्षाप्ययोश्च विशया । पक्षाप्यय—पक्षमूल विविधमात्मनि पक्ष च शेरत इति विशया ।

तासा कियदात्मनि कियत्पक्ष इत्याह—

**Karavinda** (Sutra 5)

तासा विशयानामर्धष्टकामात्राणि पक्षयोर्भवन्ति । आत्मानमरत्निना प्रादेशेन पक्षमित्यर्थ । प्राच्यौ रीत्यौ ॥

**Karavinda** (Sutra 6)

पुच्छपार्श्वयो पञ्चपञ्च उत्तरा दक्षिणामुखा दक्षिणा उत्तरामुखा प्राच्यौ रीत्यौ । उत्तरसूत्रे भेदाभावाय पुच्छाग्रप्रादेशस्यापृथग्भोतिता प्रतिपादयिष्यते । अत एता अग्रप्रभृत्युपधेया ॥

**Sundararaja** (Sutra 1 to 6)

प्रतीची प्रत्यगायता । उदीचीरिति आत्मन्येव
एता उदगायता, अन्यथा पञ्चानामसभवात् ।
पक्ष आत्मनि च शेरन इति विशया ।
अरत्निमात्रा ह्यात्मनि ।
प्रादेश पुरस्तादवशिष्य ।

पञ्चदशभागीयाभि सख्या पूरयेत् ॥ (8)

**Kapardi** (Sutra 7 and 8)

पुच्छे प्रादेशमुपधाय आत्मसमीपे यदवशिष्ट तत्प्रादेशमात्रार्धेष्टकाद्वय मध्ये अभित प्रादेशा षट् । षट्सु वितस्त्या च वधनमुक्त कथ प्रादेशमात्रमुपधायेति ? उच्यते—यद्यपि वितस्त्या वधनमुक्त, तथापि करणान्तरस्य विधानात् प्रादेशक्षत्रमेवेष्टकाभिश्चेतव्यमिति यदङ्गुलिमात्र परिगृहीत[1] तत्पुरीषेण पूरयितव्यम् । अमुमेवार्थ प्रदर्शयितु प्रादेशमुपधायेत्युक्तम् । सर्वमग्निमिति—पञ्चाशदष्टर्वा सूत्रोक्ता पुच्छेऽर्धष्टकाद्वय प्रादेशाष्षट् इतरत्सर्वमग्निक्षत्र ? प्रथमकरणसम्पादिताभि प्रच्छादयेत् । दशोत्तर शत पञ्चमभागीयाश्शेरते । पूर्वाभिस्सहाष्टषष्टयधिक शतम् । पञ्चदशेति—एकस्मिन्पञ्चमभागीयाक्षत्रे नव पञ्चदशभागीयाश्शेरते । चतस्र पञ्चमभागीया नवधा विभज्य[2] यत्र क्वापि पञ्चदशभागीया क्षप्तव्या

1 मात्र सवत परिगृहीत 2 नवधा विच्छिन्द्याद

तत्रापि मन्त्रोपधानसौकर्यार्थं प्रादेश उच्यते[1] । आत्मनि द्वितीयरीत्या मध्ये द्वयमपहायाष्टादश[2] । अष्टम्या न रीत्या अष्टादश । एवं द्विशतः प्रस्तारः ॥

**Karavinda (Sūtra 7)**

पुच्छे यत्पुरुषाधिकं प्रादेशशेषं तदुपधाय सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् । पुच्छाग्रप्रभृति प्रच्छादयेत् । अयमाशयः—आत्मवत् पुच्छे च पुरस्तात्प्रभृति पञ्चमभागीयाभिः प्रच्छाद्यमानेऽग्रे प्रादेशमवशिष्यते । अस्मिन् योगाभिरिष्टकाभिरपहृते पुच्छे न यह्वो भेदा भवन्तीति मत्वा आचार्य तत्परिहारायाग्रमारभ्य पुच्छे प्रादेशोपधानपूर्वकं प्रच्छादयेदिति । यद्वा—प्रादेशं पुच्छ उपधाय—पुच्छे नयोज्य यथा प्रादेशं पुच्छात् पृथग्गीति न भवति तथा कृत्वेत्यर्थः । यद्वा प्रादेशं पुच्छ उपधाय पुच्छे निधाय—स्थापयित्वा 'तामा पद्प्रथा उपधायेति'वत् । यद्वाऽग्रगतं प्रादेशं पुच्छमूले निदध्यात् । भेदं विपर्यस्येतरत उपदध्यादिति । तदयमर्थः —यावता वचनव्यक्तिः सर्वथा भेदाभावाय पुच्छाग्रं पुच्छात् पृथग्गीति न कुर्यात् इति तात्पर्यार्थ इति । सर्वेषु पक्षेषु अतिरिक्तं प्रादेशं पुच्छमूलेऽनुपहितमवशिष्यते । तदभितः प्रादेशाभिरर्धेष्टकाभिरुपदध्यात् । किञ्च उपरितनप्रस्तारे 'यथा प्रथमे प्रस्तारे पक्षौ तथा पुच्छमिति' वचनात् पुच्छमूलेऽतिदेशप्राप्तानामध्यर्धानां वैपरीत्यं वक्ष्यति— विपरीता अध्यर्धा' इति । तच्चैवमुपधाने समञ्जसं स्यात् । इतरथा विरुद्धार्थमनर्थं च स्यात् । तस्मात्

पुच्छे प्रादेशमुपधायेत्यस्य भागस्यायमेवार्थो ग्राह्य । ननु कथं सर्वस्याग्ने पञ्चदशभागीयाभिः प्रच्छादनम् ? उच्यते—मन्त्रोपहितानामिष्टकानामबाधेन सर्वस्मिन्नग्नौ पञ्चमभागीयाभिः प्रच्छाद्यमाने तदेकदेशे तासामसम्भवे सत्याख्यातानामर्थं ब्रुवता शक्तिः सहकारिणी न हि वचनशतेनाप्यशङ्कनीयार्थश्शक्यो विधातुमिति चतुरश्राभिः प्रच्छादयितुमशक्यत्वात् प्रथमप्रतीतसर्वशब्दानुरोधेन जघन्यः पञ्चमभागीयाशब्दो बाहुल्याभिप्रायो वर्णनीयः । तेन तत्तत्सहकारिणीभिरन्याभिः सम्भवन्तीभिरपि प्रच्छादनं कार्यमित्येवमर्थं प्रादेशानामत्र प्राप्तिः । एष न्यायस्तत्राङ्गीकरणीयः । तत्रत्याभिरनुरक्ताभिरपि प्रच्छादने किं वाऽर्धेष्टका करणेनोत्पन्ना न कुत्रचिद्विनियुक्ता । तासामुपदेशबलादेव अत्र सङ्ख्यापूरणे प्रच्छादने च यथायोगं विनियोगः कार्यः । किञ्च-यच्चतुरस्रं त्र्यस्रं वा सम्पद्येतार्धेष्टकाभिः पादेष्टकाभिर्वा प्रच्छादयेदिति परिभाषा वक्ष्यति । तथा चात्र समुपधानं स्यात् । अत्रात्मनि सन्ध्यन्तराले चत्वारिंशत् पञ्चम-

1 अत प्रादेश उच्यते     2 मध्ये द्वयमुपधाय

भागीयास्तासां पुरस्ताद्दश पश्चाच्च दश । पक्षयोर्विंशतिः पुच्छे दश । ता एता दशोत्तरशतं पञ्चमभागीयाः, पञ्चाशदर्धाश्चतस्रोऽर्धाः द्वौ प्रादेशाविति षट्षष्टिः शतं चेष्टकाः । 'साहस्रं चिन्वीत प्रथमं चिन्वान' इत्यादिभिर्वाक्यैः प्रत्यग्नीष्टकानां साहस्रादयस्सङ्ख्या विधास्यन्ते । ताश्च प्रतिचिति प्रतिप्रस्तारं च भिद्यन्त इति च तत्रैव प्रतिपादयिष्यते । सा सहस्रसङ्ख्या कथमत्र सम्पाद्येत्याह ॥

**Karavinda (Sūtra 8)**

पञ्चदशभागीयाभिरष्टाङ्गुलाभिस्सङ्ख्या पूरयेत् । का सङ्ख्यात्र पूर्यते ? किं समुदायगता ? उत प्रस्तारगता अविशेषात् ? न समुदायगता आनन्तर्यात्, प्रतिप्रस्तारं शतद्वयनियमाच्च, प्रस्तारगतैव सङ्ख्या तत्र पूर्यते, अस्य वचनस्य सामर्थ्यादवसीयते सङ्ख्यापूरण उपधानाय प्रच्छादिकासु कासाचिदुद्धरणं प्रचालनं वा यथायोग न्याय्यमिति । अत्र प्रस्तारशतद्वयसम्पत्तये चतुस्त्रिंशत्सङ्ख्या सम्पाद्या । सा च प्रच्छादितासु काश्चिदुद्धृत्य योग्येष्टकोपधानेन भवति । तत्रैकस्मिन् पञ्चमभागीयाक्षेत्रे नवपञ्चदशभागीयाश्शेरत इति । तत्रतत्रोपधाने देशानियमे तदुद्धरणेन तासामुपधाने कार्ये मन्त्रोपधानसौकर्याय उद्धरणोपधानदेशनियम उच्यते । तत्रात्मनि प्राच्यो दश रीतयः, तत्र मध्यमरीत्यो. द्वितीये उद्धृत्य तत्र अष्टादश पञ्चदशभागीया आवपेत् । तयोरेव रीत्योरुपान्ते उद्धृत्याष्टादश आवपेत् । पुच्छे चतस्र प्राच्यो रीतय, तत्र मध्यमयारन्त उद्धृत्य चतस्रोऽर्धेष्टका उदीचीरुपदध्यात् । एव द्विशत प्रस्तार पूर्यते । अत्रैके पुच्छाग्रे दश प्रादेशानुपधाय पञ्चमभागीयाभिः प्रच्छादयन्ति, तेषा च विपरीतवचनानर्थक्यप्रसङ्गो भेदप्रसङ्गश्च भवतीति तथा नोपधेया । किञ्च—यदि पुच्छाग्रे प्रादेशानामुपधानमपीष्टमभविष्यत्तर्हि पादेष्टकाश्चतुर्भागीयाना पक्षाग्रयोः पञ्चदश पुच्छाग्र इति च स्पष्टतरं पुच्छाग्र इत्येवावक्ष्यत् । न चैवमुक्तं । तस्मादुक्तविध एवोपधानक्रम इति स्थितम् ॥

**Sundararaja (Sūtra 7 and 8)**

पुच्छादवशिष्ट प्रादेशक्षेत्र याभिरिष्टकाभिर्भेदपरिहारेणोपधातु शक्यते ताभिरुपदध्यात् । तत्र पार्श्वयोर्द्वे प्रादशमात्र्यौ मध्ये चतस्रोऽर्धेष्टका उदगायता । एतदेव प्रादेशकरणस्य प्रयोजनम् । अत. प्रादेशाभावेन क्रियते । शिष्टाग्नौ पञ्चमभागीयाभि. प्रच्छादिते षट्षष्टिशतमिष्टका भवन्ति । अरत्निप्रादेशरहिते पञ्चाशच्छत इष्टका भवन्ति । तत्र आत्मन्युदीच्यो नव रीतय. । तत्र आत्मनि मध्यमाया मध्यमाश्चतस्र उद्धृत्य षट्त्रिंश-

दष्टाङ्गुला निधेया । अरत्निप्रादशाभावे षड्डुद्धृत्य चतुपञ्चाशन्निधेया । उभयत्रापि पुच्छाग्रे द्वे पञ्चम्यावुद्धृत्य चतस्रोऽर्धेष्टका उपधेया उदगायता । एव द्विशत प्रस्तार ॥

अपरस्मिन्प्रस्तारेऽध्यर्धा दश दक्षिणत उदीचीरात्मन्युपदधाति ॥ (9)

दशोत्तरतो दक्षिणाः ॥ (10)

**Kapardı** (Sutra 9 and 10)

आत्मनि दक्षिणत उदीचीरुदगायता दशाध्यर्धा उपदधाति आत्मन्येवोत्तरत[1] दशाध्यर्धा दक्षिणायता ।

यथा प्रथमे प्रस्तारे पक्षौ तथा पुच्छम् ॥ (11)

यथा पुच्छं तथा पक्षौ ॥ (12)

विपरीता अप्यये ॥ (13)

**Kapardı** (Sutra 11 12 and 13)

पुच्छाग्रे पश्चादध्यर्धा प्रागायता । दक्षिणे पक्षे पश्चात् पञ्च प्रागायता । पुरस्ताच्च पञ्च । षट्प्रत्यगायता । उत्तरपक्षे चैव प्रागायता प्रत्यगायताश्च । पुच्छाप्ययेऽध्यर्धा पञ्च प्रागायता प्रत्यगायताश्च : पुच्छाप्ययेऽध्यर्धा पञ्च प्रागायना ० । तासामर्धेष्टकामात्रा आत्मनि भवन्ति । एव विपरीता अप्यये । तासा पुरस्तात्पञ्चार्धेष्टका उदीच्य ।

सर्वमग्निं पञ्चमभागीयाभि. प्रच्छादयेत् ॥ (14)

पञ्चदशभागीयाभिस्तस्या पूरयेत्॥ (15)

**Kapardi** Sutra 14 and 15)

गतमेतत् । पूर्ववद्द्विशत प्रस्तार ।

**Karavinda** (Sutra 9 and 10)

द्वितीये प्रस्तारेऽध्यर्धा आत्मनो दक्षिणे भाग दशोपदध्यादुत्तरे दश ॥

**Karavinda** (Sutra 11 and 12)

प्रथमप्रस्तारे यथा पक्षावुपहितौ तथा पुच्छे । यथा पुच्छमुपहित तथा

1. आत्मन्येव दशोत्तरत , ० प्रत्यगायताश्च । + प्रागायता (अधिकोश) पुनरुक्तमिदं ।

पक्षयो । एतदुक्त भवति—पुच्छाग्रे पुच्छाग्रमन्धो पञ्च पञ्चाध्यर्धा उपधेया । पक्षयोस्तु पार्श्वयो. अध्यर्धा उपधेया , तत्र विशेषमाह—

Karavinda (Sutra 13)

पुच्छाप्यये पक्षाप्ययवदतिदेशप्राप्तानामध्यर्धाना आत्मनि अरत्निमात्रत्व पुच्छेऽर्धेष्टकामात्रत्व च प्राप्नोतीत्यत आह । अत्र विपरीता भवेयुरर्धेष्टका मात्राण्यात्मनि भवेयुररत्निमात्राणि पुच्छ इत्यर्थ । अस्य च भेदाभावः प्रयोजनमिति पूर्वस्मिन्नेव प्रस्तार उक्त ।

Karavinda (Sutra 14)

अत्र पुरस्तात् प्रभृत्यात्मनि प्रच्छाद्यमाने पुच्छाप्ययविशयाना पुरत पुरुषमात्रे प्रादेशोऽवशिष्यते । तत्र पञ्चमभागीयानामसम्भवात् भेदाभावाय पञ्चार्धेष्टका उदीच्य उपधेया , तामामुपधाने हेतुरुक्त । अनात्मन्यध्यर्धाना मध्ये पञ्चपष्टि पञ्चमभागीया पञ्च चार्धा, पक्षयोर्द्वादश द्वादश पञ्चमभागीया , पुच्छे पञ्चदश ता एता चतुरुत्तरशत पञ्चमभागीया., पञ्चचार्धा , चतु पञ्चाशदध्यर्धा । ता एता त्रिपष्टिश्शत च, अत्र सप्तत्रिंशत्सङ्ख्या सम्पाद्या ॥

Karavinda (Sutra 15)

अत्र पक्षयोरात्मनि पुच्छे चतस्र पञ्चमभागीया उद्धृत्य पट्त्रिंशत पञ्चदशभागीया उपदध्यात् । आत्मनि पूर्वस्या रीत्या मध्ये पञ्चोद्धृत्य दशार्धेष्टका उदीचीरुपदध्यादेव द्विशत प्रस्तार ॥

Sundararaja (Sutra 9, 10 and 11)

अत्राप्यययो पञ्चपञ्चाध्यर्धा । पार्श्वेपु पञ्चपञ्चाध्यर्धा., अरत्निवृद्धौ पट्पडिति द्रष्टव्यम् । पुच्छाप्यये या उपधीयन्ते तासामर्धेष्टकामात्राण्यात्मनि भवन्ति । पुच्छेऽरत्निमात्राणि । एतच्च प्रादेशवृद्धौ । इतरथा अर्धेष्टकामात्राण्येव पुच्छे ।

Sundararaja (Sutra 14 and 15)

पूर्ववदात्मनि मध्ये चतस्रष्पड्वोद्धृत्य एकैकस्य स्थाने नवनवाष्टाङ्गुला । सारत्निप्रादेशपक्ष पुच्छाप्ययस्थाभ्य प्राक्पञ्चार्धेष्टका उदगायता उपधेया । आत्मनि पूर्वरीत्या मध्यमा पञ्चोद्धृत्य दशार्धेष्टका उदगायता उपदध्यात् । एव द्विशत । अरत्निप्रादेशाभावे तु चतु.पञ्चाशता पञ्च-

दशभागीयाभि द्वयून द्विशत भवति । पुच्छपार्श्वयोरेवैकैका पञ्चमीमपोह्य चतस्रोऽर्धेष्टका प्रागायता । एव द्विशत ।

व्यत्यास चिनुयाद्यावतः प्रस्ताराश्चिकीर्षेत् ॥ (16)

**Kapardi (Sutra 16)**

गतमेतत् ।

पञ्चचितयो भवन्ति ॥ (17)

पञ्चभिः पुरीषैरभ्यूहतीति पुरीषान्ता चिति ॥ (18)

अर्थान्तरत्वात्पुरीषस्य ॥ (19)

**Kapardi (Sutra 17 18 and 19)**

इष्टकामन्धानार्थं पुरीषम् । तस्मात्तदन्ता चिति । तदर्थत्वात्तद्ग्रहण गृह्यते ।

जानुदघ्नीं साहस्र चिन्वीत प्रथम चिन्वान ॥ (20)

**Kapardi (Sutra 20)**

य प्रथम चिनोति स जानुदघ्नी चिनुयात् सहस्रसङ्ख्यायुत च । महाग्निमेवाधिकृत्य विधानान्न शालामुखीयधिष्णीयाना सहस्रसङ्ख्याया-मन्तर्भाव । नापि जानुदघ्नीता ॥

नाभिदघ्नीं द्विसाहस्र द्वितीयम् ॥ (21)

आस्यदघ्नीं त्रिसाहस्र तृतीयम् ॥ (22)

उत्तरमुत्तर ज्यायाम्सम् ॥ (23)

**Kapardi (Sutra 21 22 and 23)**

नाभिप्रमाणमुत्सेधत द्विसाहस्र द्वितीय चिन्वान । आस्यप्रमाण तृतीय चिन्वान । त्रिसाहस्र च ग्रीवदघ्नमित्यस्मदीया श्रुति ।

महान्त बृहन्तमपरिमित स्वर्गकामश्चिन्वीतेति विज्ञायते ॥ (24)

**Kapardi (Sutra 24)**

उत्तरमुत्तरमाहारमाहरेत् । ज्यायान् विधाम्यासेन । महानुत्सेधत । बृहत्परिमाणत । अपरिमित सहस्रादिभ्य । स्वर्गकाम' इति वचनादग्नि-कल्पे 'वाजिननैमित्तिकमिति' वचनाच्च विकल्प ।

**Karavinda (Sutra 16)**

गत ।

ननु व्यत्यासो नाम यस्मिन् प्रस्तारे यत्र यादृशानामुपधान कृत तदनन्तरे प्रस्तारे तत्रान्यादृशानामुपधान तादृशानामेवान्यतो दीर्घाणाम् । नच भेदाभाव प्रयोजनम्, स चेहाचार्यप्रवृत्त्यैव सिद्ध, तत्किमर्थमिदमुच्यते व्यत्यास चिनुयादिति ? उच्यते—अन्यप्रस्तारद्वये सूत्रकारस्य व्यत्यासोपधानविधेरुपर्युपरि प्रस्तारेष्वनियमाशङ्का मन्दधिया न भवेदिति व्यत्यासवचनम् । किञ्च मन्त्रोपधानोत्तरमपि प्रामादिकभेददर्शने तत्परिजिहीर्षया लोकवदुपहितानामेव प्रचालनादिप्राप्तौ 'स इन्द्र इष्टकामावृहत् । ते वा कीर्यन्तेति' दोषदर्शनादचालनाय शुल्वोपधानसमय एव शुल्बकुशलैर्नियतदेशानामबाधेन भेदाभाव परिहरणीय इत्येवमर्थं व्यत्यासवचनम् ।

**Karavinda (Sutra 17, 18 and 19)**

*जलार्द्रा मृत् पुरीषम् । अभ्यूहनमुपलेप । उपधायोपधाय ता ता* चितिं जलार्द्रया मृदोपलिम्पेत । द्वाभ्या वाक्याभ्यामेका चिति पुरीषोपधानपर्यन्ता ज्ञेया । न केवलेत्यर्थ । अर्थान्तरत्वात पुरीषस्य अर्थ—प्रयोजन । अन्तरा—भेद । प्रयोजनान्यत्वादित्यर्थ । चितीनामन्यत्प्रयोजन पुरीषाणा चान्यत् । चितीना प्रयोजनभूतात् जानुदघ्नवदुत्सेधकरणादन्यत् प्रयोजन पुरीषस्य । तच्चेष्टकाना शोषपाकागतह्रासपूरण परस्परसश्लेषश्च[1] । अत एव चानियतपरिमाण पुरीषम् । न च एतावद्भि पुरीषैर्ह्रासपरिहार परस्परसश्लेषश्च भवतीति प्रमाणमस्ति । तस्मादनियतप्रमाण पुरीषम् । अत उक्त पुरीषाणा चितिरिति । तथाच श्रूयते—'पुरीषेणाभ्यूहति । तस्मान्मासेनास्थि च्छन्नमिति' । अयमर्थ –यथा शरीरावयवभूतान्यस्थीनि मासैश्छन्नान्येव शरीरकार्ये प्रभवन्ति । एवमवयवभूतेष्टका सवत पुरीषैश्छन्ना एवाग्निकार्ये प्रभवन्ति । तस्मादभ्यूहनपर्यन्ता चिति । *किञ्च यदि पुरीषोपधान स्वार्थं तदा जानुदघ्नाद्यतिरिक्तप्रमाणताग्ने* स्यात् । अत उक्तमेव प्रयोजनम् । अनेन 'दश सम्पद्यन्ते द्वादश सम्पद्यन्त' इति चार्थवाददर्शनेन चितिपुरीषयोर्भिन्नार्थताशङ्का माभूदिति एकार्थता प्रतिपादिता ।

**Karavinda (Sutra 20 21 22, 23 and 24)**

अत्र जानुदघ्न चिन्वीत प्रथम चिन्वान' इत्याद्या उत्सेधविधायिका स्तिस्रश्श्रुतय । तथा 'सहस्र चिन्वीते' त्याद्या अग्नेरिष्टकासङ्ख्याविधा-

[1] सश्लेषण च

यित्वासितसंस्तुतय । जानुदघ्नं जानुप्रमाणं, नाभिदघ्नं नाभिप्रमाणं आस्यदघ्नमास्यप्रमाणम् । साहस्रं सहस्रसङ्ख्यया परिमितं । द्विसाहस्रं द्वाभ्यां सहस्राभ्यां परिमितम् । त्रिसाहस्रं त्रिभिस्सहस्रैः परिमितम् । उत्सेधविषयं तत्सम्पादनापेक्षा । सङ्ख्याविषयं तदाश्रयापेक्षा । तेषां यथाक्रमं नष्टाश्वदग्धरथवत् परस्परापेक्षया मेलनेन पठिता । ज्यायांसमुत्कृष्टमर्दनादिकल्पे उत्कृष्टश्च समर्जनीयैः, महान्तमुत्सेधतः, बृहन्तं परिमाणतः, अपरिमितं सङ्ख्यात उक्तः । सङ्ख्यादिरपरिमितं परिमितात् परिमाणात् भूयः प्रमाणं साहस्रं नास्य प्रमाणमिति कात्यायनः । स्वर्गकामस्य तु विशेषतः । अकामस्य तु नित्य एव । स्वर्गकामस्येत्युक्ते [1] अग्निकल्पे वाजसनेयिकमिति' वचनाच्च द्विसाहस्रादीनां विकल्पः । ग्रीवदघ्नमिति तैत्तिरीयके श्रूयते । उभयमप्येकार्थमेव । इष्टकाद्रोधकरणान्तराविधानात् । समानं हि निगेग्रीवमिति ब्राह्मणदर्शनाच्च । (किञ्च ग्रीवास्ययोः पर्यायत्वदर्शनाच्च) । किञ्च ग्रीवास्ययोः पर्यायत्वं नाम न दृश्यते—दशास्यो दशग्रीव इति । तस्माद्द्वयोरेकार्थता ।

विज्ञायते च 'न ज्यायास चित्वा कनीयास चिन्वीते' ति ॥ (28)

**Karavinda** (Sutra 25, 26 27 and 28)

निगदव्याख्यातमेतत् । चतुर्थे ति—इष्टकापरिमाणमिह त्रिपाहस्रमित्युच्यते । त्रिपाहस्रमेव नियत । यदीद नोच्येत अनीकवदावृत्तिस्स्यात् । अन्यस्याविधानात् । अमुमेवार्थं दर्शयितु श्रुति दर्शयति—विज्ञायत इति । ज्यायास—द्विपाहस्र त्रिपाहस्र वा चित्वा कनीयास—साहस्र न चिनुयादिति प्रतिषेध । तथाऽर्वाष्टममर्धनवम वा चित्वा एकविधाद्यार्धविधपर्यन्ता न चेतव्या ।

**Karavinda** (Sutra 25 and 26)

उत्मेधाधिक्य च प्रस्तारानेकत्वे न भवतीत्याह—

द्विपाहस्रेऽग्नौ द्विप्रस्तारा चितयो भवेयु । त्रिपाहस्रे त्रिप्रस्तारा । प्रतिप्रस्तार तूष्णी तूष्णी पुरीषाभ्यूहनम् । 'तासु पुरीषमभ्यूहतीति' दर्शनात् । अन्ये च चितिधर्मा ।

**Karavinda** (Sutra 27)

आहारेषु—प्रयोगेषु । चतुर्थप्रभृतिषु प्रयोगेष्वनन्तरोक्त त्रिपाहस्र नित्य, न न्यूनाधिकमित्यर्थ । नन्वनन्तरार्थादेव त्रिपाहस्र चतुर्थप्रभृतिषु नित्य भविष्यति किमर्थमिदमुच्यते ? उच्यते यदीदं नोच्यते, तर्हि अनीकवदावृत्ति प्रसज्येत । यद्वा द्वितीयतृतीयनिमित्ता विवृद्धिरिति चतुर्थादिषु साहस्रमेव वा प्रसज्येत । अत इदमुच्यते—'नित्यमिष्टकापरिमाणमिति' । अमुमेवार्थं श्रुत्या प्रथयति—

**Karavinda** (Sutra 28)

ज्यासांसमधिकप्रमाण कनीयासमल्पप्रमाणम् । द्विपाहस्र त्रिपाहस्र वा कृत्वा न साहस्र चिन्वीत । तात्रिपाहस्रमेव चिन्वीत । तत्र श्लोका —

यदत्र पुच्छे प्रादेशमुपधायेति सूत्रितम् ।
तदभेदाय पुच्छाग्रे पृथग्रीतिनिषेधकम् ॥
अग्रस्य रीतिभेदे स्युबह्वच पुच्छे भिदा यत ।
अत पुच्छादनारम्भ पुच्छाग्रप्रभृतिर्भवेत् ॥
तयोपधाने तन्मूले यत्क्षत्रमतिरिच्यते ।
चतुर्भिरर्धे प्रादेशसहितैश्छादयेत्तत [1] ॥

---

1 तु तद०

अव्यये विपरीतोक्तिरेवमर्थवती भवेत् ।
प्रादेशमात्रा नाग्रे स्युस्तथा बहुभिधा यतः ।
छादने विनियुक्तानां सामर्थ्यं नास्ति यत्र तु ।
तत्रान्याभिस्समर्थाभिस्तत्रत्याभिश्छदिर्भवेत् ॥
प्रच्छादयेति वचनं सर्वाग्निविषयं यतः ।
अतः पञ्चमभागीया पाणिबाहुल्यहेतुका ॥
व्यत्यासेनोपधानस्य व्यत्यासवचनस्य च ।
पुनःक्रिया तत्र तत्र भेदाभावैकहेतुका ॥
व्यत्यासे लोकतस्सिद्धे तत्रासौ यतते यतः ।
तेनेष्टका मात्रभेदोऽप्यमृष्य इति गम्यते ॥
सङ्ख्यामात्रमनूद्येह पूरणं विदधाति यत् ।
तेन मन्यामहे साम्यं सर्वप्रस्तारगोचरम् ॥
न्यूने तु पूरयेदुक्तैः साम्यस्यायतनस्थितेः ।
अतिरेके क्रमाभावात् प्रस्तारास्सर्वतस्समाः ॥

Sundararaja (Sutras 25 and 26)

प्रतिप्रस्तार सधानार्थं पुरीषं भवति । चित्यन्ते मन्त्रत ।

Sundararaja (Sutra 27)

नित्यमुत्तरं त्रिपाहस्रमेव—

Sundararaja (Sutra 28)

सर्वेष्वग्निषु दक्षिणोत्तरे पार्श्वे सदृशे एवोपधेये । तथा पाश्चात्यपौरस्त्ये । यदेवमाह–'मध्यमा दश पुरस्ताद्दश पश्चात् अष्टावष्टौ पादेष्टकाः पक्षाग्रयोरन्ततस्सन्ततरा पक्षाग्रीयाः' इत्यादि । तदाह बोधायनः—'पशुधर्मा ह वा अग्निर्यं यतोऽदक्षिणोपामस्य्ना यद्दक्षिण तदुत्तरेणामुत्तरम्, इत्यादि । एतच्च गति सम्भवे, यदाह— द्वितीयचतुर्थयोश्चान्यतरत, प्रतिसंहितामेकैकां त्रिसप्ताष्टम, एवां पञ्चमीम्' इति च । द्विनता एव सर्वे प्रस्तारा । प्रतिप्रस्तार सम्यापूरणवचनात् रथचक्रे द्विनतयोरेव प्रस्तारयोर्वचनात् एष द्विनत-प्रस्तार इति श्येनचिति वचनाच्च । यतद्योढा नारमदसंकीर्त्य सम्येयाः । बोधायनस्त्वाह—'पञ्चम्यां वा चितौ सम्यापूर्ति द्विनता-प्रस्तारा । पञ्चपोढाभिर्नासमदस्समानमस्या प्रतीयान्' इति ॥

इति दशमः खण्डः

इति तृतीयः पटलः ॥

# चतुर्थः पटलः

## अथ एकादशः खण्डः

चतुरस्राभिरग्निं चिनुत इति विज्ञायते ॥ (1)

समचतुरस्राः ॥ (2)

अनुपपदत्वाच्छब्दस्य ॥ (3)

**Kapardi** (Sutra 1, 2 and 3)

अस्याश्श्रुतेरर्थस्तेर्श्यते—किं समानानां चतुरस्राणां चाविशेषग्रहणं आहोस्वित् समानानामेवेति ? कुतः ? विशेषाग्रहणात् । न कश्चिद्विशेषः श्रूयते । तस्मादविशेषेणेति प्राप्ते उच्यते–समचतुरस्रा एव ग्राह्याः । कुतः अनुपपदत्वाच्छब्दस्य । यत्रोपपदं न श्रूयते दीर्घा विषम इति वा तत्र समचतुरस्राणामेव मुख्यत्वात् मुख्येर्थे प्रथमं प्रत्ययो भवति; यतः प्रतीयते तस्यार्थो भवति । इतरत्र गौणः । तस्मात्समचतुरस्राभिरेवोपाधातव्यः । नाध्यर्धाभिरिति स्थितम् ।

पादमात्र्यो भवन्त्यरत्निमात्र्यो भवन्त्यूर्वस्थिमात्र्यो भवन्त्यणूकमात्र्यो भवन्तीति विज्ञायते ॥ (4)

**Kapardi** (Sutra 4)

चतस्र एताश्श्रुतयाः । तास्स्वयमेव व्याचष्टे—

चतुर्भागीयमणूकम् ॥ (5)

पञ्चमभागीयारत्निः ॥ (6)

तयोर्वस्थि ॥ (7)

**Kapardi** (Sutra 5, 6 and 7)

अणूकशब्दः पुरुषचतुर्थस्य वाचकः । अरत्निः पञ्चमस्य । तथा—तेनैव प्रकारेण ऊर्वस्थि षष्ठस्य । षड्भागीया इति शुल्बान्तरे ।

पादेष्टका पादमात्री ॥ (8)

तत्र यथाकामी शब्दार्थस्य विशयित्वात् ॥ (9)

**Kapardı (Sutra 7 and 8 )**

चतुर्भागीय पाद इति सज्ञा विहिता शास्त्रान्तरे । पादशब्देन प्रमाणचतुर्भागो गृह्यते क्षेत्रचतुर्भागश्च । पाद प्रमाणमस्या पादमात्री । पादशब्दस्य सबन्धशब्दत्वात् पुरुषचतुर्भागोऽपि गृह्यते अणूकादिचतुर्भागश्च सन्निहितत्वात् । तेषा पादेष्टकाभिरित्युक्ते पुरुषचतुर्भागा अणूकादिचतुर्भागाश्च प्रतीयन्ते । कुत ? शब्दार्थस्य विष(श)यित्वात् । वक्ष्यति च— अणूका पञ्चदशभागीयाना स्थान इति । सङ्ख्यापूरणेऽणूकाना प्रवेश दर्शयति । ऊर्वस्थ्यरत्नयो एकार्थत्व केचिदिच्छन्ति । ते पञ्चदशभागीयाभिस्सङ्ख्यापूरण कुर्वते । तेषा दर्शने प्रस्तारा न युज्यन्ते । सहस्रसङ्ख्या तु पूर्यते प्रतिप्रस्तारमिति वचनमनर्थकमापद्येत । ये प्रस्तारा ते द्विशता इति वचनानि न युज्यन्ते[1] । तस्मात्पूर्वोक्त एवार्थो ग्राह्य । सर्ववचनानामर्थवत्त्वाय ।

**Karavında (Sutra 1)**

चतुष्कोणाभिरिष्टकाभिरग्नि चिनुते । कीदृश्यो ग्राह्या इत्यत आह—

**Karavinda (Sutra 2 and 3)**

ता इष्टका अदीर्घविषमा समचतुरस्रा ग्राह्या । कुत ? अनुपपदत्वाच्छब्दस्य । न ह्यत्रोपपद श्रूयत दीर्घाभिरिष्टकाभिर्विषमाभिर्वेति । अत 'सम स्यादश्रुतत्वादिति' न्यायेन समा एव स्यु । पूर्वस्मिन्नग्नौ दीर्घाश्च सन्ति । अतो विधिभेदाद्वा[2] विकल्प पूर्वेणाग्निना । नित्यश्चाकामश्रुते । अग्निकल्पस्यैव श्रवण प्रदर्शनार्थम् । आसा श्रुत्यैव दर्शयन्नाह—

**Karavinda (Sutra 4)**

एताश्चतस्रश्श्रुतय इष्टकाना प्रमाण विदधति । सम्भवाच्च तासा समुच्चय । पादमात्र्य —पादप्रमाणा । पादशब्दश्चरणचतुर्थभागादौ वर्तते । इह चतुर्भागवाची । स चतुर्भागोऽणकादीना[3] ग्राह्य इत्युत्तरसूत्र

1 वचनात् न युज्यन्ते । 2 विधिभेदात् ।
3 अणूकानां ।

प्रतिपादयिष्यते । पादप्रमाणाः पादमात्र्य । अरत्निः सकनिष्ठिकः करः । स च पुरुषस्य पञ्चमभागः । वक्ष्यति च पञ्चारत्निः पुरुषः चतुर्विशत्यङ्गुलयोरत्निरिति । तत्प्रमाणा अरत्निमात्र्य । उर्वस्थि—ऊर्वोरस्थि । अणूकं पृष्ठवंशः । ता ऊर्वस्थिजान्वस्थिनाम्न्ययोर्णूकस्येत्यत्र व्याख्यानात् । पुरुषस्य षष्ठो भाग—उर्वस्थि । चतुर्थो भागोऽणूकः । एतच्च उत्तरसूत्रे स्पष्टं वक्ष्यति । तत्प्रमाणा उर्वस्थिमात्र्य । अणूकामात्र्यश्च।

आ(ता)सामेवाधिकप्रमाणवशेन सञ्ज्ञाविशेषविधानार्थमाह—

**Karavinda** (Sutra 5, 6 7 and 8)

अणूकारत्न्यूर्वस्थिशब्दैः तन्मात्र्य इष्टका गृह्यन्ते । उपसंहारे पादमात्रीष्टकेति दर्शनात् । सञ्ज्ञासु स्त्रीलिङ्गनिर्देशाच्च । किञ्चाणूकादिशब्दैरपीष्टकानां व्यवहारा दृश्यन्ते । 'अणूकाः पञ्चदशभागीयना स्थाने सन्ध्यन्तराले पञ्चमभागीयास्सपादा ता आत्मनि चतुर्दशभि पादैर्यथायोग पर्युपदध्यात्' इत्यादिषु अणूकमात्री चतुर्भागीया तत्सञ्ज्ञा भवतीत्यर्थ. । पञ्चमभागीयारत्निः-अरत्निमात्री पञ्चमभागीयाख्या । तथोर्वस्थि—उर्वस्थिमात्री षड्भागीयाख्या । पादेष्टका—पादमात्री । ननु कथमेतल्लभ्यते षड्भागीयोर्वस्थीति ? तथेति प्रकारातिदेशात् । कथमतिदेशः ? यथारत्निमात्रीसङ्ख्या सन्निकर्षेण स्वपूर्वोक्तारत्निमात्रीप्रमा(णे)णान्यूनानन्तरपरिमाणवचनसञ्ज्ञा स्यादिति तथोर्वस्थिमात्र्यपि सङ्ख्या तत्सन्निकर्षेण स्वपूर्वोक्तारत्निमात्री प्रमाणान्यूनानन्तरपरिमाणवचनसञ्ज्ञा स्यादिति । किञ्च षड्भागीयोर्वस्थीति वक्तव्ये तथेत्ययमतिदेश. प्रकृतपुरुषावयवप्रमाणप्रकारसमाप्तिसूचनार्थः । तेनोर्वस्थ्यन्तानामेवावयवप्रमाणपरिमाणत्व न पादमात्रीणामिति ज्ञायते । अतस्स्ववाक्यमन्निहितत्वात् 'उपधानेऽष्टावष्टौ पादेष्टका चतुर्भागीयाना पक्षाग्रयोर्निदध्यात् । सन्ध्यन्तराले पञ्चमभागीयास्सपादा ता आत्मनि चतुर्दशभि पादैर्यथायोग पर्युपदध्यात्' इति दर्शनाच्च । अणूकादीना पादा इह पादत्वेन गृह्यन्ते न चरणादयः । किञ्च श्रुतिदृष्टमपहायाणूकादीना व्युत्क्रमेण पाठपौर्वापर्ये पूर्वस्य प्रमाणाधिक्यज्ञापनार्थं । तेनोर्वस्थिप्रमाणानामरत्निमात्रीभ्यो न्यूनप्रमाणत्व पादमात्रीणामणूकारत्न्यूर्वस्थिमात्रीभ्यो न्यूनप्रमाणत्व च ज्ञापित भवति । एतच्च सर्वमुक्त भगवता बोधायनेन—'समचतुरस्राभिररत्निं' चिनुत 'इत्युपक्रम्य तस्येष्टका कारयेत् । पुरुषस्य चतुर्थेन पञ्चमेन षष्ठेन दशमेन च' इति वदता । अतोऽणूकादिपादा इह पादत्वेन गृह्यन्ते । ते च तेषामर्धेन ग्राह्या. । अर्धप्रमाणेन पादप्रमाण विधीयत इति न्यायात् । अत

पञ्चदशाङ्गुलाणूरूपादा द्वादशाङ्गुलारत्निपदा दशाङ्गुला ऊर्वस्थिपादा। तेनेह षड्विधा इष्टका। तादृशं करणं कार्यां। नन्वणूकादिशब्दैरासां परिमाणज्ञाने व्यवहारे च सिद्धे किमर्थं महत्य संज्ञा क्रियन्ते? उच्यते—श्रौतानामणूकादिशब्दानां पुरुषचतुर्भागादिमात्रपरिमाणपरत्वज्ञापनेन तस्य तस्य पुरुषस्य चतुर्भागादिपरिमाणरिष्टकानिर्माणार्थम्। तथाहि-लोके द्विविधा पुरुषाः समाश्च विषमाश्च। तत्र समास्सामुद्रोयाशेषलक्षणोपेताः। कतिपयैर्विहीना विषमाः। समानामणूकादयः। तदपेक्षया नियतपरिमाणत्वान्मुख्यतया गृहीताः। इतरेषां तु गर्भाधानादिकालस्थितप्राकृतादृष्टादिवशेन न्यूनाधिकवक्रकाद्यनेकरूपाङ्गतयाऽणूकादिषु चतुर्भागादिनियमव्यभिचारात्तत्प्रमाणैरुत्पादितानामिष्टकानां उपधानकाले तत्सङ्ख्याकानां तासां तत्र तत्रोपधाने ताभिस्ताभिस्तद्देशपूरणं न्यूनाभिर्वा पूरणम्। भिन्नजातीयानां तत्रत्यानां तत्र तत्र सङ्घट्टनमित्येवमादयो महान्तो दोषास्तत्र सम्भविष्यन्तीति। अतश्श्रुतिगताणूकादिशब्दैस्तद्वषम्यपरिहाराय पुरुषचतुर्भागादयो लक्ष्यन्त इत्यस्यार्थस्य प्रतिपादनायान्वर्था महत्यस्संज्ञाः क्रियन्ते। तमायमर्थस्सङ्ग्रहः—ऊर्ध्वबाहोः पुरुषस्य प्रमाणं गृहीत्वा तस्य चतुर्थेन पञ्चमेन षष्ठेन वा तेनाः अर्धेष्टकाः कारयेदिति। अत्र केचिदूर्वस्थ्यरत्नचोरेकार्थतामिच्छन्ति। तथा मतेऽग्निकल्पे तथोर्वस्थिशब्दस्यारत्निशब्दस्य वा पृथगुपादानं पुनरुपादानं श्रुतिदर्शनं च सूत्रकारस्य प्रमादकृतमेवावतिष्ठते।

Karavinda (Sutra 9)

गतम्। अयमयः—चतुर्भागादयः पुरुषचतुर्भागपरिमिताः स्युः। पुरुषकल्पनानुरूपास्स्युरिति चतुर्भागीयास्त्रिंशदङ्गुलाः पञ्चभागीयाश्चतुर्विंशत्यङ्गुलाः षड्भागीया विंशत्यङ्गुलाः। तासां पादास्तदर्धमिताः पञ्चदशद्वादशाङ्गुलाश्चेति।

Sundararaja (Sutra 1 2 and 3)

अर्धतमेव चतुरस्रं प्रकारान्तरेणोपधातुमाह—

अनुपपदत्व दीर्घादिभिरिति विशेषणाभाव।

Sundararaja (Sutra 4)

एषां पादादीनां प्रमाणमाह—

Sundararaja (Sutra 5)

पुरुषस्य चतुर्भागीया त्रिंशदङ्गुला अणूरमात्रादुच्यत।

Sundararaja (Sutra 6)

चतुर्विंशत्यङ्गुला ।

Sundararaja (Sutra 7)

तथा तेनैव मार्गेणोर्वस्थि ज्ञातव्यं, तच्च षड्भागीय विंशत्यङ्गुलम्। केचिदूर्वस्थीत्यपि पञ्चमभागीयामेवाहुः, तदयुक्तम् । 'कुल्मिमात्रोऽरत्नि-प्रादेश ऊर्वस्थीति' भेदेन निर्देशात् । 'इष्टकाः करोति प्रादेशमात्रचोऽरत्नि मात्रच ऊर्वस्थिमात्रच' इति प्रयोगकल्पे पृथग्वचनात् तदूर्वस्थीत्यादिवच-नाच्च । व्यक्तोक्तत्वाच्च बोधायनेन—'तस्येष्टकाः कारयेत् पुरुषस्य चतुर्थेन पञ्चमेन पष्ठेन दशमेन' इति।

Sundararaja (Sutar 8)

पादश्चाविशेपादणूकादीना च सर्वासा च भवति ।

Sundararaja (Sutra 9)

लोके पादशब्दश्चतुर्भागवचन. प्रसिद्धः। क्वचिदेकदेशमात्रे। 'कृच पाद प्रकीर्तित' इति 'ऋच पादग्रहण' इति ऋक्षु च । वेदे त्वेकदेशमात्रे दृश्यते– 'त्रिपदा गायत्री पञ्चपदा पङ्क्ति सप्तपदा शक्वरी' इति। इह तदुभय ग्राह्य । शब्दार्थस्योभयत्र वृत्ते । अत्र च पादशब्दार्थनिरूपण क्रियते एक-विधाद्यर्थम्। अस्मिस्त्वग्नो चतुर्भागवचनेऽपि पादे न कश्चिद्दोष ये तु पड्-भागीयान्नेच्छन्ति तेषामेवोपयोग:, अणूकारत्निपादत्वेन दशाङ्गुलाष्टा-ङ्गुलानां ग्राह्यत्वात् ।

उपधानेऽष्टावष्टौ पादेष्टकाश्चतुर्भागीयानां पक्षाग्रयोर्निदध्यात्॥ (10)

सन्ध्योश्च तद्वदात्मानं षडङ्गुलावेताः ।। 11)

Kapardi (Sutra 10 and 11)

उपधानकाले अष्टावष्टौ चतुर्भागीयाना पादेष्टकाः पक्षाग्रयोरुपदध्यात्। अष्टावष्टाविति विशय । आत्मान षडङ्गुलमात्रमवेता अवगता व्याप्ता इति यावत्। नवाङ्गुलमात्र पक्षयो. ।

श्रोण्यंसेषु चाष्टौ प्राचीः प्रतीचीश्च ॥ (12)

Kapardi (Sutra 12)

श्रोण्यसयोश्चतस्रश्चतस्र । ता पादा । प्राचीश्श्रोण्यो । अमयो प्रतीची [1] । एव चतुर्भागीयपादा अष्टाचत्वारिंशत् ।

सन्ध्यन्तराले पञ्चमभागीयास्सपादा ॥ (13)

Kapardi (Sūtra 13)

पक्षसन्ध्योरन्तराले पञ्चमभागीया पादसहिता । मध्ये पादा । दश प्रतीची । तासा दक्षिणत पञ्चविंशति पञ्चमभागीया । उत्तरतो विंशति । एव सन्ध्यन्तराले पञ्चपञ्चाशदिष्टका उपधेया ।

पुच्छे प्रादेशमुपधाय सर्वमग्निं चतुर्भागीयाभि [2] प्रच्छादयेत् ॥ (14)

Karardi (Sūtra 14)

प्रादेशशब्देन कि क्षेत्रमभिधीयत ? पुच्छे यत्प्रादेशमिति ? अथवा इष्टका प्रादेशेन कारिता ? यदि क्षत्रमभिधीयेत प्रादेशपङ्क्तिरेवोपधात व्या[3] स्यात् । तथा सति भिद्यताग्नि । इतरस्मिन्पक्ष यथा न भिद्यत तथा प्रादेशेष्टका भवेयु । प्रादेशमिति जातावेकवचनम् । प्रादेशेष्टकाभि स्सहाणूका न शेरते । शेरते तु पञ्चभागीयास्ताभिस्सह । अतश्चतस्रश्च तस्र श्रोण्यो पादेष्टकास्त्रयोदश पञ्चमभागीया । पूर्वार्धेऽष्टावणूका । एवमेकोनत्रिंशत्पुच्छे । अपरे पुनरेव वर्णयन्ति —यस्य वितस्त्या वचन कृत तत्रापि चतुरस्रश्रुतिसामर्थ्यात् प्रादेश एवेष्टकाभिश्छाद्यत इति । एवमर्थं प्रादेशग्रहणमिति । तस्मिन्नपि पक्ष उक्त उपधानक्रम । सर्वमिति द्वात्रिंशत् । अष्टाविंशतिरात्मन्युक्ता । पुच्छपूर्वार्धेऽष्टौ ।

पादेष्टकाभिस्सख्या पूरयेत् ॥ (15)

Kapardi (Sūtra 15)

पञ्चदशभागीयाभिस्सङ्ख्या पूरयेत । आत्मनि द्वितीयायां रीत्या मध्यमा चतुर्भागीया मध्यम द्विशत प्रस्तार ॥

Kapardi (Sūtra 9 10 11 and 12)

उपधानकाले पञ्चदशाङ्गुला अष्टावष्टौ पक्षाग्रयोर्निदध्यात् । पक्षात्मसन्ध्योश्च तद्वदात्मनि षडङ्गुलावता । पक्षात्मसन्ध्योश्चा ष्टावष्टौ । षाण्ण्डङ्गुलादर्धेनात्मनि प्रविष्टादश्रोण्यसयो च । चत्वारेण तद्वदित्याकृष्य समर्धाङ्गित्वाभाव । श्रोण्यसेषु चतस्रश्चतस्र । विनोप

1 प्राची प्राञ्चयते प्रतीची , 2 पञ्चमभागीयाभि ।

1 प्रादेशस्य प्रादेशपङ्क्तिरेवोपधानमस्या ।

माह—अष्टावष्टौ प्राची; प्रतीचीश्च । श्रोण्योः प्राची. अंसयोः प्रतीचीः । ननु अष्टावष्टाविति वीप्सया प्राप्तानां स्थानचतुष्टयनिर्देशे प्रतिस्थानमष्टावष्टौ कथं न स्युः ? उच्यते—'अष्टौ प्राचीः प्रतीचीश्चेति' वचनसामर्थ्यात् प्राचीनां प्रतीचीनां चाष्टत्वमवगम्यते न प्रत्येकं चतस्र एवेति। श्रोण्योः प्राच्यौ रीत्यावंसयोः प्रतीच्यौ । ता एता अष्टाचत्वारिंशत् चतुर्भागीयाः पादास्सन्ध्यन्तराले पञ्चमभागीयास्सपादाः पक्षसन्ध्योर्मध्ये आत्मनि पञ्चमभागीयास्सपादाः सामर्थ्यात् स्वपादैस्सहिता निदध्यात् । अत्र दक्षिणभागे विंशयानामुत्तरतः पञ्चविंशतिः पञ्चमभागीयाः । उत्तरभागे विंशयानां दक्षिणतो विंशतिः पञ्चमभागीयाः । मध्ये दश प्रदेशाः । एवमेतास्सन्ध्यन्तराले पञ्चपञ्चाशदिष्टकाः ॥

**Karavinda (Sutra 13)**

गतमेतत् । पूर्वाग्नौ पुच्छाग्रप्रदेशे पृथग्रीतित्वे भेदप्रसङ्गेन तत्परिहारायायं यत्नः । अत्र तु मूलप्रदेशस्य पृथग्रीतित्वे उपरितनप्रस्तारे वक्ष्यमाणविंशयपञ्चमभागीयाविधेर्भेदः प्रसज्येतेति गम्यते । स चापि परिहार्य एव । ततश्चतुर्भागीयाभिरात्मशेषं पक्षशेषं च प्रच्छाद्य पुच्छे तु पूर्वार्धेऽष्टौ चतुर्भागीया उपधाय पश्चार्धे भेदाभावाय पञ्चदश पञ्चमभागीया उपदध्यात् । उक्तं चाभियुक्तैः –

अबाधः क्लृप्तदेशानां स्तारे स्तारे च पूरणम् ।
भेदभावोऽपि चाग्नीनामाचार्याणां परायणम् ॥

इति । चतुर्भागीयाशब्दो बाहुल्याभिप्रायः । प्रच्छादने प्रच्छादनशब्दस्यापि पूर्वोक्तमेव प्रयोजनम् । अत्र प्रादेशपृथग्रीतित्वे भेदप्रसङ्गात् सर्वाग्नेः प्रच्छादनस्य विहितत्वाच्चतुर्भागीयानां चासम्भवादुक्तानामसम्भवे भेदाभावाय च तत्रतत्रोक्तानामसम्भवे तत्रत्याभिस्सम्भवन्तीभिरन्याभि प्रच्छादनं कार्यमिति पूर्वमेवोक्तम् । तत्र दक्षिणे पक्षे पादानां मध्ये षोडश चतुर्भागीयाः । उत्तरे च ताष्षोडश । आत्मनि सन्ध्योरन्तरालस्य पुरतः पुरतः पादानां मध्ये चतुर्दश । ताः पश्चिमतश्च पादानां मध्ये चतुर्दश । अष्टौ पुच्छस्य पूर्वार्धे । अपरार्धे पञ्चदश पञ्चमभागीयाः । सन्ध्यन्तराले पञ्चचत्वारिंशत् पञ्चमभागीयाः । पुच्छे पञ्चदश । एवं षष्टिः । पञ्चचत्वारिंशत् पञ्चमभागीयाः तत्र षष्टिरणवः । षष्टिः पञ्चमभागीयाः । अष्टाचत्वारिंशदणुकापादाः । दश पञ्चमभागीयाः पादाः । ता एताष्षडशीतिशतम् ।

अत्र चतुर्दशसङ्ख्या सम्पाद्या । तत्सम्पादनमाह—

Karavinda (Sutra 15)

गतम् । आत्ममध्ये पञ्चम्या रीत्या उपान्त्या चतुर्भागीयामुद्धृत्य नव षड्भागीयान् पादानुपदध्यात् । पुच्छश्रोण्योरेकका पञ्चमभागीयामुद्धृत्य चतुरस्रतत्पादानानुपदध्यात् । एव द्विशत प्रस्तार । आत्मनि प्राच्यो रीतय । पक्षयोदक्षिणोत्तरयो पुच्छे चोदीच्यो रीतय ॥

Sundararaja (Sutra 10)

चतुर्भागीयाना पादेष्टका पञ्चदशाङ्गुला ॥

Sundararaja (Sutra 11)

सन्ध्यो पक्षाप्ययो तद्वत् पक्षाग्रवदष्टावष्टौ ॥
ताश्चात्मान षडङ्गुलेन प्राप्ता , नवाङ्गुलेन पक्षौ ॥

Sundararaja (Sutra 12)

एकैकत्र चतस्रश्चतस्र , एव षोडश प्राची प्रतीचीरिति पादा अष्टावित्यत्र वीप्सार्थो द्रष्टव्य । अथवा अनेन सूत्रेण श्रोण्यसेष्वष्टावेव विधीयन्ते, 'अन्या अष्टौ पादेष्टकाभिस्सरया पूरयेत्' इत्यनेन । सर्वथा तावत् षोडशैवोपधेया ।

Sundararaja (Sutra 13)

पक्षाप्यययोरन्तराले पञ्चमभागीया पञ्चचत्वारिंशत् । आसा मध्ये दश प्रादेशपात्रय । पादशब्देन च सन्निहितत्वात् पञ्चमभागीयाना पादा उच्यन्ते । तासा पादेष्टकाना दक्षिणतो विंशति पञ्चमभागीया , उत्तरत पञ्चविंशति , विपरीता वा ॥

Sundararaja (Sutra 14)

पुच्छाग्रे यत्प्रवृद्ध प्रादेशक्षेत्र तदुपदध्यात् सामर्थ्याद्दशभि प्रादेशै ॥

एव प्रच्छादिते एकोननवतिशत (१८९) इष्टका भवन्ति ।

Sundararaja (Sutra 15)

पुच्छस्यापरार्धे पार्श्वयोश्चतस्रश्चतस्र पञ्चदशाङ्गुला । एव कृते पञ्चोनद्विशत भवति । तत पुच्छस्य पूर्वार्धे पार्श्वयोर्मध्ये तिस्रस्तिस्र षड्भागीया प्राचीरुपदध्यात । एव द्विशत प्रस्तार ॥

**अपरस्मिन्प्रस्तारे पुच्छाप्यये पञ्चमभागीया विशया· ॥ (16)**

*Kapardi (Sutra 15)*

द्वितीये प्रस्तारे[1] पुच्छाप्यये पुच्छात्मसन्धौ विशया उभयस्था पञ्चमभागीया उपधेया ।

**ता आत्मनि चतुर्दशभि पादैर्यथायोग उपदध्यात् ॥ (17)**

*Kapardi (Sutra 17)*

तासामेव पादेष्टकाभि विशयासंसृष्टाभि. चतुर्दशभिरुपदध्यात् । आत्मनि यथा युज्यन्ते । इह षड्भागीयाना करणमुक्तम् । उपधान नोक्तम् यथा पूर्वत्रार्धेष्टकाना पुरस्ताच्चोपधेया[2] पुच्छस्य पूर्वार्धे पार्श्वयोस्तिस्तस्तिस्र षड्भागीया मध्ये चतस्र । शिष्टे द्वादश चतुर्भागीया· ।

**सर्वमग्नि पञ्चमभागीयाभि प्रच्छादयेत् ॥ (18)**

**पादेष्टकाभिस्संख्यां पूरयेत् ॥ (19)**

*Kapardi (Sutra 18 and 19)*

इह पादेष्टकाशब्देन पुरुषस्य पूरयितव्यस्य चतुर्भागकारिका अणूका गृह्यन्ते । पञ्चमभागीयाश्च कृता उपधेया इत्युच्यन्ते । द्वादश चतुर्भागीया आत्मनि । प्रथमा रीति पञ्चमभागीयानाम् । द्वितीया रीतिश्चतुर्भागीयानाम् । षष्ठी प्रादेशानाम् । नवमी चतुर्भागीयानाम् । शिष्टे पञ्चमभागीया । एष प्रस्तारो द्विशत । अत्र केचन याज्ञिकाः अनुपासितगुरव आचार्याभिप्रायमजानन्त ऊनाद्द्वय (द्य) धिकप्रस्तार कुर्वन्ति । अस्य तु सूत्रकारस्य प्रतिप्रस्तार पूरयेदिति वदतस्तदनभिप्रेतमेव । यद्येवमभिमतमभविष्यत् । सर्वत्र प्रतिप्रस्तार सङ्ख्या पूरयेदिति नावक्ष्यत् । उक्त च, तस्माद्विशत प्रस्तार कर्तव्य ।

तत्र श्लोक —

अष्टौ श्रोण्यसयोश्च स्यु पादा· सूत्रकृतेरिता ।
तासा मध्ये चतुर्थ्यस्स्यु चतुर्दश चतुर्दश ॥
सन्ध्यन्तराले पञ्चम्य पादैश्च दशभिस्सह ।
तासा मध्ये दश प्रोक्ता प्राच्यस्यु शुल्बकर्मणि ॥

---

1 "द्वितीये प्रस्तारे" not in some Mss

2. पुरस्तादधस्ताच्चोपधेया ।

अष्टौ पुच्छस्य पूर्वार्धे चतुर्थ्यंशिशष्ट एव तु ।
द्वितीया नवमी चैव चतुर्थी नाम चात्मनि ॥
उदीच्य एव नित्य स्युर्मध्या पञ्चमपादके ।
कृताभिश्चतुरस्राभिरणकोविस्त्र्यग्तिभि ॥
अस्या एव सपादाभि प्रस्तारो द्विशत कृत ॥
इति ॥

Karavinda (Sutra 16)

द्वितीये प्रस्तारे पुच्छाप्यये एव पञ्चपञ्चमभागीया उपधेया । अविशेपादात्मपुच्छयोस्सम प्रविष्टा ॥

Karavinda (Sutra 17)

ता विशयाश्चतुर्दशभि पादे प्रकृतत्वात् पञ्चमभागीयानां यथायोग परितस्सवन उपदध्यात् । विशयाना पुरस्ताद्दश ।

Karavinda (Sutra 18)

पक्षयोस्त्रिशत्यिशत्पञ्चमभागीया पुरस्तात्प्रभृत्यात्मनि प्रच्छाद्यमाने उदगायता पञ्चमभागीयाना नव रीतय । चतुर्दशीयाना पादाना दक्षिणतो द्वे पञ्चमभागीये उत्तरतश्च द्व । पुच्छे तु यथोक्ताभि प्रच्छाद्यमाने बहुभेदप्रसङ्गात् षड्भागीया उत्तन्ना अपि न युक्ता इति षड्भागीयास्तिस्रस्तिस्रो विशयाना पश्चात् पुच्छपार्श्वयो प्रतीचीरुपदधाति "तासा पार्श्वे द्वद्व चतुर्भागीये प्रतीच्यो उपधाय नामा मध्ये तिस्र षड्भागीया प्रतीचीरुपदध्यात् । अपरार्धे चाष्टावणूकेष्टका उपदध्यात् । एवमात्मनि विशयाभि सह एकोनशत पञ्चमभागीयाश्चतुर्दशप्रादेशा पक्षयोस्त्रिशत्दात् पञ्चमभागीया पुच्छे द्वादश चतुर्भागीया नव षड्भागीया । ता एता षड्न द्विशतम् । तत्र पट्सम्या सम्पाद्या' ।

Karavinda (Sutra 19)

अत्र नवपञ्चमभागीयारीतीनां मध्यस्यामेका पञ्चमभागीयारीतिमुद्दृत्य मध्ये विंशतिप्रादेशेष्टका उदीचीरुपदध्यात् । अत्र चतुरस्याऽतिरिच्यते । अतिरेके अधिकप्रमाणोपधानेन सङ्ख्यापूरणस्यान्याय्यत्वादणूका पञ्चमभागीयानां स्थान इति परिभाषयाणूपधानेन सङ्ख्यापूरणस्य न्याय्यत्वाच्च । तत प्रादेशरीत्या पूर्वरीति यथा नदिलष्टा भवति तथा कृत्वा पूर्वान्तरीतिमुद्दृत्य तत्राष्टावणूका उपदध्यात् । एव प्रादक्षिण्या परितास्तिस्रो रीती अध्याप्य द्वितीयां रीतिमुद्दृत्याष्टावणूका

उपदध्यात् । एव द्विशत प्रस्तार । अत्र केचित्—प्रथमे प्रस्तारे पुच्छाग्रे दशप्रादेशानुपधाय पादेष्टका इचानाद्दत्य पञ्चदशभागीयाभिस्सङ्ख्या पूरयन्ति । भेदमपि सहन्ते । प्रथमेऽपि प्रस्तारे सन्ध्यन्तरालेऽणूकास्तत्पादाश्चोपदधाति । तथोपधाने प्रयोजन मृग्यम् । केचित्तु प्रच्छादनकाले सङ्ख्यापूरकाणां स्थानमवशिष्य प्रच्छाद्य सख्यापूरका उपदधति । तत्र तु सूत्राञ्जस्यमस्ति वा नवेति चिन्त्यम् ॥

तत्र श्लोका ।

ऊर्वस्थिशब्दसयुक्ता श्रुतिर्मुख्यात्र या कृता ।
आचार्येणव सूत्राणा षड्भागीया कृते तु सा ।
आख्यातमर्थं चाचार्यैस्तथोर्वस्थीति सूत्रितम् ।
षड्भागीयापद तद्वदप्यन्यैस्सूत्रित परं ।
हिरण्यकेशिना शुल्वे तथोर्वस्थीति सूत्रितम् ।
व्याख्यातारोऽपि तत्रैतत् षड्भागीयापर विदु ।
बोधायनश्च भगवान् समे तु चतुरस्रके ।
तुर्यपञ्चमषष्ठैश्च सपादं करण व्यधात् ।
उर्वस्थिनामधेयानामुपदेशबलादिह ।
प्रच्छादितानामाभिस्तद्बाधस्सूत्रकृतेष्यते ।
अरत्नयोऽप्यणूकाश्च छादने स्युर्विपर्ययात् ।
पूर्वस्मिन्नपरस्मिश्च प्रस्तारे सभवो न हि ।
न पञ्चदशभागीया श्रूयते त्र द्वितीयके ।
श्रूयन्ते तास्तु पूर्वाग्नौ न तत्पूर्वो द्वितोयक ।
प्रकृतित्वाद्द्वयोरग्न्यो नित्यत्वाच्च द्वयोरपि ।
अतस्तासा द्वितीयेऽग्नौ कथ प्राप्तिर्विमृश्यताम् ।
किंतु तासा तु यत्कार्यं तत्राणूकास्तु बोधिता ।
प्रथमाग्नेरतोऽन्यत्र तत्स्थाने स्युरणूकिका ।

ये त्वत्र पञ्चदशभागीयाभिस्सख्यापूरण कुर्वन्ति ते किमुपदेशतो वा प्राप्त मन्वते ? अतिदेशतो वा ? उभयथापि न युज्यते । द्वयो प्रकृतित्वात् प्रकृतिविकाराभावाच्च । नन्वणूका पञ्चदशभागीयाना स्थान इति वचनसामर्थ्यात्तासां प्राप्तिर्भविष्यति ॥ इति चेन्न, पञ्चदशभागीयानां स्थान इति वचन तत्कार्ये सख्यापूरणेऽणूकाना प्रापकम् । न तु सख्यापूरणमात्र तासामप्युपधायकम् । तस्माच्चिन्त्यमिदम् । कथमर्थमिदमाचार्येणोक्त ? उच्यते—उपधीयमानानामिष्टकानां सख्यायास्स्थाने । न च प्रस्तारे सख्यासम्पत्तौ यदीष्टकाभेदादवयवभेद स्यात् स मर्षणीय इति

मन्यमानेनोक्तम् । तदेतद्द्वितीयश्येने प्रतिपादयिष्यते । केचित्तु याज्ञिका न्यूनाधिकप्रस्तारमग्नौ कुर्वन्ति समुदाये सङ्ख्यासम्पत्ति मन्यमानाः । तदयुक्तम् । पञ्चदशप्रभृतिभिः प्रस्तारैः सहस्रादिसङ्ख्यायां सम्पाद्यमानायां विशेषाश्रवणे 'सम स्यादश्रुतत्वात्' इति प्रस्ताराणां द्विशतत्वस्यैव न्याय्यत्वात् । रथचक्राग्नौ तस्य करण्या द्वादशेनेत्यादिना द्विशतानामेवोत्पादनाच्च । ननु यत्र यत्र प्रस्तारे पूरयेदिति वचनान्तरमस्ति तत्र प्रस्तारे सङ्ख्यापूरणमस्तु । तद्यत्र नास्ति तत्र समुदायसङ्ख्या पूरणसङ्ख्या इतरथा पूरणवचनस्यानर्थक्यप्रसङ्गात् । उच्यते—न तत्रानर्थक्यप्रसङ्गः । कथ ? तत्र हि न्यायप्राप्त सङ्ख्यापूरण तत्साधनत्वेन पञ्चदशभागीयाना विधानात् । यदि सर्वे प्रस्तारा द्विशताः किमथमेष द्विशतः प्रस्तार इत्युच्यते ? सिद्धे सत्यारम्भमात्रोद्देशेन सर्वेषां प्रस्ताराणा द्विशतत्वसम्पादनार्थम् । यथैकविधप्रस्तारो द्विशत एवमन्येऽपि सर्वे प्रस्तारा द्विशतसङ्ख्याः कार्याः । पूरणवचनाभावेऽपीति न्यायप्राप्तमेवार्थं अनुवादेन द्रढयितुमय यत्नः । तस्मात्सर्वे प्रस्तारा द्विशताः कार्या इति न न्यूनाधिका इति सिद्धं सर्वप्रस्ताराणां द्विशतत्वम् । प्रकृतिभूतस्सप्तविध उक्तः । इदानी नित्या विकृतय उच्यन्ते—एकविधेति । एकविधादीना षड्विधपर्यन्ताना षण्णामग्नीनां तस्य तस्याग्ने करणीना द्वादशभागेन त्रयोदशभागेन च इष्टकाः कारयेत् । अत्रैकविधस्य करणी शत विंशति (120) अङ्गुलय· । द्विविधस्य एकोनसप्ततिशत अङ्गुलयः चतुर्विंशतितिलाश्च । (169[illegible]) त्रिविधस्य द्वे शते सप्ताङ्गुलयः एकोनत्रिंशत्तिलाश्च (207[illegible]) चतुर्विधस्य द्वे शते चत्वारिंशच्चाङ्गुलय (240) पञ्चविधस्य द्वे शते षष्टिरङ्गुलयः एकादश तिलाश्च (260[illegible]) षड्विधस्य द्वे शते त्रिनवतिरङ्गुलय एकत्रिंशत्तिलाश्च (293[illegible]) । एतासा करणीना सर्वतो द्वादशेनैक करणम् । सर्वतस्त्रयोदशेनैक करणम् । तयोः पादेष्टकाना करण चकारादर्धेष्टकानामपि षड्विध नवविध वा करणम् । उपधानमुच्यते—अभितः पादास्तिस्रो रीत्यो द्वादश्य । तत पञ्चरीत्यस्त्रयोदश्यः । तत एका अर्धादशोपादाः । तत एका त्रयोदश्य । ततस्तिस्रोऽभितः पादा द्वादश्यः इति त्रयोदश रीत्य । तत्र द्वितीयाया रीत्या द्वादश्या चतुर्थीमष्टमी चेष्टकामुद्धृत्य द्वेद्वेऽर्धेष्टके उपदध्यात् । तत्रैव चोपान्त्ये उद्धृत्य चतस्रोऽर्धेष्टकाः । द्विशत एव प्रस्तारः । द्वितीये प्रस्तारे द्वे रीत्यौ त्रयोदश्यः । तत एका त्रयोदशीपादा । तत एकाऽभितः पादा त्रयोदश्यः । ततश्चतस्रो रीत्यो द्वादश्य । तत एकाऽभितः पादा द्वादश्यः । ततस्तिस्रो रीत्यस्त्रयोदश्य. इति त्रयोदश रीत्य । अत्र मध्यमाया या षडुद्धृत्य पादा उपदध्यात् । प्रस्तारो द्विशत. । अथवा प्रथमप्रस्तारे द्वादशभि द्विनीयस्त्रयोदशभिस्त्रयोच्यते । पुरस्ताद्वादशो पश्चे दीर्घां पादेष्टका अर्धेष्टकाश्च तत्रतत्र प्रथमप्रस्तारे प्राच्य-

स्सप्तदश रीतय । तास्सर्वा द्वादशेष्टका । तासा सर्वासा दक्षिणा अर्धेष्टकाभि । ततस्तिस्रो द्वादशीभि । तत एका पादाभि तत एका अर्धाभि । तत एका पादाभिस्ततस्तिस्रो द्वादशीभिस्तत एका पादाभिस्तत एकार्धाभि । तत एका पादाभिस्ततस्तिस्रो द्वादशीभि । अन्त्यार्धाभिरेव सप्तदश रीतय । तत्र पञ्चमीषष्ठीसप्तमीना रीतीनामन्त्यास्तिस्र उद्धृत्य एका द्वादशीमुपदध्यात् । अथैकादशीद्वादशीत्रयोदशीनामन्त्या तिस्र उद्धृत्य एकादशीमुपदध्यात् । एव द्विशत । यद्द्वितीय त्रयोदशभिरुदीच्यो रीतयश्चतुर्दश तासा प्रथमार्धाभिर्द्वादशीत्रयोदशीभिरन्त्यार्धाभि ताश्चतुर्दश रीतय । एव द्वादशशतमिष्टका । तत्र पूर्वार्धे त्रयोदशी षड्द्धृत्य चतुर्विंशति पादा उपदध्यात् । एव द्विशत । यदि सर्वे प्रस्तारा द्वादशीभि तदा पूर्वोक्तप्रकारेण प्रथम प्रस्तारमनुपधाय द्वितीयप्रस्तारत एव रीतीरुदीचीरुपदध्यात् । एव द्विशत । यदि सर्वे त्रयोदशीभि तदा द्वितीयप्रस्तारोक्ता रीति प्रथमे प्रस्तारे प्राचीरुपधाय पश्चार्धे त्रयोदशीरुद्धृत्य पादा उपधायापरस्मिन् प्रस्तारे ता उदीचीरुपदध्यात् । एव द्विशत । यद्यकत्र त्रयोदशान्यतो द्वादश तदा प्रागायता इष्टका उदीच्य त्रयोदश रीतय । ताष्षट्पञ्चाशच्छत च पूर्वस्या रीत्या पञ्चम्या चाष्टावष्टावुद्धृत्याष्टाविंशति पादा द्वे द्वे चार्धे। द्वितीये प्रस्तारे ता एव प्राच्यो रीतय । यत्र दक्षिणत उत्तरतश्चाष्टावष्टावुद्धृत्य पूर्ववत् पादा अर्धाश्चोपदध्यादेव द्विशत । एवमेव प्रउगादिष्वपि करणानि द्वादशभागीयाभिस्त्रयोदशभागीयाभिर्वा यथायोगमुपधाय पादेष्टकाभिरर्धेष्टकाभिश्च सङ्ख्या पूरयेत् । अलमतिप्रसङ्गेन ॥

**Sundararaja** (Sūtra 16 17 18 and 19)

उभयत्र प्रादेशमात्रमविशेषात् । तत पुरस्ताद्दश प्रादेशा पार्श्वयोर्द्वौ द्वौ ।

आत्मनि विंशयाभिस्सह उदीच्यो दश रीतय तासा द्वितीया नवमी चतुर्थीभिरुपदध्यात्, षष्ठी प्रादेशै । आत्मशेषे पक्षयोश्च पञ्चमभागीया । पुच्छस्यापरार्धे पार्श्वयोर्मध्यतो नव षड्भागीया प्राच्य । पुच्छशेषे द्वादशाणूका । एव द्विशत प्रस्तार ।

*व्यत्यास चिनुयाद्यावत प्रस्ताराश्चिकीर्षेत् ॥ (20)*

**Kapardi** (Sūtra 20)

गतमेतत् ।

कस्वर्येनोपादीयमानानामेकविधादीना पक्षपुच्छत्व प्रतिपादितम् । तथा तेषामुपधानविधि कथ भवतीत्युच्यते—

एकविधप्रभृतीना करणीना द्वादशेन त्रयोदशेनेनीष्टका कारयेत् ॥ (21)

**Kapardi (Sutra 21)**

करणाना द्वादशेन त्रयोदशेन कृतेस्समचतुरस्रै इष्टका कारयेत् । सर्वतो द्वादशेनैक करण सवतस्त्रयोदशेन द्वितीयम् ।

पादेष्टकाश्च ॥ (22)

व्यत्यास चिनुयाद्यावत प्रस्ताराश्चिकीर्षेत् ॥ (23)

**Kapardi (Sutra 22 and 23)**

पादेष्टकाश्च द्वादशविधास्त्रयोदशविधाश्चार्धेष्टकाश्चेति[1] शुल्बान्तरम्। अस्माकमपि प्रउगेऽर्धेष्टका कार्या । एकविधादिष्वपि यदि प्रथमप्रस्तारो द्वादशभि द्वितीयस्त्रयोदशभिरित्यस्मिन्पार्श्वेऽर्धेष्टका कार्या । इतरथा सङ्ख्या न पूर्यत एव । तत्र श्लोका —

द्विविधे मानिका[2] रज्जुस्सप्तत्या च शतेन च ।
अङ्गुलीना मिता सा स्यादूनाग्नेर्दशभिस्तिलै ।
त्रिविध मानिका[3] रज्जुरष्टोत्तरशतद्वयम् ।
षड्भिरेव तिलैरूना गणकै परिकल्पिता ॥
विधस्यापि चतुर्थस्य मानिका रज्जुरुच्यते ।
मिता शतद्वयेनाथ चत्वारिंशाधिकेन च ॥
विधस्य पञ्चमस्येयमष्टषष्टिश्शतद्वयी ।
एकादशतिलैर्युक्ता मानिका गणका विदु ॥
चतुर्भिश्च नवत्या च शताभ्या च मिता भवेत् ।
त्रिभिरेव तिलैरूना षड्विधस्य विधानिका ॥

उपधानेऽभित पादास्तिस्रो रीत्योऽय द्वादश्य । तत्र पञ्च त्रयोदश्य । तत एका त्रयोदशी पादरीति । तत एका त्रयोदशी ततस्तिस्रोऽभित पादा रीत्या द्वादश्य । द्वितीयस्या[4] एका चतुर्थी च तभ्योऽन्योऽष्टमी । एष प्रस्तार । अपरस्मिन् प्रास्तारे द्व रीत्यौ त्रयोदश्येका त्रयोदशी पादा[5] तत एकाभिहितपादा त्रयोदशी । ततश्चतस्रो द्वादश्य । अथ मध्यमात्पहिष्टरा चतुर्भेदा , एष द्वितीय प्रस्तार ॥

---

1 द्वादशपादास्त्रयोदशपादाश्चार्धेष्टकाश्चेति ।

2 3 मात्रिका ।

4 द्वितीयायां नित्यमेका त्रयोदशी । द्वादशी च चतुर्थी च । तेभ्योऽन्योऽष्टमी ।

5 त्रयोदश्योरेकादशी ।

व्यत्यासमिति—गतमेतत् ॥

एकविधप्रभृतीनां प्रथमाहारेण द्वितीयेन तृतीयेनेति योयुज्येत सर्वेषां यथाश्रुतिसंख्या तथोर्ध्वप्रमाणम् ॥ (24)

**Kapardi (Sutra 24)**

एकविधप्रभृतीनां षड्विधपर्यन्तानां सर्वेषां प्रथमाहारे द्वितीयाहारे च यथा सङ्खया: श्रूयन्ते । किमुक्तं भवति ? यदि प्रथमाहारस्सहस्रसङ्खया जानुदघ्नता च । अथ द्वितीय एते युक्ता एव । ते धर्माः सप्तार्धस्वरूपयुक्ता एवेति । तच्च वचन[1] सप्तार्धप्रकृतित्वज्ञापनार्थम् ॥

**Karavinda (Sutra 20, 21, 22 and 23)**

गतं । विकृतिषु पुनर्व्यत्यासे वचनं किमर्थम् ? उच्यते—प्रकृतौ चितीनां प्रस्ताराणां च वैषम्यात् किमयं व्यत्यासः प्रस्तारधर्मः चितिधर्म इति कस्यचित्सन्देहस्स्यात् । विकृतौ तु द्विप्रस्ताराश्चितय इति प्रस्तारयोर्वैषम्येणायं व्यत्यासः कस्य धर्म इति सन्देहे यावन्तः प्रस्तारास्तावतो व्यत्यस्य चिनुयात् भेदाभावाय । व्यत्यासस्य प्रस्तारधर्मताप्रतिपादनाय पुनर्वचनं व्यत्यासस्य ।

**Karavinda (Sutra 24)**

एकविधप्रभृतिषड्विधपर्यन्तानां प्रथमाहारः प्रथमप्रयोगः यो युज्येत भृशं युक्तो भवति । यथाश्रुतिसङ्खया श्रुत्युक्तेन प्रकारेण सङ्खया सहस्रादिः यथा भृशं युज्यते तथोर्ध्वप्रमाणं जानुदघ्नादि च यो युज्येतेति च सम्बन्धः । एकविधप्रभृतिषड्विधपर्यन्तानां सर्वेषां प्रथमाहारेण द्वितीयाहारेण तृतीयाहारेण'साहस्रं चिन्वीत प्रथमं चिन्वानः' इत्याद्याः श्रूयमाणाः साहस्रादिसङ्खयाजानुदघ्नादिपरिमाणाश्चैतेषु सम्पाद्यतयोपदिश्यन्ते । एतेन एकविधस्य प्रकृतित्वे द्विविधादीनां तत्प्रकृतित्वे च साहस्रादिसङ्ख्याजानुदघ्नादि परिमाणत्वं सिद्धं भवति । एकविधादयोऽपि नित्या एव अकामसम्बन्धात् । प्रकृतयो विकृतयश्च नित्या उक्ताः । इदानीं काम्याः प्रउगादय उच्यन्ते । काम्या गुणविकाराः गुणशास्त्रत्वात् । नित्यस्य सप्तविधाग्नेर्विकाराःप्रउगाद्याकृतिविशेषेण गुणेन विकृताः । कुतः ? गुणशास्त्रत्वात् । गुणं शास्ति विदधातीतिगुणशास्त्रम् । 'प्रउगचितं चिन्वीत' इति वक्ष्यमाणं वाक्यं प्रउगस्याग्नेश्चयनमनूद्य तत्र भ्रातृव्यापनोदनफलार्थं प्रउगाद्याकृतिविशेषं गुणं विधत्ते तस्मात्काम्याः प्रउगादयः । गोदोहनादिवन्नित्यस्याग्नेर्गुणविकाराः न नित्याः नैव प्रकृतय इति ।

---

1. कल्पवचनम् ।

Sundararaja (Sutra 23)

'सन्ध्यन्तराले पञ्चमभागीयास्समपादा' इत्यस्यापरा व्याख्या पादशब्देन प्रस्तुता एवाणूकापादा गृह्यन्ते । प्रस्तुताश्च पादा अष्टसङ्ख्या इति तथैवेह ग्राह्या । तत्रैवमुपधानम्—प्रथमे प्रस्तारे सन्ध्यन्तराले पार्श्वयोस्त्रिशदङ्गुल परिशिष्य मध्यमे पञ्चविंशत्पञ्चमभागीया परिशिष्टयोस्त्रिशदङ्गुलयो पश्चात्पुरस्ताच्च द्वे द्वे पञ्चदशाङ्गुले उदीच्यौ, मध्ये तिस्रस्तिस्रोऽणूका पञ्चमीभि पूरयितुमशक्यत्वात्पुच्छस्य पार्श्वयो पुरतष्षट्षट् पञ्चदशाङ्गुला । पुच्छशेषे त्रयोदशाणूका एव कृते अष्टोनद्विशत भवति । पुच्छमध्येऽणूकामेकामुद्धृत्य दशाङ्गुला नवोपदध्यात् । आत्मनि द्वितीये मध्ये वा मन्त्रोपधानसौकर्यार्थम् । एव द्विशत प्रस्तार । अपरस्मिन् पुच्छवर्ज यथापूर्वमेवात्मनि प्राच्यो दश रीतय । तत्र दक्षिणस्या मध्ये पञ्चमी निधाय तत प्राक्पश्चाच्च द्वे द्वे प्रादेशमात्र्यौ । एवमुत्तरस्या पुच्छस्यापरार्धे पार्श्वयोर्मध्ये च तिस्रस्तिस्रष्षड्भागीया प्राच्य, पुच्छशेषे द्वादशाणूका । ये तु षड्भागीया नेच्छन्ति तेषामपि पुच्छवर्जमेवोपधानम् । तत्र पुच्छे प्रादेशमुपधायेत्यस्य प्रादेशेष्टकामुपधायेत्येव वर्णयन्ति । अन्यथा भेदप्रसङ्गात् । प्रादेशाश्चतुर्भागीयाभिस्सह न शेरत इति सामर्थ्यात् पञ्चमभागीयानामाक्षेप । तत्रैवमुपधानम्—पुच्छस्य पूर्वार्धे पार्श्वयोश्चतस्र पञ्चदशाङ्गुला । मध्ये षडणूका । अपरार्धे पञ्चदश पञ्चम्य । पुच्छाग्रे मध्यमा अभितो द्वे उद्धृत्याष्टौ प्रादेशेष्टका उपधेया । एवमष्टोनद्विशत भवति । तत पूर्ववदेका चतुर्थी पञ्चमी वोद्धृत्य दशाङ्गुला वाऽष्टाङ्गुला वोपदध्यात् । द्विशत प्रस्तार । द्वितीये प्रस्तारे पुच्छे षोडशाणूका, आत्मन्युत्तरस्या रीत्या चतसृभ्य पञ्चमीभ्य प्राक्तिस्रोऽष्टाङ्गुला उदीच्य तत एका पञ्चमी । ततस्तिस्रोऽष्टाङ्गुला । तत एका पञ्चमी । ततस्तिस्रोऽष्टाङ्गुला । ततस्तिस्र पञ्चम्य । दक्षिणारीति पूर्ववदेव । द्विशत प्रस्तार । एव सारत्निप्रादेशस्योपधानमुक्तमाचार्येण । तद्रहितस्योच्यते—पक्षाग्रयोस्तिस्रस्तिस्रोऽणूका । तासा पश्चात्पुरस्ताच्च द्वे द्वे पञ्चदशाङ्गुले । एवमन्ययोरप्यात्मान प्रादेशेनोपेता पार्श्वयो षट्षट् प्रादेशा । पक्षशेषे पञ्चम्य । सन्ध्यन्तराले चत्वारिंशत्पञ्चमभागीया आत्मशेषे पूर्वोक्तवदेव । पुच्छस्य पूर्वार्धे पार्श्वयोरष्टौ पञ्चदशाङ्गुला , मध्ये षडणूका अपरार्धे । षड्भागीयाभिरुदीच्यस्तिस्रो रीतय. । तासु पूर्वस्या पार्श्वयोर्द्वे दशाङ्गुले । पुच्छस्य पूर्वार्धे षड्भागीया अष्टादश ।]अपरार्धे पृष्ठ्यामभित पञ्चम्यावुद्धृत्य अष्टौ प्रादेष्टका उपदध्यात् । आत्मनि पूर्वरीतौ मध्ये पञ्चमीं निधायाभितश्चतस्र प्रादेष्टका उपदध्यात् । एव द्विशत प्रस्तार । अथात्रापि षड्भागीयामनिच्छता पुच्छस्य पार्श्वयो पुरतष्षट्षट् पञ्चदशाङ्गुला । पुच्छशेषे त्रयो-

दशाणूकाः । पक्षाग्रयोश्चतस्रश्चतस्रोऽणूकाः । शेषं पूर्वोक्तवदेव । एवं कृते चतुरशीतिशतमिष्टका भवन्ति । तत्रात्मनि पृष्ठयान्ते चतुर्थ्यौ पञ्चम्यावुद्धृत्याष्टादशाङ्गुला अष्टाङ्गुला वोपदध्यात् । द्विशत. प्रस्तार. । अन्यस्मिन् प्रस्तारे पुच्छाप्यये पञ्चमभागीया इत्यादि यथासूत्रम् । आत्मनः पूर्वरीतिः पूर्वोक्तवत् । पुच्छस्य पूर्वार्धेऽष्टावणूकाः अपरार्धे पञ्चम्यावुद्धृत्याष्टाङ्गुला उपदध्यात् । द्विशत. प्रस्तार. । एवमुपाधनस्यानेकप्रकारा उक्ताः । तत्र युक्ततरः प्रकारो विद्वद्भिरादरणीयः । सर्वेष्वेव प्रकारेषु पुच्छाप्यये पक्षाप्यये वा अन्यतरत्र विशया इष्टका उपधीयन्त इत्यनुसन्धातव्यम् ॥

Sundararaja (Sutra 21 and 22)

व्यधिकरणपष्ठ्यौ । एकविधप्रभृतीनां षडविधपर्यन्ताना या. करण्य. तासा द्वादशेन त्रयोदशेनेति समचतुरस्रा इष्टका. कारयेत् पादेष्टकाश्च । ताश्चतुर्भागीया नवम्यश्चेति द्विविधा. । तत्र श्लोका —

> अङ्गुल्यो विंशतिशत करण्येकविधे भवेत् ।
> द्विविधे सप्ततिशत ज्ञेय दशतिलोनितम् ॥
> त्रिविधे द्वे शते चाष्टौ चाङ्गुल्यष्टतिलोनिता· ।
> चतुर्विधस्य करणी चत्वारिंशच्छतद्वयम् ।।
> अष्टषष्टि पञ्चविधे सैकादशतिले शते ।
> षड्विधे त्रिशतास्त्याज्याष्षडङ्गुल्यस्तिलावधि ॥

एकविधस्य तावत् करण्या द्वादशेन दशाङ्गुलेनैक करणम् । तदर्धेन पञ्चाङ्गुलेन द्वितीय पादेष्टकारूपम् । तृतीयेन च सैकादशतिलेन त्र्यङ्गुलेन तृतीयम् । सा नवमीत्युच्यते । एव त्रयोदशेन साष्टतिलेनवाङ्गुलेनैकम् । तदर्धेन तत्राद्या· । चतुरङ्गुला सैकविंशतितिला । तृतीयेन च नवमी त्र्यङ्गुला सतिलत्रया । एव द्विविधादिषु द्रष्टव्यम् ।

Sundararaja (*Sutra 23*)

तत्र प्रस्तारयोरनुक्तत्वात् द्वादशीत्रयोदशीनामेव सावयवाना प्रस्तारेषु व्यत्यास । द्वादशीभिस्सावयवाभिरेक प्रस्तार त्रयोदशीभिरपर इति । संकलितोपधान तु न भवत्यवचनात् एतदतिदिष्टप्रउगचित्यसम्भवाच्च । तत्र प्रथमे प्रस्तारे अग्निमध्ये नवद्वादशीना नवम्यश्चतुरस्रीकृता· । ता परितष्षष्टि पाद्या । ता· परितोऽष्टाविंशतिशत द्वादश्य । उत्तरास एकामुद्धृत्य चतस्र. पाद्या । द्विशत प्रस्तार· । अपरस्मिन् त्रयोदशभि प्रच्छादिते

नवषष्टिशतमिष्टका भवन्ति । अग्निमध्यस्थमुद्धृत्य चतस्रः पाद्याः । प्रतिकोणं चतस्रश्चतस्रः पाद्याः । पृष्ठ्यायां पश्चात्पुरस्ताच्चैकैकामुद्धृत्य नवनव नवम्यः । द्विशतः प्रस्तारः ।

Sundararaja (Sutra 24)

एकविंशादीनामपि सहस्रादिसङ्ख्यया । ऊर्ध्वप्रमाणं च जानुदघ्नादि-सप्तविंशादिवद्भवत्येव । क्षेत्रापचयेऽपि संख्योर्ध्वप्रमाणयोर्नापचय इत्यर्थः ॥

इति एकादशः खण्डः

## अथ द्वादशः खण्डः

काम्या गुणविकाराः गुणशास्त्रत्वात् ॥ (1)

Kapardi (Sutra 1)

काम्याः प्रउगादयः गुणेन विकृताः—किमुक्तं भवति ? गुणफला सिद्धिर्नाग्नेः। कुतः ? गुणशास्त्रत्वात्। शास्तीति शास्त्रम्। गुणोऽत्र शिष्यते नाग्निः। तस्माद्गुणशास्त्रत्वात् गोदोहनादिवद्गुणफलान्येतानि ॥

प्रउगं चिन्वीत भ्रातृव्यवानिति विज्ञायते ॥ (2)

Kapardi (Sutra 2)

प्रउगः शकटपूर्वभागः। तदाकारं चिन्वीत भ्रातृव्यवान्-यस्य बहवः भ्रातृव्याः स एवं चिन्वीत।

यावानग्निस्सारत्निप्रादेशो द्विस्तावतीं भूमिं चतुरस्रां कृत्वा पूर्वस्याः करण्या अर्धाच्छ्रोण्यौ प्रत्यालिखेत् ॥ (3)

सा नित्या प्रउगम् ॥ (4)

करणानि चयनमित्येकविधोक्तम् ॥ (5)

Kapardi (Sutra 5)

एतच्च वचनं सप्तार्धस्य प्रकृतित्वज्ञापनार्थम्। पञ्चदशभिरङ्गुलैर्नवभिश्च तिलैः अन्तरा[1] चतुः पुरुषा रज्जुः द्विस्तावती करोति। तथा चतुरस्रं विहृत्य सूत्रोक्तेन मार्गेण श्रोणी परिलिखेत्। करणानि च कारयेत्। द्वादशेन त्रयोदशेन सपादेन च प्रउगाकारः ॥

प्रउगा इष्टकाः कारयेत् ॥ (6)

Kapardi (Sutra 6)

चतुः पुरुषारत्निना च पञ्चदशभिरङ्गुलैस्तिलैरेकविंशत्या परिमिता रज्जुरीषामात्री भवति वाक्षयोः प्रमाणम्। तस्या द्वादशेन च त्रयोदशेन च

1. तिलैं ऊना अन्तरा चतुष्पुरुषा रज्जुः द्विस्तावतीं भूमिं करोति।

करणानि च कारयेत्। द्वादश्या प्रथमे प्रस्तारे प्रउगमुख्यः। चतुष्षष्टिः पादेष्टकाः चतस्रश्चतस्रश्श्रोण्योः। एवं चतुर्विंशोत्तर शत ।[1] चतस्रोऽर्धेष्टकाश्श्रोण्योरेव। अन्यस्मिन् प्रस्तारे त्रयोदश्य. श्रोण्यो.पादाश्चत्वारिंशत् द्वावर्धौ अष्टपञ्चाशदधिकशतं त्रयोदश्यः। प्रस्तारो द्विशत.। एवं व्यत्यास चिनुयात् तत्र श्लोकाः—

> एकोनविंशत्यरत्निभिरङ्गुलीभिस्सहाष्टभिः।
> तिलानां पञ्चविंशत्या मिता पश्चाद्विमानिका ॥
> एकविंशत्यरत्निभिरङ्गुलीना त्रिपञ्चकै.।
> तिलानामेकविंशत्या मिता त्वेका विमानिका ॥
> कुर्वन्ति प्रउगमग्निमेतास्तिस्रस्समीकृताः।
> आसामेव यथासूत्रं करणानि प्रकल्पयेत् ॥

**Karavinda (Sutra 2)**

प्रउगः शकटस्य पूर्वभागः। तदाकृतिमग्निं चिन्वीत। भ्रातृव्यवान्- भ्रातृव्यैश्शत्रुभिर्बाध्यमानः। तेन भ्रातृव्यान् प्रणुदत एव ॥

**Karavinda (Sutra 3 and 4)**

यावानरत्निप्रादेशाभ्यां सहितस्सप्तविधः तावद्द्विगुणा समचतुरस्रा भूमिं कृत्वा तस्य चतुरस्रस्य पूर्वस्याः करण्या मध्यादारभ्य श्रोणी प्रत्यक्करणया लिखेत्। सप्तार्धविधस्य द्विस्तावती भूमिः पञ्चदशपुरुषाः। तस्याः करणी त्रय.पुरुषाश्चतुरधिकशताङ्गुलयः पञ्चविंशतितिलाश्च। तयाऽपरेण यूपावटदेश सञ्चरमवशिष्यानुप्रष्ठ्यं समचतुरस्र विहृत्य पूर्वस्याः करण्या अर्धाच्छ्रोणी प्रत्यालिखेत्। सा भूमिस्सप्तविधपरिमितप्रउगाकृतिर्भवति।

**Karavinda (Sutra 5 and 6)**

अत्र करणी करणीना द्वादशत्रयोदशकृतानि। ताभिश्चयन प्रस्तारव्यत्यास इत्येवमाद्येकविधवत् ग्राह्यमित्यर्थः। विशेषस्तु प्रउगा इष्टकाः कारयेत्। करणानि प्रउगाकृतीनि भवेयुः। ता द्वादशत्रयोदशभागीयाः पादा अर्धाश्च प्रउगाकारा ग्राह्याः। चत्वारः पुरुषा एकोनचत्वारिंशदङ्गुलयः एकविंशतितिलाश्च प्रउगस्यैषा मात्रा। सा प्रउगस्य पार्श्वमानी। तस्याः द्वादशेन त्रयोदशेन च करणानि कारयेत्। पादा अर्धाश्च द्वादश भागीयानामष्टत्रिंशदङ्गुलयः पञ्चविंशतितिलाश्च। एषामात्री तन्मुखम्।

पार्श्वमान्यौ त्रिचत्वारिंशदङ्गुलयः दशतिलाश्च । अर्धेष्टकानामेका पार्श्वमानी । सैव अन्या अष्टत्रिंशदङ्गुलयः पञ्चविंशतितिलाश्च । एकोनविंशतिरङ्गुलयोऽर्धंत्रयोदशतिलाश्च मुखम् । पादेष्टकानामेकोनविंशतिरङ्गुलयः द्वाविंशतितिलाश्च एकं मुखं । पार्श्वमान्यावेकविंशतिरङ्गुलयः द्वाविंशतितिलाश्च । अथ त्रयोदशभागीयानां तासां पञ्चत्रिंशदङ्गुलयः पञ्चविंशतितिलाश्चैकं मुखम् । पार्श्वमान्यौ तिलोनचत्वारिंशदङ्गुलयः । अर्धेष्टकानामपि सैवैका पार्श्वमानी । अन्याः पञ्चत्रिंशदङ्गुलयः पञ्चविंशतितिलाश्च । सप्तदशाङ्गुलयः एकोनत्रिंशत्तिलाश्च तिलार्धश्चैकं मुखम् । पादेष्टकानां सप्तदशाङ्गुलय एकोनत्रिंशत्तिलाश्चैकं मुखम् । पार्श्वमान्यौ विंशतिरङ्गुलयोऽर्धतिलोनाः । उपधाने प्रथमप्रस्तारे प्रउगमुखे चतुष्षष्टिः पादेष्टकाः उपदध्यात् । श्रोण्योश्चतस्रश्चतुर्विंशोत्तरं शतं द्वादश्यः । चतस्रोऽर्धेष्टकाः । एष द्विशतः प्रस्तारः । अपरस्मिन् श्रोण्योर्विंशतिर्विंशतिस्त्रयोदशपादाः द्वावर्धावष्टपञ्चाशदधिकशतं त्रयोदश्यः । एष द्विशतः प्रस्तारः । व्यत्यासश्च कार्यः ॥

Sundararaja (Sutra 1)

काम्याः छन्दश्चित्प्रभृतयोऽग्नयो नित्यस्य चतुरस्रस्य गुणविकाराः, तस्यैवाग्नेर्गुणमात्रेण विकृतत्वात् गुणफलं स्वफलं च साधयन्ति । यथा अग्निष्टोमस्य गुणविकारा उक्थ्यादय ॥

Sundararaja (Sutra 2)

प्रउगं शकटस्य मुखं त्रिकोणं, तद्वच्चीयत इति प्रउगचित् । 'कर्मण्यग्न्याख्यायाम्' इति क्विप् ।

तस्याग्नेर्मानमाह—

Sundararaja (Sutra 3)

सारत्निप्रादेशस्य सप्तविधस्य करणी त्रीणि शतान्यष्टाविंशतिश्चाङ्गुलयोऽर्धद्वादशतिला. । तस्या द्विकरणी पादोनपञ्चषष्टिचतुश्शताङ्गुलयः द्विस्तावत्याः पञ्चदशपुरुषायाश्चतुरस्रीकृताया भूमेः करणी । प्रउगस्य पार्श्वमानी चत्वारः पुरुष एकोनचत्वारिंशदङ्गुलय एकविंशतितिलाश्च । यावानग्निरित्येव सिद्धे सारत्निप्रादेशग्रहणं तस्य पक्षस्य शाखान्तरीयत्वेन यत्नसाध्यत्वात् एकविधादिष्वेकशतपर्यन्तेषु केवलेषु सारत्निप्रदेशेषु च यथाकामं गुणविकारा भवन्त्येवेति पूर्वमेव प्रतिपादितम् । तत्र पक्षपुच्छरहितानां प्रउगचिदादीनां खाकाशश्रुतिवेदैकामित्यादिना आनीतस्य पुरुषस्य विंशतिशततमो भागोऽङ्गुलिः कल्प्या । तस्याश्चतुस्त्रिंशो भागस्तिल. ।

Sundararaja (Sutra 4)

नित्या प्रकृत्यैव । सा भूमिरेव कृते प्रउग भवति ।

Sundararaja (Sutra 5)

करण द्वादशेन त्रयोदशेनेत्यादिना ।

Sundararaja (Sutra 6)

द्वादश्या पार्श्वे त्रिचत्वारिंशदङ्गुले सपाददशतिलयुक्ते नवतिलोन नवत्रिंशदङ्गुलमपरम् । तेषामर्ध पाद्या । तृतीयैर्नवम्य । त्रयोदश्यास्तु चत्वारिंशदङ्गुले तिलोने पार्श्वे त्रिपादोनषट्त्रिंशदङ्गुलमपरम् । एतेषामर्धे पाद्या । तृतीयैश्च नवम्य । उपादाने प्रथमे प्रस्तारे चतुश्चत्वारिंशच्छतेन द्वादशीभिरुदीच्यो द्वादश रीतय । मध्यमरीतिचतुष्टये मध्ये षोडशोद्धृत्य चतुष्षष्टि पाद्या । प्रउगमुख्यामुद्धृत्य नव नवम्य । द्विशत प्रस्तार । अपरस्मिन् प्रस्तारे त्रयोदशीभि नवषष्टिशतेन त्रयोदश रीतय । तासु दशम्या सप्तेष्टका उद्धृत्य विंशति पाद्या । अष्टादश नवम्यश्च निधेया । एव द्विशत ।

उभयत प्रउग चिन्वीत य कामयेत प्रजातान् भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानिति विज्ञायते ॥ (7)

Kapardi (Sutra 7)

उभयतश्शकटमेव चिन्वीत य कामयेतोत्पन्नानुत्पत्स्यमानाश्च शत्रून् बाधेयेति ।

यथा विमुखे शकटे ॥ (8)

तावदेव दीर्घं चतुरस्रं विहृत्य पूर्वापरयो करण्योरर्धात्तावति दक्षिणोत्तरयोर्निपातयेत् ॥ (9)

नित्योभयत प्रउगम् ॥ (10)

प्रउग चितीक्तो (क्तम्) ॥ (11)

उभयत प्रउगा इष्टका कारयेत् ॥ (12)

Kapardi (Sutra 8 9 10 11 and 12)

तावदेव सप्तार्धस्य द्विगुणम् । इह तु दीर्घचतुरस्रस्य द्विगुणायामप्रमाणविस्तार । पुरुषद्वयेन त्रिभिररत्निभि षोडशभिरङ्गुल सार्धैर्वि-

शत्या तिलैः मिता तिर्यङ्मानी द्विगुणा पार्श्वमानी। एवं दीर्घचतुरस्रं विहृत्य तिर्यङ्मानीमध्ये च[1] शङ्कून्निहत्य शङ्कुषु रज्ज्वा वेष्टयित्वा बाह्यतस्त्यजेत्। सप्तषष्टिशतत्रयमङ्गुलीनां चतुर्दशभिस्तिलैस्सार्धमीषाप्रमाणम्। आसां द्वादशेन करणानि कारयेत्। प्रउगचितोभयतः प्रउगेष्टकाः कारयेत्। उभयतः प्रउगाकाराः इष्टकाः पादाश्चोभयतः प्रउगीभूताः। चयनविधिरुक्तः प्रउगे। तत्र श्लोकाः -

त्रिसप्तकैस्तिलैर्युक्तां[2] साष्टाविंशशतत्रयीम्।
प्रउगस्योत्तरम्याग्ने. तिर्यङ्मानी विदुर्बुधाः॥
तिर्यग्द्विगुणितायामे चतुरस्रे हविर्भुजः।
शङ्कून्निहत्य मध्येषु करणेषु चतुर्ष्वपि॥
रज्जुं शङ्कुषु सयोज्य श्रोण्योरसान् परित्यजेत्।
शिष्टं सप्तार्धमेव स्याच्छकटे विमुखे यथा॥
चतुर्दशतिलैर्युक्तं सप्तषष्टिशतत्रयम्।
प्रउगस्योत्तरस्यैतदीषामात्रं प्रकल्पितम्॥
ईषाद्वादशभागेन तथा भागोत्तरेण च॥
उभयतः प्रउगीभूताः सपादाः कारयेदिह[3]॥

**Karavinda** (Sutra 7)

उभयतः प्रउग—उभयत. शकटमुखं। प्रजातान् शत्रून् प्रणुदेयं जनिष्यमाणांश्च प्रणुदेय यथा न जायन्ते तथा करवाणीत्यर्थः।

श्रुतिपदं व्याचष्टे—

**Karavinda** (Sutra 8, 9, 10 and 11)

विमुखे—नानामुखे शकटे यथा पृष्ठे सहिते तिष्ठेते तादृगाकारमुभयत्र प्रउग तथा चिन्वीतेत्यर्थ.। तावदेव पूर्वोक्तं सारत्निप्रादेशश्च सप्तविधस्य द्विगुणं दीर्घं चतुरस्रं विहृत्य तिर्यङ्मानीपार्श्वमानीना मध्ये शङ्कु निहत्य पूर्वस्माच्छङ्कोः दक्षिणं शङ्कुं प्रत्यक्ष्णया लिखेद्दक्षिणतः पश्चिम पश्चिमतः उत्तरमुत्तरतः पूर्वं, एव लिखेदुभयतः प्रउगाकृतिक्षेत्र भवति। विस्तारद्विगुणायाम दीर्घं पञ्चपुरुषाः सप्तदशाङ्गुलाश्चायाम द्वौ पुरुषावष्टषष्टिरङ्गुलय एकविंशतितिलाश्च तिर्यङ्मानी दीर्घचतुरस्रस्य॥

1. पार्श्वमानी मध्ये च; 2. त्रिसप्तकैस्तिलैस्सार्धं
3. उभयत. प्रउगीभूता. इष्टका. कारयेदिह।

Sundararaja (Sūtra 4)

नित्या प्रकृत्येव । सा भूमिरेवं कृते प्रउग भवति ।

Sundararaja (Sūtra 5)

करण द्वादशेन त्रयोदशेनेत्यादिना ।

Sundararaja (Sūtra 6)

द्वादश्या पार्श्वे त्रिचत्वारिंशदङ्गुले सपाददशतिलयुक्ते नवतिलोनं नवत्रिंशदङ्गुलमपरम् । तेषामर्धः पाद्याः । तृतीयेनंवम्यः । त्रयोदश्यास्तु चत्वारिंशदङ्गुले तिलोने पार्श्वे त्रिपादोनषट्त्रिंशदङ्गुलमपरम् । एतेषामर्धः पाद्याः । तृतीयश्च नवम्यः । उपादाने प्रथमे प्रस्तारे चतुश्चत्वारिंशच्छतेन द्वादशीभिरुदोच्यो द्वादश रीतयः । मध्यमरीतिचतुष्टये मध्ये षोडशोद्धृत्य चतुष्षष्टिः पाद्याः । प्रउगमुख्यामुद्धृत्य नव नवम्यः । द्विशतः प्रस्तारः । अपरस्मिन् प्रस्तारे त्रयोदशीभिः नवषष्टिशतेन त्रयोदश रीतयः । तासु दशम्या सप्तेष्टका उद्धृत्य विंशति. पाद्याः । अष्टादश नवम्यश्च निधेया । एवं द्विशतः ।

उभयतः प्रउगं चिन्वीत यः कामयेत प्रजातान् भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानिति विज्ञायते ॥ (7)

Kapardi (Sūtra 7)

उभयतश्शकटमेव चिन्वीत यः कामयेतोत्पन्नानुत्पत्स्यमानांश्च शत्रून् बाधेयेति ।

यथा विमुखे शकटे ॥ (8)

तावदेव दीर्घं चतुरस्रं विहृत्य पूर्वापरयोः करण्योरर्धात्तावति दक्षिणोत्तरयोर्निपातयेत् ॥ (9)

नित्योभयतः प्रउगम् ॥ (10)

प्रउग चितोक्तीः (क्तम्) ॥ (11)

उभयतः प्रउगा इष्टकाः कारयेत् ॥ (12)

Kapardi (Sūtra 8, 9, 10, 11 and 12)

तावदेव मप्तार्धस्य द्विगुणम् । इह तु दीर्घचतुरस्रस्य द्विगुणायामप्रमाणविस्तार. । पुरुषद्वयेन त्रिभिररत्निभिः षोडशभिरङ्गुलैः सार्धैश्च वि-

शत्या तिलैः मिता तिर्यङ्मानी द्विगुणा पार्श्वमानी। एव दीर्घचतुरस्र विहृत्य तिर्यङ्मानीमध्ये च[1] शङ्कून्निहत्य शङ्कुषु रज्ज्वा वेष्टयित्वा बाह्यं त्यजेत्। सप्तषष्टिशतत्रयमङ्गुलीना चतुर्दशभिस्तिलैस्सार्धमीषाप्रमाणम्। ईषासां द्वादशेन करणानि कारयेत्। प्रउगचितोभयतः प्रउगेष्टकाः कारयेत्। उभयतः प्रउगाकाराः इष्टकाः पादाश्चोभयतः प्रउगीभूताः। चयनविधिरुक्तः प्रउगे। तत्र श्लोकाः -

त्रिसप्तकस्तिलैर्युक्तां[2] साष्टाविंशशतत्रयीम्।
प्रउगस्योत्तरस्याग्ने. तिर्यङ्मानी विदुर्बुधाः॥
तिर्यग्द्विगुणितायामे चतुरस्रे हविर्भुजः।
शङ्कून्निहत्य मध्येषु करणेषु चतुर्ष्वपि॥
रज्जुं शङ्कुषु सयोज्य श्रोण्योरंसान् परित्यजेत्।
शिष्टं सप्तार्धमेव स्याच्छकटे विमुखे यथा॥
चतुर्दशतिलैर्युक्तं सप्तषष्टिशतत्रयम्।
प्रउगस्योत्तरस्यैतदीषामात्रं प्रकल्पितम्॥
ईषाद्वादशभागेन तथा भागोत्तरेण च॥
उभयतः प्रउगीभूता. सपादाः कारयेदिह[3]॥

**Karavinda (Sutra 7)**

उभयत· प्रउग—उभयत. शकटमुख। प्रजातान् शत्रून् प्रणुदेय जनिष्यमाणाश्च प्रणुदेय यथा न जायन्ते तथा करवाणीत्यर्थः।

श्रुतिपद व्याचष्टे—

**Karavinda (Sutra 8, 9, 10 and 11)**

विमुखे—नानामुखे शकटे यथा पृष्ठे सहिते तिष्ठेते तादृगाकारमुभयत्र प्रउग तथा चिन्वीतेत्यर्थ.। तावदेव पूर्वोक्तं सारत्निप्रादेशश्च सप्तविधस्य द्विगुणं दीर्घं चतुरस्रं विहृत्य तिर्यङ्मानीपार्श्वमानीना मध्ये शङ्कु निहत्य पूर्वस्माच्छङ्को. दक्षिण शङ्कुं प्रत्यक्षणया लिखेद्दक्षिणत पश्चिम पश्चिमन उत्तरमुत्तरतः पूर्वं, एव लिखेदुभयतः प्रउगाकृतिक्षेत्र भवति। विस्तारद्विगुणायाम दीर्घं पञ्चपुरुषाः सप्तदशाङ्गुलाश्चायाम द्वौ पुरुषावष्टषष्टिरङ्गुलय एकविंशतितिलाश्च तिर्यङ्मानी दीर्घचतुरस्रस्य॥

1. पार्श्वमानी मध्ये च, 2 त्रिसप्तकैस्तिलैस्सार्धं

3 उभयत प्रउगीभूता इष्टका. कारयेदिह।

**Karavinda** (Sutra 12)

करणानि चयनविधिश्च प्रउगवत् । विशेषस्तूभयत प्रउगा- इष्टका । त्रय पुरुषास्सप्त चाङ्गुलय सप्तदश तिलाश्च एषा प्रमाणम् । अस्य द्वादशो भागस्त्रिंशदङ्गुलय पञ्चविंशतितिलाश्च । त्रयोदशो भागोऽष्टाविंशतिरङ्गुलय त्रिभागोना नव तिलाश्च । शतद्वय अष्टा- विंशतिरङ्गुलय एकविंशतितिलाश्चोभयत प्रउगस्य तिर्यङ्मानी । तस्या द्वादशभागेन त्रयोदशभागेन परिमित करण यथा भवति तथा भवेत् करणम् । अर्धेष्टका द्वादशभागीयाभिस्त्रयोदशभागीयाभिश्च आयामत- स्तुल्या विस्तारतस्तदर्धविस्तारा । पादेष्टका आयामतो विस्तारतश्चार्धा । प्रथमे प्रस्तारे या पादा उपहिता ते द्वितीये तदन्यत्रोपधेया । द्वादश- भागीयापक्षे चतस्रोऽर्धेष्टका त्रयोदशभागीयापक्षे द्वे ॥

**Sundararaja** (Sutra 7 and 8)

विमुखे—विपर्यस्तमुखे प्राक्पश्चान्मुखे यथा शकटभागे तादृगे- षोऽग्निर्भवति ।

**Sundararaja** (Sutra 9)

द्विस्तावदग्निक्षेत्रविस्तारद्विगुणायाम दीर्घचतुरस्र विहरेत् । त्रीणि शतान्यष्टाविंशतिश्चाङ्गुलयो द्वाविंशतितिलाश्च[1] तिर्यङ्मानी । द्विगुणा पार्श्वमानी । एव विहृत्य पूर्वापरयो कर्ण्योर्मध्यात् दक्षिणोत्तरयोर्मध्ये निपातयेत् । वह्निष्पन्द्यमपच्छिन्द्यात् ।

**Sundararaja** (Sutra 10 amd 11)

एकविधोक्त इष्टकादि ।

**Sundararaja** (Sutra 12 )

द्वादश्याश्चत्वारि फलकानि त्रिंशदङ्गुलानि सैकविंशतितिलानि । एकाश्या सप्तविंशत्यङ्गुल्या त्रयोदशतिलयुक्ता । द्विगुणाऽन्या । एषामर्ध पाद्यास्तृतीयेनवम्य । त्रयोदश्याश्चात्वारि फलकानि सपादाष्टाविंशत्यङ्गु लानि, इत्येव कर्णरज्जु । एवविधवदेवोपधानम् । रीतयस्तु कोणादि- मुखा । द्वितीयप्रस्तारे मध्ये विंशति पाद्या, अष्टादश नवम्य । ता अपि मध्यस्थपाशाना पश्चात्पुरस्ताच्च निधेया ॥

इति द्वादश खण्ड

# अथ त्रयोदशः खण्डः

रथचक्रचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते ॥ (1)

यावानग्निस्सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वा तस्मिंश्चतुरस्रमवदध्याद्यावत्सम्भवेत् ॥ (2)

**Kapardi** (Sutra 1 and 2)

शुल्बान्तरे रथचक्रद्वयमुक्तम्; अनेनाचार्येणैकमेवोक्तम्; तस्मात्तदेवोच्यते। यावानग्निस्सारत्निप्रादेशो द्विस्तावती भूमिं परिमण्डलां कृत्वा उभयतःप्रउगस्य या तिर्यङ्मानी तया चतुरस्रं करणं कृत्वा तेनेष्टकाः कारयेत्। ताश्चतुरस्रे चतुश्चत्वारिंशदधिकशतमुपधाय तासां चतुरस्रमवदध्याद्यावत्सम्भवेत्।

तस्या करण्या द्वादशेनेष्टकाः कारयेत् ॥ (3)

तासां षट् प्रधा उपधाय शेषमष्टधा विभजेत् ॥ (4)

**Kapardi** (Sutra 3 and 4)

प्रधिकाश्चत्वारः। तेषु प्रधिकेषु षडिष्टका द्वादशेन कारिताः उपधाय शेषं प्रधिकमष्टधा विभजेत्। अष्टभिरुपदध्यात्। तासां करणं वक्ष्यामः—त्रयस्त्रिंशदङ्गुलमष्टभिस्तिलैरूनमेकं[1], एकत्रिंशदङ्गुलं द्वादशभिस्तिलैरूनमेकं, अष्टाविंशत्यङ्गुलमेकं अष्टाविंशत्यङ्गुलं तिलाभ्यां सहैकं, एतैश्चतुर्भिः फलकैः एकं करणं; तस्य चतुर्थं फलकं तक्षेत् * यथा धनुराकारं भवति यथा शरमष्टादशतिलमात्रं भवति। तथा एकत्रिंशदङ्गुलं द्वादशभिस्तिलैरूनं, एकविंशत्यङ्गुलं एकादशभिस्तिलैरूनमेकं, अष्टात्रिंशदङ्गुलं त्रिभिस्तिलैस्सहैकं,* नवत्रिंशदङ्गुलं द्वादशतिलैः सहैकं, एतैश्चतुर्भिः द्वितीयं करणम्। अस्य चतुर्थं पूर्ववत्तक्षेत्। शरप्रमाणं तिलाभ्यां सहैकं भवति तथा तक्षेत्। चत्वारिंशदङ्गुलं[2] दशभिस्तिलैरूनमेकं, त्रयस्त्रिंशदङ्गुलं दशभिस्तिलैरूनमेकं, द्वात्रिंशदङ्गुलं तिलेन सहैकं,

1. अर्धद्वाविंशतितिलाश्च। 1 मेकं फलकं–B 2 त्रिचत्वारिंशदङ्गुलम्।

*The lines "यथा धनुराकारं" to त्रिभिस्तिलैस्सहैकं" do not occur in some MSS.

द्वात्रिंशदङ्गुलं द्वादशभिस्तिलैस्सहैकं, अष्टाविंशत्यङ्गुलं एकादशभिस्तिलैस्सहैकं, पञ्चचत्वारिंशदङ्गुलं[1] चतुर्भिस्तिलैरूनमेकं, एतैश्चतुर्भिश्चतुर्थं करणम्। तस्य चतुर्थं तक्षेत्। पूर्ववच्च प्रमाणद्व्यङ्गुलं[2] त्रिभिस्तिलैरूनम्—तत्र श्लोकौ भवतः—

रज्जुः कृतान्यतः पाशा सप्ताशीतिशताङ्गुला।
विमान रथचक्रस्य करोत्येषा तु मण्डलम्।
चतुरश्रकरणी रज्जुः चतुष्षष्टिशतद्वयी।
तिलैस्त्रयोदशैर्युक्ता रथचक्रे हविर्भुजि॥

**Karavinda (Sutra 1)**

रथचक्रं मण्डलाकारं भ्रातृव्यवान् तैर्बाध्यमानः तान् जेतुम्॥

**Karavinda (Sutra 2)**

अरत्निप्रादेशसहितस्य करणी द्वौ पुरुषावष्टाशीतिरङ्गुलयः विष्कम्भार्धं एकविंशतितिलाश्च। तस्य मध्ये यावत्सम्भवं चतुरस्रं विहृत्य विलिख्य॥

स्योत्तरा । तिर्यङ्मानी चोक्ता । उत्तरपार्श्वमानी द्विचत्वारिंशदङ्गुल्यः पञ्चविंशतितिलाश्च । मुख चतुस्त्रिंशदङ्गुलयः दश तिलाश्च । तत्पूर्वं तक्षयेत् । तान्येव विपरीतान्युत्तरार्धे करणानि । एवंवोत्तरार्धे विभागकल्पना । तत्र सर्वेषां सैव पश्चात्तिरश्ची । दक्षिणमुत्तरेषां दक्षिण भवति । तान्येव मुखानि । अत्र चतुर्थवत् पञ्चमं । तृतीयवत् षष्ठम् । द्वितीयवत् सप्तमम् । प्रथमवदष्टमम् । एव दक्षिणोत्तरपश्चिमप्रधिषु दक्षिणोत्तरपश्चिममुखान्येतानि करणानि भवन्ति ॥

Sundararaja (Sutra 1 and 2)

विष्कम्भो मण्डलविधावेव प्रपञ्चितः । मध्ये शङ्कुं निहत्य पञ्चाशीतिशताङ्गुलेन चतुर्दशतिलयुक्तेन परिमण्डल भ्रमयेत् । तस्य परिणाहस्तिलन्यूनं पञ्चषष्ट्यधिकशतोत्तरसहस्राङ्गुलय । तस्य मध्ये विष्कम्भार्धद्विकरण्या द्विषष्टिशतद्वयाङ्गुलयः सप्ततिलसहितया समचतुरस्रमवदध्यात् । चतुरस्राद्बहिश्चत्वारः प्रधयः ॥

Sundararaja (Sutra 3)

द्वाविंशत्यङ्गुलेन पञ्चतिलोनेन समचतुरस्रकरणम् । चतुरस्रमध्ये चतुश्चत्वारिंशच्छतमिष्टकाश्शेरते ।

Sundararaja (Sutra 4)

प्रधिमध्ये[1] षट् चतुरस्रा उपधाय तस्य प्रधेश्शेषमष्टधा विभजेत् । उपहिताना षण्णा पार्श्वयोर्द्वे द्वे मुखे चतस्र उदीरिता. । तासां चत्वारि करणानि । त्रिकोणमाद्यम् । तस्य तिलत्रययुक्त षड्विंशत्यङ्गुलमेक[2] तिर्यक्फलकम् । सार्धसप्ततिलहीन त्रयस्त्रिंशदङ्गुल द्वितीयम् । एकादशतिलयुक्तद्विचत्वारिंशदङ्गुलं तृतीयम् । कर्णरूप तद्वनुरिव तक्षेत् । यथा षट्तिलयुक्ताङ्गुलिश्शरो भवति । द्वितीयस्य षड्विंशत्यङ्गुल तिलत्रययुक्तं तिर्यक्फलकमेकम् । एकादशतिलयुक्त द्विचत्वारिंशदङ्गुलमपरम् । सप्ततिलोन[3] त्रयस्त्रिंशदङ्गुलमेकं पार्श्वम् । षट्त्रिंशक सविंशतितिल पार्श्वान्तरम् । तद्वनुरिव तक्षत् । यथा तिलत्रयोनाङ्गुलिश्शरो भवति । तृतीयस्य सार्धविंशत्यङ्गुलमेक[4] तिर्यक्फलकम् । त्रिंशक षोडशतिलहीन द्वितीयम् । सप्ततिलोन[5] त्रयस्त्रिंशकमेक पार्श्वम् । चतुस्त्रिंशत्पार्श्वान्तरं,

1. प्रधिमूलमध्ये ।
2. षट्त्रिंशदङ्गुलमेक, तिलत्रयहीन ।
3. सार्धसप्ततिलोन ।
4. सार्धतिलषोडशक ।
5 सार्धसप्ततिलोनत्रयस्त्रिंशमेक ।

तदनुरिव तक्षेत् । पञ्चांशोनाङ्गुलिश्शरो भवति । चतुर्थस्य त्रिंशदङ्गुलं षोडशतिलहीनमेकं निर्यक्फलकम् । मार्वद्वात्रिंशकं द्वितीयम् । सप्ततिलोनत्र्यस्त्रिंशमेकं[3] पार्श्वम् । तिलत्रयोनं त्र्यस्त्रिंशकं पार्श्वान्तरम्. तदनुरिव तक्षेत् । पञ्चविंशतितिलास्तस्य शरः । एतान्येव चत्वारि करणानि अन्यस्मिन् प्रध्यर्धे विपर्यासेन भवन्ति । एवमेव चत्वारः प्रधयः ॥

उपधाने चतुरस्रस्यावान्तरदेशान्[1] प्रति स्रक्तीस्सम्पादयेत् ॥ (5)

मध्यानीतरस्मिन् प्रस्तारे ॥ (6)

व्यत्यासं चिनुयात् यावतः प्रस्तरांश्चिकीर्षेत् ॥ (7)

**Kapardi** (Sutra 5, 6 and 7)

गतमेतत् । एष एव प्रस्तारो मण्डले श्मशाने द्रोणे च ।

द्रोणचितं चिन्वीतान्नकाम इति विज्ञायते ॥ (8)

**Kapardi** (Sutra 6)

अन्नकामस्य द्रोणचिदिति श्रुतिः ।

द्वयानि तु खलु द्रोणानि चतुरस्राणि परिमण्डलानि च ॥ (9)

तत्र यथाकामी शब्दार्थस्य विशयित्वात् ॥ (10)

**Kapardi** (Sutra 9 and 10)

द्रोणशब्दो जलाधारस्य वर्तुलाकारस्य वाचकः । दारुमयस्य सत्सरुकस्य चतुरस्रस्य च । तत्रैकतरो गृह्यत इत्युच्यते । यथाकामी चतुरस्रं परिमण्डलं वा । अगृह्यमाणत्वाद्विशेषस्य चतुरस्रं परिमण्डलं वा चिनुयात् । उभयशब्दप्रवृत्तेः ॥

चतुरस्रं वा यस्य गुणशास्त्रम् ॥ (11)

स चतुरस्रः ॥ (12)

पश्चात् त्सरुर्भवत्यनुरूपत्वायेति विज्ञायते ॥ (13)

**Kapardi** (Sutra 11, 12 and 13)

वाशब्दः पक्षव्यावृत्तौ । न विकल्पार्थः । नैष मण्डलाकारश्चेतव्यः; चतुरस्र एव चेतव्यः । यस्य गुणशास्त्रं 'द्रोणे वा अन्न भ्रियते' इति ।

1. उपधानेऽवान्तरदेशान् ।

तच्चतुरस्रे युज्यते न वर्तुलाकारद्रोणे । अतो गुणसम्बन्धाच्चतुरस्र एव निश्चीयेत । तस्माच्चतुरस्र एव चेतव्य । पश्चात्पुच्छस्थाने त्सरुर्भवति अनुरूपत्वश्रुते, तथाकारसपादनाय ।

Karavinda (Sutra 5 6 and 7)

गतम्,

Karavinda (Sutra 8)

अ नाधार पात्र द्रोणमित्युच्यते । तदाकार चिन्वीत अन्नकाम ।

Karavinda (Sutra 9)

तुशब्दो भेदे । न प्रउगादिवदेकप्रकाराणि द्रोणानि किन्तु द्विप्रकाराणि चतुरस्राणि परिमण्डलानि च । खलुशब्द प्रसिद्धौ ॥

Karavinda (Sutra 10)

गतम

उभयत्र द्रोणशब्दप्रयोगादुभयप्रकारौ ग्राह्यौ ॥

*Karavinda (Sutra 11 and 12)**

चतुरस्राण्येव ग्राह्याणि । कुत ? यस्येद गुणशास्त्र स चतुरस्र प्राकृत चतुरस्र अग्निमनूद्यान्नकामाय द्रोणाकार विधीयते । अत इदमपि चतुरस्रमेव ग्राह्यमित्यथ ॥

Karavida (Sutra 13)

आत्मन पश्चात् पुच्छस्थाने त्सरुभवति । त्सरुमुष्टि । प्राङमुखावस्थितस्य पुरुषस्य पश्चात् स्थित द्रोणोऽपि पश्चान्मुष्टिर्भविष्यति । एवमिहापीत्यथ ॥

Sundararaja (Sutra 5 6 7 8 9 10 and 11)

तत्र हेतुमाह —

Sundararaja (Sutra 11 and 12)

गुणप्रापकस्समचतुरस्र । यस्य—अग्ने ।

---

* According to Sundararaja the two Sutras are चतुरस्र वा ॥ (11), (यस्य गुणशास्त्र, स चतुरस्र ॥ (12)

Sundararaja (Sutra 13)

पश्चात्सरुर्यस्य स तथोक्तः । असमासो वा । त्सरुशब्द उभयलिङ्गः । 'त्सरुः पुमान्' इति नैघण्टुक प्रमादः ।

'दशम त्सरु' इति निर्देशात् । अनुरूपत्व द्रोणानुरूप्यम् । एतच्च मण्डलचतुरस्रयोस्समानम् । तथाह भारद्वाज—

द्रोणचित चित्वोनान्तकामश्चतुरस्रं परिमण्डलं वा पश्चात्सरु-र्भवति । इति । स्पष्टमेवाह कात्यायनः—

'दशमभागो वृत्त पश्चात्पुरस्ताद्वा मण्डलेऽप्येवमेव' इति ।

सर्वस्या भूमेर्दशम त्सरु ॥ (14)

तस्य पुच्छेन निर्हार उक्तः ॥ ( 5)

तस्य करण्या द्वादशेनेष्टकाः कारयेत् ॥ (16)

अध्यर्धाः पादेष्टकाश्च ॥ (17)

Kapardi (Sutra 14, 15 16 and 17)

द्वादशचतुर्भागीयाक्षेत्र सारत्निप्रादेशस्य दशमोऽशः । षष्ट्यङ्गुल-प्रमाण निर्यङ्मानी तस्य द्विकरणी पार्श्वमानी । तस्याक्ष्णया रज्ज्वा कृते चतुरस्रे द्वादशचतुर्भागीया क्षेत्रं भवति । यत्सरोः प्रमाणम् । तयैव त्रिगुणीकृतया द्रोण ।

तस्य पुच्छेन निर्हार उक्त —पुच्छेनैव मानमार्गो व्याख्यात । तस्य करण्या द्वादशेष्टकाः कारयेत् तस्येति द्रोणः परामृश्यते नत्सरु । स च त्रिकोणसमदेशेन चतुर्भागीयेनेत्यर्थः । अध्यर्धा पादेष्टकाश्च अत्र विप्रति-पन्ना याज्ञिकाः अक्ष्णया पादमिच्छन्ति केचित् । केचिद्दीर्घपद-पादमर्धेष्टका कर्तव्या ताभिर्विना सङ्ख्यापूरणस्याशक्यत्वात् : व्यक्त-मुक्त शुल्बान्तरे 'अर्धेष्टकाश्चेति । इहापि चकारादर्धेष्टकाश्चेति । करणानि च 'षट्त्रिंशदङ्गुल[1] तिलोनमेक करण; एकतोऽध्यर्धं द्वितीय; प्रथमकरणमुभयतोऽक्ष्णया चतुर्थं दीर्घं,' तेन पादाना तृतीय करण, तृतीयेनैव करणेन दीर्घेण वाऽर्धेष्टकाना करण चतुर्थम् ।

उपधानेऽध्यर्धाः पुरस्तात्प्रतीचीरात्मन्युपदधाति ॥ (18)

त्सर्वपो श्रोण्योश्च प्राची ॥ (19)

1. षट्त्रिंशदङ्गुल ।

सर्वमग्निं चतुरस्राभिः प्रच्छादयेत् ॥ (20)

पादेष्टकाभिस्संख्यां पूरयेत् ॥ (21)

अपरस्मिन्प्रस्तारेऽध्यर्धा दक्षिणतः उदीचीरात्मन्युपदध्यात्युत्तरतश्च दक्षिणाः ॥ (22)

त्सरुपार्श्वयोर्दक्षिणा उदीचीश्च ॥ (23)

सर्वमग्निं चतुरस्राभिः प्रच्छादयेत् ॥ (24)

पादेष्टकाभिस्संख्यां पूरयेत् ॥ (25)

व्यत्यासं चिनुयात् यावतः प्रस्तारांश्चिकीर्षेत् ॥ (26)

**Kapardi** (Sutra 18, 19, 20, 21, 22, 23, 24, 25 and 26)

उपाधाने यथासूत्रमध्यर्धा उपधाय पूर्वार्धे सप्तदशेष्टका अक्ष्णया छिन्द्यात् द्वावर्धौ । यदि दीर्घाश्चेत् पादा उत्तरस्यां रीत्या नवेष्टका छिन्द्यात् यथा प्राची; प्रपादाः यथा दक्षिणस्यामष्टौ तथैव प्राचीरेकाद्विधा । तत्र तथैव पूर्णः प्रस्तारः । अपरस्मिन्प्रस्तारे पश्चादात्मन्यष्टादशेष्टकाः करणे छिन्द्यात् । द्वे द्वे इष्टके द्विधाकरणेनैव । यदि दीर्घाः पादाः पूर्वस्यां रीत्यां नवेष्टका भिन्द्यात् । यथा वा उदीच्याश्श्रोण्या द्वे द्वे त्सरोः पश्चादेवाग्रतः पाशमध्येऽर्धा.[1] पादाश्वोदीच्यः । एवं प्रस्तारो द्विशत । तत्र श्लोका भवन्ति—

मितास्त्रिभिस्तिलैरूना चतुर्भिश्च शतेन च ।
द्रोणस्यैषा त्सरोर्मात्रा तस्य त्रिगुणितैव सा ॥
पादा अर्धाश्च भेदास्स्युः करणानि विभावसो ।
द्रोणाख्ये तु श्मशाने च चतुरस्रं हविर्भुजि ॥
प्रस्तारे प्रथमे पादा यत्र स्युस्तत्र नोत्तरे ।
द्वावर्धौ प्रथमस्तारे चतस्र स्तूत्तरे स्तरे ॥
निधाय चोत्तरे स्तारे अध्यर्धत्वविपर्यके ।
अध्यर्धा यत्र तत्र स्युः पादा दीर्घा यदि त्वथ ॥
प्राच्यस्स्युः प्रथमे स्तारे उदीच्यस्तूत्तरे स्तरे ।
अभितः पादमध्यर्धा रीतयसप्त चोत्तरे ॥ इति ॥

**Karavinda** (Sutra 14 and 15)

सर्वस्याग्निक्षेत्रस्य दशमोंशः त्सरुः । छान्दसो नपुंसकलिङ्गनिर्देशः । सारत्निप्रदेशस्य दशमो भागो द्वादशभागीयाक्षेत्रम् । तस्य त्सरोर्निर्हारः

1 तस्याग्रतो वा मध्येऽर्धाः ।

समुदायात् पृथक् करण पुच्छेन पुच्छप्रदेशेन भवेत् । स उक्तो निर्हार चतुरस्राच्चतुरस्त्र निजिहीर्षन्निति । चतुरस्रस्यात्मन करणी शतत्रय-मेकादशाङ्गुलय षड्विंशतितिलाश्च । त्सरोस्तु अधिक शतमङ्गुलय एकत्रिंशत्तिलाश्च ॥

**Karavinda** (Sutra 16 and 17)

तस्य द्रोणस्य करणी दशकी षड्विंशतिरङ्गुलय तिलोना । द्वादशभागीयाना करणी एकतष्षड्विंशतिरङ्गुलय तिलोना. अन्यत्र एकोनचत्वारिंशदङ्गुलय अध्यर्धतिलोना द्वितीय करण पादेष्टका द्वादशभागीयानामेव । चकारादर्धेष्टकाश्च । ताभिर्विना सङ्ख्यापूरणा-शक्तं उक्त च शल्बान्तरे पादेष्टका अर्धेष्टकाश्चेति प्रथमकरणमक्ष्णया भिन्द्यात् ॥

सापादेष्टका अथवा द्वादशभागा पार्श्वमानिका । तत्तुरीय । तिर्यक्मानिका पादेष्टका ॥

**Karavinda** (Sutra 18 and 19)

आत्मनि पूवभाग द्वादशेष्टका प्रतीचीरुपदधाति । त्सर्वग्रे चतस्र । श्रोण्यो प्रत्येक चतस्र । एव चतुर्विंशतिरध्यर्धा ॥

**Karavinda** (Sutra 20 and 21)

शिष्टमग्निक्षेत्र द्वादशभागीयाभि प्रच्छादयेत् पुच्छे चतुरिष्टके द्व रीत्यौ द्वयो पुरस्तात् पुच्छाप्ययविशयरूपैका चतुरिष्टकाश्च । तस्या पुरस्ताद्द्वियेका । आत्मनि द्वादशेष्टका उदीच्यो नवरीतय । एकविंशति-शत चतुरस्रा । चतुर्विंशतिरध्यर्धा । उत्तरस्मिन् पार्श्वे नवचतुरस्रा उद्धृत्य षट्त्रिंशत दीर्घा पादा प्रतीचीरुपदध्यात् । दक्षिणस्मिन् पार्श्वे च नवोद्धृत्य षट्त्रिंशत पादा । पूर्वस्या दिशि द्वादशभागीयानामुपान्त्ये उद्धृत्य द्वे द्वे चार्ध उपदध्यात् । अक्ष्णयापादाश्चत् पूर्वार्धेऽष्टादशचतुरस्रा उद्धृत्य द्विसप्ततिपादा द्वे इष्टके उद्धृत्य द्वे द्वे चार्धे । द्विशत एष प्रस्तार ॥

**Karavinda** (Sutra 22 and 23)

आत्मनि दक्षिणतो द्वादश । तथैवोत्तरत । पुच्छपार्श्वयोश्चतस्र-श्चतस्र । प्राच्यो रीतय द्वात्रिंशत् ॥

**Karavinda** (Sutra 24 and 25)

पुच्छे चतस्रश्चतुरस्रा आत्मनि द्वादशेष्टका प्राच्यो नवरीतय । ता द्वादशशतम् । पश्चादात्मनि । दशचतुरस्रा उद्धृत्य द्वात्रिंशतमक्ष्णयापादा

उपदध्यात् । चतस्रश्चार्धा दीर्घाश्चेत् पादा पूर्वस्या रीत्या नवेष्टका उद्धृत्य षट्त्रिंशतं पादा उदीच्य उपदध्यात् । पश्चादात्मन्यष्टादश चतुरस्रा नवपादा उदीचीरुपधाय तासा पुरस्तादभितो द्विपादा सप्तार्धा उपधाय तासा पुरस्तादष्टादशार्धा उपधाय तासा पुरस्तान्नवपादा उपदध्यात् । द्विशत एष प्रस्तार ।

Sundararaja (Sutra 14 and 15)

पुच्छमिवात्मनो बहिर्भूत पश्चान्मिनुयादित्यर्थ तत्र चतुरस्रद्रोणचित् द्वादशत्रिंशताङ्गुलेनाष्टतिलोनेन समचतुरस्र तस्य पश्चान्मध्यदेशे करणी तृतीयेन ह्रसरुसमचतुरस्रम् ।

Sundararaja (Sutra 16)

आत्मकरण्या द्वादशेन षड्विंशत्यङ्गुलेनैकतिलोनेन समचतुरस्रा ।

Sundararaja (Sutra 17)

तृतीयेन च नवम्य पूर्ववत् ।

Sunararaja (Sutra 18)

द्वादशीभिरुदोची रीति ॥

Sundararaja (Sutra 19)

ह्रसर्वग्रे चतस्रोऽध्यर्धा , श्रोण्योश्च चतस्रश्चतस्र । एव द्वादश ।

Sundararaja (Sutra 20)

द्वादशीभिरेव प्रच्छादितेऽष्टाचत्वारिंशच्छत भवति ।

Sundararaja (Sutra 21)

आत्मनि प्राच्यो द्वादशरीतय । तत्र दक्षिणस्या पश्चाद्द्वय हित्वा पूर्वास्तिस्रो नवम्य उदीच्य । ततो द्वादश पाद्या । ततस्तिस्रो नवम्य । तत प्राक्पाद्या द्वादश । ततस्तिस्रो नवम्य उदीच्य । तत प्राग्द्वादश्यध्यर्धे । एवमेव द्वादशी रीति । एव द्विशत प्रस्तार ॥

Sundararaja (Sutra 22 and 23)

द्वादश द्वादश । दक्षिणेति द्वितीयाबहुवचनस्वीकार । ह्रसरुपार्श्व योर्दक्षिणा उदीचीश्चतस्रश्चतस्र ।

Sundararaja (Sutra 24)

चतुश्चत्वारिंशच्छत भवति ॥

Sundararaja (Sutra 25)

आत्मन्युदीच्यो द्वादश रीतयः । अत्रापरस्यां दक्षिणाध्यर्धाया उदक्तिस्रो नवम्यः प्राच्यः । ततोऽष्टौ पाद्याः । ततस्तिस्रो नवम्यः । ततो द्वादशी ततस्तिस्रोः नवम्यः । ततोऽष्टौ पाद्याः ततस्तिस्रो नवम्यः । ततो-द्वादशी । ततस्तिस्रो नवम्यः* । ततोऽध्यर्धा । एवं पूर्वा रीतिः । द्विशतः प्रस्तारः ।

Sundararaja (Sutra 26)

अथ परिमण्डलस्य द्रोणचिते. प्रकारो वक्ष्यते ।

षट्सप्ततिशताङ्गुलस्त्र्यस्तिलोनो[1] वेणुरुभयतश्छिद्रं । मध्ये शङ्कुं निहत्य तस्मिन् वेणोश्छिद्रं प्रतिमुच्य छिद्रान्तरेण परिमण्डलं परिलिखेत् । मध्यशङ्को. पश्चादष्टषष्टिशताङ्गुले सतिलद्वये शङ्कु । तस्य पश्चात्त्सरु । समचतुरस्र तिलद्वयोनचतुश्शताङ्गुल कुर्यात् । मण्डलमध्यशङ्को पश्चाच्चतुश्शताङ्गुले तिलत्रयोने शङ्कु निहत्य तस्मिन् वेणोश्छिद्रं प्रतिमुच्यान्येन च्छिद्रेण त्सरुणो दक्षिणापरकोणादा-रभ्य उत्तरापरकोणादालिखेत्. यथा त्सर्वग्र प्रध्याकार भवति । मण्डलभ्रमणे त्सरुपूर्वान्तेऽर्धे यावद्धियते तावत्पश्चादागच्छति । ततो मण्डलमध्ये पूर्ववच्चतुरस्र नवचत्वारिंशद्द्विशताङ्गुलमष्टतिलोन-मवदध्यात् । तस्य करण्या द्वादशेनेष्टकाः एकविंशत्यङ्गुल्या नवतिलोना. चतुरस्रमध्ये चतुश्चत्वारिंशच्छतमिष्टाश्शेरते । ततो दीर्घमेक करणम् । तस्य तिलोनषड्विंशत्यङ्गुला तिरश्ची । चतुस्त्रिंशक द्वाविंशतितिल पार्श्वम् । ता प्रधिमूलमध्ये चतस्रश्चतस्रो निधेयाः पूर्वापरयो प्रागायता दक्षिणोत्तरयोरुदगायता । प्रधिशेषेषु सप्तसप्तेष्टका । चतसृणा मुखेषु तिस्र । पार्श्वयोर्द्वे द्वे इति तासा चत्वारि करणानि । त्रिकोणमाद्य. तस्य षट्तिलोनमष्टाविंशत्यङ्गुलमेक फलक । षट्त्रिंशकम् सप्ततिलोन द्वितीयम् । त्र्यशोनित षट्चत्वारिंशदङ्गुल तृतीय कर्णरूपं, तद्धनुरिव तक्षेत्, यथाऽध्यर्धाङ्गुलिश्शरो भवेत् । द्वितीयस्य षट्तिलो-नमष्टाविंशकमेक तिर्यक्फलकम् । त्र्यशोनचतुश्चत्वारिंशदङ्गुल-मन्यत् । सप्ततिल षट्त्रिंशकमेक पार्श्वम् । साष्टादशतिल नवत्रिंशक

1. षट्सप्ततिशताङ्गुलश्चतुस्तिलोनो ।

* 'ततो द्वादशी, ततस्तिस्रो नवम्यः । ततश्चतस्र पाद्या. । ततस्तिस्रो नवम्यः । तत पाद्याश्चतस्रः । ततस्तिस्रो नवम्यः । ततो द्वादशी । ततस्तिस्रो नवम्यः । ततोऽष्टौ पाद्या. । ततो द्वादशी । ततस्तिस्रो नवम्य ॥ 2 ॥

इति ईदृशलेखामध्यस्थले इद पाठान्तर दृश्यते

पार्श्वान्तरम् । तद्धनुरिव तक्षेत्, यथा स[1] चतुस्तिलाङ्गुलिश्शरः । तृतीयस्य सतिलं नवकमेकं तिर्यक्फलकमेकम् । सतिल षोडशाङ्गुलमन्यत् । द्वादशतिलोनं पञ्चत्रिंशदङ्गुलमेकं पार्श्वं द्वादशतिलयुक्तं पञ्चत्रिंशकं पार्श्वान्तरम्:, तद्धनुरिव तक्षेत् । त्रिंशत्तिलाश्शरः । चतुर्थस्य सतिले षोडशिके तिरश्चयौ पार्श्वे च दशतिलोने पञ्चत्रिंशके[2] । एकं पार्श्वं धनुरिव तक्षेत् । एकान्नत्रिंशत्तिलाश्शरः । एषा इष्टका प्रथिमध्ये स्थाप्या, अभितस्तिस्रस्तिस्रः पूर्वोक्ताः क्रमोत्क्रमेण । एवं मण्डलक्षेत्रे अष्टाशीतिशतमिष्टका भवन्ति । ततोऽपरप्रथेर्मध्यास्तिस्र उद्धृत्य त्सर्वग्रे निदध्यात् । त्सरुशेषे द्वादश दीर्घेष्टकाः । द्विशत. प्रस्तार । एवमेवापरः प्रस्तारः । चतुरस्रस्रक्त्यस्तु महादिक्षु भवन्ति । त्सरुणस्त्वग्ये द्वे करणे । तत्रैकस्य तिलोने षड्विंशत्यङ्गुले तिर्यक्फलके । चत्वारिंशदङ्गुले अयशी पार्श्वे । एकाक्ष्णयारज्जुस्त्रिचत्वारिंशदङ्गुला षट्तिलयुक्ता । अन्या त्वेकपञ्चाशदङ्गुला सदशतिला । एकं पार्श्वफलकं धनुरिव तक्षेत् । स चतुस्तिलाङ्गुलिश्शरः । अन्यदपि पार्श्वमेवमेव । अन्तश्चाप तु भवति यथैवमिष्टकारूपं, एता इष्टकाः त्सरुपार्श्वयोश्चतस्रश्चतस्र उदगायताः । अथान्यत्तिलोनषड्विंशकं समचतुरस्रं तस्यैकं तिर्यक्फलं धनुरिव तक्षेत् यथा षोडशतिलाश्शरो भवति । एवमेवान्यत्तिर्यक्फलकं, अन्तश्चावी तु भवति । यथैवमिष्टकाः त्सरुमध्ये एताश्चतस्रः प्रस्तारो द्विशतः ।

व्यत्यास चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् ॥

इति त्रयोदशः खण्डः

1. चतुस्तिलोनाङ्गुलिश्शरः । 2. एकोनचत्वारिंशदङ्गुले तिलोने पञ्चत्रिंशके ।

# अथ चतुर्दशः खण्डः

समूह्यं चिन्वीत पशुकाम इति विज्ञायते ॥ (1)

समूहन्नेवेष्टका[1] उपदधाति ॥ (2)

दिक्षु चात्वाला भवन्ति ॥ (3)

तेभ्यः पुरीषमभ्युदूहतीति विज्ञायते ॥ (4)

**Kapardi (Sutra 1. 2. 3 and 4)**

समूह्य इत्युपधानप्रकारविशेषो नाकृतिविशेष । प्रकृतावेवाय विधि नाकृतिविकारेषु । अग्निक्षेत्रस्य परित इष्टका स्थापयित्वा यथा समूहन क्रियते तथोपदधाति सर्वत्र उपादायोपदधातीति यावत् । स एवोपधानविधि - प्रतिदिश चात्वाला भवन्ति बहिर्वेदि । तेभ्यश्चात्वालेभ्य पुरीष पासूनभ्यु- दूहतीति' श्रुति ।

परिचाय्य चिन्वीत ग्रामकाम इति विज्ञायते ॥ (5)

**Kapardi (Sutra 5)**

अयमप्युपधानविधि ।

मध्यमा स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति ॥ (6)

स परिचाय्यः ॥ (7)

**Kapardi (Sutra 6 and 7)**

तृतीयस्या चितौ स्वयमातृण्णामुपधाय इष्टकागण. प्रदक्षिण ता स्वयमातृण्णां परित उपदधाति । स परिचाय्य ।

उपचाय्य चिन्वीत ग्रामकाम इति विज्ञायते ॥ (8)

परिचाय्येनोक्त ॥ (9)

**Kapardi (Sutra 8 and 9)**

पूर्ववत्परिचाय्येन व्यत्यास [2] ।

---

1 समूहन्निवेष्टका

2 व्याख्यान ।

**Karavinda** (Sutra 1)

समूहनमत्र गुणो नाकृतिविशेष । तमेतमग्निं चिन्वीत पशुकाम । समूह्यशब्दस्य प्रवृत्तिनिमित्तमाह—

**Karavinda** (Sutra 2)

समूहन्निव उपधान इति परितोऽग्निक्षेत्रमिष्टकास्स्थापयित्वा समूहन्—सम्पादयन्निव यथा यथा बाह्याभ्यन्तरा इष्टका उन्नता भवेयु तथा तथोपदध्यात् । अयमर्थ —यथा सर्वमग्निक्षेत्रमन्तरन उन्नत बहिर्निनत भवति तथा पुरीषेण कृत्वा तत्रेष्टका उपधाय सपुरीषाभि क्षेत्रपूरण कुर्यादिति ॥

**Karavinda** (Sutra 3 and 4)

दिक्षु चतसृष्वपि चात्वाला । पुरीषाणा बाहुल्याच्चात्वालबाहुलघ दिक्ष्वेकैक चात्वाल शम्यया विमाय काल एव प्रकृतिवदुत्तरवेदिपु ववयति । तेभ्य सर्वेभ्य पुरीषाण्यादाय चितिमभ्यूहयेदिति । प्रकृतान्येव विमानकरणोपधानानि ॥

**Karavinda** (Sutra 5)

परिचयनमत्र गुण श्रुत्यर्थं व्याचष्टे –

**Karavinda** (Sutra 6 and 7)

तृतीयस्या चितावाक्रमणादिस्वयमातृण्णान्तमुपधाय हिरण्येष्टकाभिर्गणे प्रदक्षिणं प्रदक्षिण स्वयमातृण्णा परिचिनुयात् । प्राकृताना स्थानाना बाधक परिचयनम् । एष द्विशत ।

**Karavinda** (Sutra 8and 9)

उपचयनमपि गुण । उपचयन समीपे चयनम् । तान्येव विमानकरणोपधान नि । सर्व परिचाय्यवत् । अय भेद —आद्यस्य वहिरारभ्य स्वयमातृण्णासमीपे समाप्ति । द्वितीयस्य स्वयमातृण्णासमीप आरभ्य बहिस्समाप्ति ।

**Sundararaja** (Sutra 1 and 2)

अग्निक्षेत्र परित इष्टकास्स्थापयित्वा समूहन् एकत्र राशीकुर्वन्निवोपदधाति ।

**Sundararaja** (Sutra 3, 4, 5, 6 and 7)

स्वयमातृण्णामुपधायान्यास्सर्वा इष्टकास्स्वयमातृण्णां परित उपदधाति। न तु प्राचो प्रतोचोरित्यादयो विशेषा । पूर्व. पूर्वो गणस्स्वयमातृण्णामसमीपे। ततस्ततो बहिरुत्तरस्तर । अनयोस्समूह्यपरिचाय्ययो ) प्रकृतिवदेव रूप इष्टकाश्च विशेषावचनात् । अथवा समूहस्य परितस्स्थत्वा समूहने क्रियमाणे मण्डलरूप इष्टकाचयो भवतीत्यर्थान्मण्डलरूपत्वमग्नेर्भवति। परिचाय्यस्यापि स्वयमातृण्णापरिचयन मण्डलरूप एवाग्नावुपपद्यते इति अर्थादेव मण्डलरूपत्वम् । तथा च बोधायन —समूह्यपरिचाय्यौ पूर्वेण रथचक्रचिता व्याख्याताविति ।

**Sundararaja** (Sutra 8 and 9)

पूर्वस्यैवेद शाखान्तरीय संज्ञान्तरमित्यर्थं ।

**श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति विज्ञायते ॥ (10)**

**Kapardi** (Sutra 10)

पितृलोके ऋध्यासमिति य. कामयेत स एव चिनुयात् ।

**द्वयानि खलु श्मशानानि चतुरस्राणि परिमण्डलानि च ॥ (11)**

**तत्र यथाकामी शब्दार्थस्य विशयित्वात् ॥ (12)**

**चतुरस्रं वा यस्य गुणशास्त्रम् ॥ (13)**

**स चतुरस्रः ॥ (14)**

**रसरथवर्जं द्रोणचितोक्तः ॥ (15)**

**Kapardi** (Sutra 11, 12, 13 14 and 15)

चतुरस्राकाराणि सन्ति श्मशानानि परिमण्डलकाराणि च। तत्रेच्छात प्रवृत्ति शब्दस्योभयप्रवृत्ते । यदि वर्तुलाकार रथचक्रवद्। चतुरस्र चेति गतमेतद् ॥ यस्य गुणशास्त्र पितृलोकसम्बद्धं तच्चतुरस्रे श्मशाने न वर्तुले । खाला हि तत्र निक्षिप्यन्ते । येषु पंतृमेधिकक्रिया तेषां पितृणां मध्यन्य ऋध्या च । तस्माच्चतुरस्र एव चेतव्य. यदि चतुरस्रस्तदा रसरथवर्जं द्रोणचितोक्त —तस्मवं द्रोणचित्येव व्याख्यातम् ॥

**छन्दश्चितं चिन्वीत पशुकाम इति विज्ञायते ॥ (16)**

**Kapardi (Sutra 16)**

छन्दोभिरेव यत्रेष्टकाश्चीयन्ते स छन्दश्चित पशुकामश्चिनुयादित्यस्याः श्रुतेरर्थं श्रुतिद्वयेन व्याचष्टे—

सर्वैश्छन्दोभिश्चिनुयादित्येकम् ।। (17)

प्राकृतै रित्यपरम् ।। (18)

**Kapardi (Sutra 17 and 18)**

सर्वैश्छन्दोभिर्दाशतयीभिश्चेतव्य इत्येका श्रुति । प्राकृतै.—प्रकृतौ *यानि छन्दांसि अग्निमूर्धेत्यादीनि तैरेवेत्यपरा श्रुति.* ।

**Karavinda (Sutra 10)**

श्मशानमिव चिन्वीत पितृलोके वृद्धि कामयमान ।

**Karavinda (Sutra 11 and 12)**

गत । अन्यचायतनप्रकाररूपाणि द्वयान्यपि श्मशानानि लोके दृश्यन्ते चतुरस्राणि परिमण्डलानि च ।

**Karavinda (Sutra 13 and 14)**

प्रकृतित्वाच्चतुरस्रमेव चिन्वीत न मण्डलमिति समास उक्त । श्मशानानि द्रोणचितेतिवत् कर्तव्यानि । त्सरु वर्जयेदन्यत्सर्वं द्रोणवत् विमानानि । द्वादशभागीया अध्यर्धा अर्धा. पादाश्च द्वादशभागीयास्सप्तविंशतिरङ्गुलय त्रयोदशतिलाश्च । अध्यर्धा एकतस्तादृशा. अन्यत एकचत्वारिंशदङ्गुलय त्रयश्च तिला. अर्धा पादा एकतो द्वादशभागीयासदृशा अन्यतस्तदर्धा । पादा एकतो द्वादशभागीयासदृशा अन्यतो नवाङ्गुलय साधिकाश्चत्वारस्तिलाश्च । उपधाने प्रथमप्रस्तारे पुरस्तात् । पश्चाच्चाध्यर्धा चतुरस्राभि प्रच्छादन । पादाभिरर्धाभिश्च सङ्ख्यापूरण । द्वितीये दक्षिणत उत्तरतश्चाध्यर्धाभिश्चतुरस्राभि प्रच्छादनादि पूर्ववत् ।

**Karavinda (Sutra 16)**

छन्दोभि ऋग्भिश्चीयते इति च्छन्दश्चित् एतावानेव विशेष । अन्यत् सर्वं प्रकृतिरेव ।।

**Karavind (Sutra 17)**

सर्वेदशतयीगतैश्छन्दोभिश्चिनुयात् । तानि सहस्रधा विभज्य तेषामेकैकेन भागेनैकैकामिष्टकामुपदध्यात् । यजुषा स्थाने छन्दांसि भवेयु ।

तत्र यावत्यः यजुष्मत्यः इष्टकाः तावत्यश्छन्दांसि विभज्य लेपामेकैकेन विभागेनैकैकामिष्टकां यजुष्मतीरुपदध्यात् । लोकम्पृणास्तु पूर्ववदेव । अथवा दशतयीगतैस्सर्वैश्छन्दोभिर्गायत्रीभिस्त्रिष्टुभिर्जगतीभिरनुष्टुभिर्बृहतीभिरुष्णिग्भिः पंक्तिभिरक्षरपंक्तिभिर्विपुरूपाभिस्त्रेधा विभक्ताभिरतिच्छन्दोभिस्त्रिधा विभक्तैसर्वाभिर्द्विपदाभिश्च पुरस्तादारभ्य याज्ञसेनीभिरुपदध्यात् ॥

Karavinda (Sutra 18)

प्राकृतै. अग्निकाण्डगतै. अग्निमूर्धेत्यनुवाकस्थैर्गायत्र्यादिभिः न दशतयीभिरित्यपरम् । नास्मात्पर विभज्यत इति सिद्धान्तितम् ।

तत्र श्लोका :—

एकैकवृद्धा एकैकधा ह्यग्नयः क्रमश एकशतम् ।
पटले तृतीय उदितास्तेषां भेदाश्चतुर्धादौ ॥
प्रकृतिस्त्वयह्लीनामेकविधा वाथ सप्तविधाः ।
एकविधप्रकृतित्वे तदा पण्णां न पक्षपुच्छानि ॥
सप्तविधप्रकृतित्वे भवति च तेषां सपक्षपुच्छत्वम् ।
सप्तविधप्रभृतीनां सैव भवेत्प्रकृतिरेकशतविधात् ॥
करणीनां द्वादशांशैः तैरुक्तांशयुतायुतैः ।
पृथगुत्पन्नरूपाभिरिष्टकाभिस्त्रिधोपधे: ॥
अथैकविधादीनां चातुर्विध्यं सपक्षतः ।

तत्र सर्वाभावात् षोडशेष्टका हीयन्ते । अतोऽग्निमध्ये द्वे उद्धृत्याष्टादश-नवम्यो निधेयाः । द्विशतः प्रस्तारः । एवमेषापरः । प्राच्युदीच्योस्तु विपर्यासः । मण्डले श्मशानचिद्रथचक्रचिता व्याख्यातः ।

**Sundararaja (Sutra 16)**

छन्दोभिश्चीयत इति छन्दश्चित् । छान्दसः करण उपपदे क्विप् । अन्यत्र कर्मण्यग्न्याख्यायामिति ।

**Sundararaja (Sutra 17 and 18)**

तत्र सर्वैर्गायत्र्यादिभिश्चतुरुत्तरैः अतिधृतिपर्यन्तैः चतुर्दशभिरुत्कृतिपर्यन्तैर्वैकविंशत्या त्रिवृत्ककुभादिविशेषयुक्तैर्दाशतयीभ्य आहृतैश्छन्दोभिः सर्वा इष्टकाश्चिनुयादित्येकं मतम् । प्राकृतैरग्निमूर्धेत्यनुवाकाधीतैर्याज्ञसेन्यर्थः पुनः पुनरभ्यस्तैरित्यपरं मतम् । अस्याग्नेः प्रकृतिवदेव रूपं । केचित्तु वयसां वा एष प्रतिमयेत्यस्यापि नित्यत्वाद्वयस आकारमपीच्छन्ति । यथाह—बोधायनः—तस्य रूपं श्येनाकृतिर्भवतीति ॥

इति चतुर्दशः खण्डः

इति चतुर्थः पटलः ॥

# पंचमः पटलः

## अथ पञ्चदशः खण्डः

श्येनचितं चिन्वीत सुवर्गकाम इति विज्ञायते ॥ (1)

वक्रपक्षो व्यस्तपुच्छो भवति ॥ (2)

**Kapardi (Sutra 1 and 2)**

श्येन इव चेतव्यः श्येनचित् तदाकारं चिन्वीत । आकृत्याः फलमाकारसम्पादनं स्वयमेव वक्ष्यति । अनृजुपक्षः व्यस्तपुच्छोऽसङ्कोचितपुच्छः । कथं वक्रता ? —

पश्चात् प्राङुदूहति ॥ (3)

पुरस्तात् प्रत्यङ्ङुदूहति ॥ (4)

एवमिव हि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते ॥ (5)

**Kapardi (Sutra 4 and 5)**

उन्नयति पुरस्तात्प्रत्यङ्ङुन्नयति । एवमेव वक्राः पक्षा यस्य स वक्रपक्षः । हिशब्दः प्रसिद्धौ । एवमिव—एवमेव वयसामुत्पततां मध्ये पक्ष-निर्णामो नमनं भवतीति श्रुतिः ॥

यावानग्निस्सारत्निप्रादेशस्सप्तविधस्संपद्यते ॥ (6)

प्रादेशं चतुर्थमात्मनश्चतुर्भागीयाश्चाष्टौ, तासां तिस्रश्शिरः ॥ (7)

इतरत्पक्षयोर्विभजेत् ॥ (8)

**Kapardi (Sutra 6, 7 and 8)**

अरत्निना प्रादेशेन च वर्धितोऽग्निः प्राकृतो यावान् संपद्यते[1] प्रादेश इति गृह्णीयादिति शेषः । सारत्निप्रादेशाग्नौ यत्प्रादेशं पुच्छे आत्मनि चतुर्थं

1 संपद्ये । तथा प्रादेशे ह्येतात्याप्तौ प्रादेश इति ।

पुरुषक्षेत्रं चतुर्भागीयाश्चाष्टौ शिष्टे पुरुषे ऽष्टौ[1] चतुर्भागीया. क्षेत्र च गृहीत्वा तासां चतुर्भागीयानां तिस्रश्चतुर्भागीयाश्शिरसि निधातव्या - इतरस्सर्वं पक्षयोर्विभज्य क्षिपेत् । षडङ्गुलमात्रं प्रादेशे । षष्ट्यङ्गुल पुरुषे । चतुर्भागीयासु पञ्चसु पादोन नवदशाङ्गुलम् । एतदेवैककस्मिन् पक्षे क्षिपेत् ।

पञ्चारत्निः पुरुषः ॥ (9)

चतुररत्नि व्यायाम. ॥ (10)

चतुर्विंशत्यङ्गुलयोऽरत्निः ॥ (11)

तदर्धं प्रादेश इति क्लृप्तिः ॥ (12)

**Kapardi (Sutra 9 10 11 and 12)**

पञ्चेति—एतत्पुरुषस्य प्रमाणम् । चतुरिति—एतदरत्निप्रमाणम् । क्लृप्ति' – एव कल्पना । इतिशब्द. प्रकारे । अनेन मार्गेण कल्पयेदित्यर्थः । त्रिंशदङ्गुल चतुर्भागीयम् ।

**Karavinda (Sutra 1)**

श्येन —पक्षिविशेष' । तदाकारमग्निं चिन्वीत स्वर्गकाम । वयसा वा एष प्रतिमा चीयते इति वयोमात्रसदृश प्राकृतोऽग्निः । अयं तु श्येनसदृशः । कीदृशः श्येन इत्याह—

**Karavinda (Sutra 2 3, 4 and 5)**

वक्रो—अनृजू यस्य स वक्रपक्षः । व्यस्त विस्तीर्णं पुच्छ यस्य मूलादारभ्य उपर्युपरि विस्तीर्णं सः । पश्चात् प्राङ्दूहतीति उदूहनमुन्नयन प्रथमपक्षार्धं मूलादारभ्य पश्चात्प्रभृति प्रागुन्नयेत् । पुरस्तात्प्रत्यङ्ङुदूहति । द्वय पक्षार्धं मध्यादारभ्य पुरस्तात् प्रभृति प्रत्यगुन्नयेत् । एवमिवहीति निपातसमुदाय प्रसिद्धौ । वयसां मध्ये—श्येनाना पक्षयोर्मध्ये । निर्णाम — निर्णमन निर्गत्य प्रह्वीभाव । विज्ञायते–श्रूयते दृश्यते वा । पक्षनिर्णाम इति वचनसामर्थ्यात् पक्षयोर्मध्य इति गम्यते । यद्वा वयसा पक्षिणां मध्ये श्येनानां पक्षयोर्मध्ये निर्णाम दृश्यते – पक्षिणा दृश्यते इति ॥

**Karavinda (Sutra 6 7 and 8)**

प्राकृतमग्निमात्मपक्षपुच्छशिरस्सु विभजेत् । कान् विभागानित्याह— पुच्छात् प्रादेशमात्रमात्मनश्चतुष्पुरुषादेकपुरुषक्षेत्रम (ष्टौ) ष्टादशचतु-

1 त्रिपुरुषेऽष्टौ ।

भागीया यावति क्षेत्रे उपधीयन्ते तावच्चात्मक्षेत्रेन सगृह्य तासा चतुर्भागीयाना तिस्रो (ग्ने ) अग्रे शिर कुर्यात्-अवशिष्टपञ्चदश (विंशति) चतुर्भागीया पुरुष प्रादेशश्च प्राकृतयो अध्यरत्निपुरुषयोः पक्षयोर्विभजेत्--क्षिपेदित्यर्थ । एव सत्यर्धदशमा अरत्नयश्चतुर्भागोनाङ्गुलिश्चैकैक पक्ष । अर्धतृतीयपुरुष आत्मा । पुरुषमात्र पुच्छम् । तिस्रश्चतुर्भागीयाश्शिर ॥

Karavinda (Sutra 9 10 11 and 12)

'पञ्चारत्निरग्नी पुरुष । यावान् पुरुष ऊर्ध्वबाहुस्तावान् भवतीति पुरुषप्रमाणविशेषविधे । अन्यत्र चतुररत्नि । चतुर्विंशतिरङ्गुलयोऽरत्नि । तदर्धं प्रादेश । स च द्वादशाङ्गुल । क्लृप्ति अचार्यस्य समय ॥

Sundararaja (Sutra 1)

तैत्तिरीयके काम्यप्रकरणे पठितोऽप्यय श्येनचित् नित्य एव स्वर्गफलकत्वात् चतुरस्राग्निवत्तस्यापि स्वर्गफलकत्व । 'सुवर्गाय वा एष लोकाय चीयते । यदग्नि' इति लिङ्गानि चात्र प्रागेव दर्शितानि ।

Sundararaja (Sutra 2 3 4 and 5)

श्रुत्यन्तरमिद श्येनचिद्वाक्यस्य शेषभूतम् । तत्र वक्रता पक्षमध्ये । व्यास पुच्छाग्रे । पक्षयोर्वक्रीकरणप्रकारमपि श्रुतिरेवाह—

पश्चात्प्राडुदूहति पक्षमध्ये । पुरस्तात्प्रत्युदुदूहति पक्षाग्राप्ययो ।

एवमिव हि वयसा पक्षस्य मध्ये मध्येपक्ष निर्णामो वक्रता । मध्येपक्षनिर्णाम —वयसामुत्पतता पक्षमध्ये निर्णाम एवमिव हि दृश्यत इत्यर्थ ।

Sundararaja ((Sutra 6)

सारत्निप्रादेशश्चतुरस्रोऽग्निर्यावान् सम्पद्यते तावानेवाय श्येनचिद् भवति । सारत्निप्रादेशग्रहणस्य प्रयोजनमुक्तमेव ।

Sundararaja (Sutra 7)

आदधीतेति शेष । पुच्छे पुरुषादधिक प्रादेशमात्मनश्चतुर्थं पुरुष चतुर्भागीयाश्चाष्टौ आत्मन एवादधीत । शिष्ट आत्मा । अर्धतृतीय पुरुष । पुच्छ पुरुषप्रमाण (मात्र) मेव ।

तासा तिस्रश्चतुर्भागीया. शिर प्रकल्पयेत् ।

Sundararaja (Sutra 8)

पुच्छादात्मनश्चात्र शेष द्वेधा विभज्य पक्षयोनिदध्यात् । एकैकस्मिन्

पक्षे प्रादेशार्धं षडङ्गुल आत्मचतुर्थादर्धं षष्टिरङ्गुलयः। पञ्चानां चतुर्भागीयानां मध्ये पुरुषायामे पक्षे न्यस्ते पादोना एकान्नत्रिंशतिरङ्गुलयः प्राकृत: पक्ष:। चतुश्चत्वारिंशदधिकशताङ्गुलयः। एभिः सहित. पादोनैकान्नत्रिंशच्छतद्वयाङ्गुलः सम्पद्यते । तदेतद्वक्ष्यति अर्धदशमा अरत्नय इत्यादि।

Sundararaja (Sutra 9, 10 11 and 12)

सार्वत्रिकी चैषा क्लृप्तिः।

*अर्धदशमा अरत्नयोऽङ्गुलयश्च चतुर्भागोनाः पक्षायामः ॥ (13)*

Kapardi (Sutra 13)

प्रादेशदशमा अरत्नयोऽङ्गुलयश्च चतुर्भागोनाः पक्षायामः—पक्षयोरायाम.। प्राकृताः षडरत्नयः अर्धपुरुषे प्रादेशसहितारत्निद्वयमष्टादशाङ्गुलाश्चतुर्भागोनाश्च प्रादेशे षडङ्गुलाः। ता अष्टादशभिस्सहारत्निः सर्वं सम्भूयार्धदशमा अरत्नयोऽङ्गुलाश्च चतुर्भागोनाः। एष पक्षयोरायामः।

द्विपुरुषां रज्जुमुभयतः पाशां करोति ॥ (14)

मध्ये लक्षणम् ॥ (15)

पक्षस्यापरयोः कोट्योरन्तौ नियम्य लक्षणेन प्राचीनमायच्छेदेव पुरस्तात् ॥ (16)

स निर्णामः[1] ॥ (17)

एतेनोत्तरः पक्षो व्याख्यातः ॥ (18)

Kapardi (Sutra 14 15 16 17 and 18 )

द्विपुरुषप्रमाणां रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं कुर्यादिति शेष[2]। अनेनैव मार्गेणोत्तरस्यापि पक्षस्य नमन व्याख्यातम्। एषा पक्षयोर्वक्रता। ॥ ७ ॥

1 सन्नाम (पुरस्तात्सन्नाम)-17th and 18th form one Sutra

2 After शेष read

दक्षिणस्य पक्षस्यापरयो कोट्योरपरयोरन्तौ नियम्य पाशौ प्रतिमुच्य लक्षणेन प्रागपसार्य शङ्कू निहन्यात्। एव पुरस्तात् पूर्वयो कोट्योरन्तौ नियम्येत्येवमादि। स निर्णामोनमन पक्षयो ।

आत्मा द्विपुरुषायामोऽध्यर्धपुरुषव्यासः ॥ (19)

पुच्छेऽर्धपुरुषव्यासं पुरुषं प्रतीचीनमायच्छेत् ॥ (20)

तस्य दक्षिणतोऽन्यमुत्तरतश्च ॥ (21)

**Kapardi (Sutra 19, 20 and 21)**

द्विपुरुषायाम आत्मा अध्यर्धपुरुषव्यासः । एवं दीर्घचतुरस्रं विहृत्य पुच्छस्थानेऽर्धपुरुषा तिर्यङ्मानी पुरुषप्रमाणा पार्श्वमानी भवति यथा तथा यच्छेत्—कुर्यादित्यर्थः । तस्य चतुरस्रस्य दक्षिणपार्श्वेऽन्यं तादृग्विधं चतुरस्रमुत्तरतश्चान्यम्[1] । एवं त्रीणि चतुरस्राणि अर्धपुरुषव्यासानि ।

तावक्ष्णया व्यवलिखेत्[2] ॥ (22)

यथाऽर्धपुरुषोऽप्यये स्यात्[3] ॥ (23)

शिरस्यर्धपुरुषेण चतुरस्रं कृत्वा पूर्वस्याः करण्या अर्धात्तावति दक्षिणयोर्निपातयेत्[4] ॥ (24)

**Kapardi (Sutra 22, 23 and 24)**

तौ चतुरस्रौ यौ पार्श्वस्थौ । तावक्ष्णया कर्णेन आलिखेत्; यथाऽप्यये आत्मपुच्छसन्धौ अर्धपुरुषमात्र कृत पूर्वस्य भवति । प्राच्यमिव दक्षिणं प्राच्यमिवोत्तरम् । एव कृतेऽप्ययेऽर्धपुरुषमात्र भवति । शिरस्स्थानेऽर्धपुरुषप्रमाणेन चतुरस्र[5] कृत्वा पूर्वस्या. करण्या अर्धादारभ्य तावत्येवार्धे मध्ये निपातयेत्-आलिखेत् । तिस्र. परिशिष्यन्त इत्युपरितने वक्ष्यति । अत्रापि तिस्रः शिरसीत्युक्तम् ।

---

1. तादृग्विध चतुरस्र एवमुत्तरतश्चान्यम् ।

2-3. ताव+स्यात्

तौ चतुरस्रौ यौ पार्श्वस्थौ । तावक्ष्णयाकर्णेनालिखेत् । यथाऽप्यये आत्मसन्धौ अर्धपुरुषमात्र कृत पूर्वस्य भवति । स्रुच्यमिव दक्षिणमसमेवमिवोत्तरं । एव कृतेऽप्यये अर्धपुरुषमात्र भवति ।

4. शिरस्य+तयेत्

शिरस्स्थानेऽर्धपुरुषप्रमाणेन चतुरस्र कृत्वा तस्या करण्या अर्धादारभ्य तावत्येवार्धे मध्ये निपातयेत् । "तिस्र परिशिष्यन्ते" इत्युपरितने वक्ष्यति । तत्रापि त्रिस्रश्शिर इत्युक्तम् ।

5 शिरस्यर्धपुरुषेण चतुरस्र ।

**Karavinda (Sutra 13)**

अपरेण यूपावटदेशं संचरमवशिष्येत्यादि विमाय पक्षाप्ययेषु शङ्कुं निहत्य दक्षिणोत्तरया रज्ज्वा नवारत्नीन् प्रादेशमङ्गुल चपुर्भागोनां चायामं कृत्वा पक्षाग्रेषु शङ्कुं निहन्यात् । एवमेकादशभिरङ्गुलीभि. प्रादेशेन च पुरुषो हीयते । तत्राधर्ष्टमाभिरङ्गुलीभिरेका चतुर्भागीया भवति । तदर्धेनार्धद्विपुरुषायामां रज्जुमुभयत: पाशां कृत्वा मध्ये लक्षणं कृत्वा पक्षस्यापरकोटिशङ्क्वो: प्रतिमुच्य लक्षणेन प्राचीमपसार्य शङ्कुं निहन्यात् । एवं तस्यैव पूर्वयो: कोटयो. प्रतिमुच्य लक्षणेन प्रतीचीमपसार्य तत्र शङ्कु: । एवं कृते पश्चिमपार्श्वमान्या: पुरस्तात् पक्षमध्ये चतुर्विंशत्यङ्गुले सार्धसप्ततिले लक्षणं निपतति पुरतश्चैव । स निर्णाम:—निर्णमनं पक्षस्य । अर्धदशमा इत्यादि स निर्णाम इत्यन्तेनोत्तरमपि पक्षं कुर्यात् ॥

**Karavinda (Sutra 19)**

आत्मान प्राक्त्वेन द्विपुरुषायाममुदक्त्वेनाध्यर्धपुरुषमनुपृष्ठ्य मिनुयात् ।

**Karavinda (Sutra 20, 21, 22 and 23)**

पुच्छे पुरुषायामानि तदर्धविस्तराणि प्रत्यगायतानि त्रीणि चतुरस्राणि दक्षिणोत्तराणि विहृत्य दक्षिण चतुरस्रं दक्षिणापरकोटिं प्रत्यक्षणयालिखेत् । एवमुत्तरापरकोटिं प्रति । एव कृते पुच्छमूलेऽधपुरुषाविस्तारमग्र ऽध्यर्धपुरुषविस्तार पुरुषमात्रायाम चतुरस्र भवति ॥

**Karavinda (Sutra 24)**

आत्मन: पूर्वकरणीमध्ये पुच्छवदर्धायामविस्तार चतुरस्र कृत्वा तत्पूर्वकरणीमध्याद्दक्षिणोत्तरकरण्योर्मध्ये रेखा निपातयेत्-रेखयोर्बहिस्त्यजेत् ॥

**Sundararaja (Sutra 13)**

व्यास. पुरुषमात्र एव । अथ तस्य निर्णाम.—

**Sundararaja (Sutra 14, 15, 16, and 17)**

कोटयोरग्राप्यययोरेव पुरस्तात्पूर्वयो. कोटयोरन्तो नियम्य यत्पश्चादपच्छिद्यते तत्पुरतादागच्छति ।

**Sundararaja (Sutra 18 and 19)**

एवमेवात्मनि त्रय: पुरुषा स्थिता: ।

**Sundararaja (Sutra 20, 21, 22 23 and 24)**

आत्मन: पुरस्ताच्छिर: ।

इति पञ्चदश. खण्ड.

# अथ षोडशः खण्डः

अप्ययान् प्रति श्रोण्यसानपच्छिन्द्यात् ॥ (1)

**Kapardi (Sutra 1)**

अप्ययशब्देन पक्षपुच्छशिरसा सन्धिरुक्त । तान्प्रत्यपच्छिन्द्यात्—श्रोण्यसात्त्यजेत् । शिरसोऽप्ययादारभ्य पक्षाप्यय प्रति । एव श्रोण्योरसे च । एव द्वे द्व चतुर्भागीये निरस्ते भवत । वक्ष्यति चत्वारिंशत्परिशिष्यन्तइति ॥

एवमिव हि श्येन ॥ (2)

**Kapardi (Sutra 2)**

प्रसिद्धः । वक्ष्यति च 'यावदाम्नानसारूप्यम्' इति ।

करण पुरुषस्य पञ्चमायामं षष्ठव्यास कारयेत् ॥ (3)

यथायोगनतम् ॥ (4)

तत्प्रथमम् ॥ (5)

**Kapardi (Sutra 3 4 and 5)**

पुरुषपञ्चमायाम पुरुषषष्ठव्यास—अरत्निमात्रो पार्श्वमानो षड्भागा तिर्यङ्मानी यथा युज्यते तथा नतः, नतशब्देन प्रजम्भनमुच्यते । तथा प्रजम्भयेत् । एकामक्षणयादीर्घां[1] कुर्यात् । यथा युज्यत इति यथायोग. । तत्प्रथम करणम् । प्रथममित्यस्य सज्ञा ।

ते द्वे प्राची सहिते ॥ (6)

तद् द्वितीयम् ॥ (7)

**Kapardi (Sutra 5 and 6)**

ते द्वे विपर्यस्ते उपसृत्य मध्यमफलके ससृष्टे यथा तिष्ठत तथाविध करण द्वितीयम् ।

प्रथमस्य षड्भागमष्टभागेन वर्धयेत् ॥ (8)

---

1 एकामक्षदीर्घं—B

यथायोगनतम् ।। (9)

तत् तृतीयम् ।। (10)

**Kapardi (Sutra 8 9 10)**

प्रथमस्य षड्भागकरणमष्टभागेन वर्धयेद्दीर्घं कुर्यात् । मात्रा ? तमक्ष्णया छिन्द्यात् । छिन्ना यथा युज्यते नमन तथा योग । यथा पक्षनमने ऽप्यर्घं युज्यते तथा नत वक्र तृतीयकरणम् ।।

चतुर्भागीयाऽप्यर्धा ।। (11)

तस्याश्चतुर्भागीयामात्रमक्ष्णया छिन्द्यात् ।। (12)

तच्चतुर्थम् ।। (13)

**Kapardi (Sutra 11 12, and 13)**

चतुर्भागीयाप्यर्धं भूमावालिख्य चतुर्भागीया न त्यजेत् । तयाभूतेष्टका येन करणेन क्रियते तच्चतुर्थं करणम् । षोडशी चतुर्भिरिति वक्ष्यति । तदेतत्करणम् ।।

**Karavinda (Sutra 1 and 2)**

*अप्ययशब्देनात्मन पक्षपुच्छशिरसा सन्धिरुच्यते । शिरसोऽप्यया-दारभ्य आपक्षाप्ययात् पुच्छाप्ययादारभ्य आपक्षाप्ययात् । एवमिवहीति गतम् ।।*

***Karavinda (Sutra 3 4 and 5)***

पुरुषस्य पञ्चम चतुर्विंशतिरङ्गुलय एकत । अन्यतो विंशतिरङ्गुलय प्रथम करणम् । यथायोगनत भवेत्-उपधाने यथायुज्यते तथा कुर्यात् । नमन-प्रकारश्चोपरि [1]श्येने वक्ष्यते प्रथमादयश्शब्दा व्यवहारसौकर्याय ।।

***Karavinda (Sutra 6 and 7)***

प्रथमकरणे प्रागायते दक्षिणमेकमुत्तरमेकमिति सहिते चतुर्विंशत्य-ङ्गुले पार्श्वमान्यौ चत्वारिंशदङ्गुले तिर्यङ्मान्यौ । तयोरेकानमनविधिना मध्ये निर्णता एकपार्श्वे उन्नता । तद्द्वितीय करणम् ।

**Karavinda (Sutra 8, 9 and 10)**

प्रथमकरणस्य षड्भागो विंशत्यङ्गुलमष्टभागेन पञ्चदशाङ्गु-

---

1 नते C

लेन यथायोगनतेन वर्धयेत्, यथा षड्भागः पक्षानुरोधी वक्रस्स्यादष्टमभाग आत्मानुरूप ऋजुर्भवेत्तत्तृतीय करणम् ॥

**Karavinda (Sutra 11, 12 and 13)**

- चतुर्भागीयाऽणूकाख्या । साऽध्यर्धा कार्या । तस्याश्चतुर्भागीयामात्रमक्ष्णया मात्रमक्ष्णया छिन्द्यात् । एतदुक्तं भवति-पञ्चचत्वारिंशदङ्गुलायाम त्रिंशदङ्गुलव्यास कृत्वा त्रिंशदङ्गुलमक्ष्णया छिन्द्यात् । एवमेका पार्श्वमानी पञ्चचत्वारिंशदङ्गुलयः एका तिर्यङ्मानी त्रिंशदङ्गुलयः एकाऽक्ष्णया स्थिता द्विचत्वारिंशदङ्गुलयः चतुर्दश तिलाः । एतच्चतुर्थं करणम् ॥

**Sundaravaaja (Sutra 1)**

पक्षपुच्छशिरोऽप्ययेभ्यः अन्योन्यं प्रत्यक्ष्णया परिच्छिन्द्या ; । एवमात्मनोऽर्धपुरुषो निरस्तो भवति ॥

**Sundaraja (Sutra 2, 3, 4 and 5)**

चतुर्विंशत्यङ्गुल । पार्श्वफलकम् । विंशत्यङ्गुलं तिर्यक्फलकम् । यथायोगनत यथा युज्यते पक्षे तथा नतम् । तस्यैकाक्ष्णयारज्जु. पञ्चत्रिंशिका विंशतितिलयुक्ता । अपरा षड्विंशिका षट्तिलयुक्ता । एव कृते पक्षायामस्य द्वादशभाग. एकान्नविंशतिरङ्गुलयः तिलौ च इष्टकाव्यासो भवति । तदेतत्प्रथम करणम् । अरत्निप्रादेशरहितप्रकृतिके पक्षायामस्य त्रिंशदङ्गुलहानि । तदनुगुण चेष्टकानां नमन भवति । तत्र कर्णौ एकविंशकैकान्नत्रिंशकौ तिलत्रययुक्तौ ।

**Sunderaraja (Sutra 6 and 7)**

यथा पङ्क्ती भवति यथा संहिते ।

**Sundararaja (Sutra 8, 9 and 10)**

पञ्चदशाङ्गुलव्यास मरत्न्यायाम समकर्णं दीर्घचतुरस्र प्रागायतं भूमौ लिखित्वा प्रथमेन प्रागायतेन युञ्ज्यात्तत्तृतीयम् । ऋजुरवस्थितमेव प्रथमापेक्षया नतमित्युच्यते यथायोगनतमिति ।

**Sundararaja (Sutra 11, 12 and 13)**

एका पार्श्वमानी पञ्चदशाङ्गुला । अन्या पञ्चचत्वारिंशदङ्गुला । एका तिर्यङ्मानी त्रिंशदङ्गुला । अन्या द्विचत्वारिंशदङ्गुला सचतुर्दशतिला ।

चतुर्भागीयार्धं पञ्चमम् ॥ (14)

**Kapardi** (Sutra 14)

एकतस्त्रिंशदङ्गुलमन्यतः पञ्चदशाङ्गुल तत्पञ्चमम् ।

*तस्याक्ष्णया भेदष्षष्ठम् ॥ (15)*

**Kapardi** (Sutra 15)

तस्य पञ्चस्याक्ष्णया कर्णेन विभज्यत इति भेदष्षष्ठम् ।

पुरुषस्य पञ्चमभागं दशभागव्यास[1] प्रतीचीनमायच्छेत् ॥ (16)

तस्य दक्षिणतोऽन्यमुत्तरतश्च ॥ (17)

तावक्ष्णया दक्षिणावरयोः कोटयोरालिखेत् ॥ (18)

तत्सप्तमम् ॥ (19)

**Kapardi** (Sutra 16 17, 18 and 19)

अरत्निमात्रायाम प्रादेशव्यास प्रतीचीन प्रत्यगायतमायच्छेत् । भूमौ दक्षिणपार्श्वेऽन्य तथाविधमुत्तरतश्चान्य तथाविधम् । तावक्ष्णया कर्णेन दक्षिणावरयो कोटयोरारभ्य स्रुच्यवदालिखेत्[2] । तत्सप्तमम् ॥

एवमन्यत् ॥ (20)

उत्तर तत्तरस्या. कोटया लिखेत् ॥ (21)

तदष्टमम् ॥ (22)

**Kapardi** (Sutra 20, 21 and 22)

एवमेव कृत्वोत्तर चतुरस्रमुत्तरस्याः कोटया आरभ्य दक्षिणा कोटिं प्रत्यालिखेत् स्रौचवत्तदष्टमम् ।

चतुर्भागीयाक्ष्णयोभयतो भेदो नवमम् ॥ (23)

**Kapardi** (Sutra 23)

अक्ष्णया उभयत कर्णेन भेदन खण्डन तस्याश्चतुर्भागीयायास्तथाविध नवम करणम् । पादमात्र पादेष्टका त्रिभिरिति ॥

उपधाने षष्टिष्षष्टिः पक्षयो प्रथमा उदीचीर्नि(रुप) दध्यात् ॥ (24)

---

1 व्यास पुरुष प्रतीचीनमायच्छेत् ।

2 सूच्यवदालिखेत्—B

पुच्छपार्श्वयोरष्टावष्टौ ॥ (25)

षष्ठ्या ॥ (26)

तिस्रोऽग्रे तत एकान्ततस्तिस्रः तत एका ॥ (27)

पुच्छाप्यये चतुर्थ्यौ विशये ॥ (28)

तयोस्तु पश्चात्पञ्चम्यावनीकसहिते ॥ (29)

**Kapardı (Sutra 25, 26 27, 28 and 29)**

उपधानकाले एकस्मिन् पक्षे षष्टिः प्रथमा उदीचीरुदगायता निदध्यात्—उपदध्यात् त्रिंशत्त्रिंशद्विपर्यस्य कारिता । एवमुत्तरपक्षेऽपि । पुच्छस्य पार्श्वयोरुभयोष्षष्टच, अष्टावेकस्मिन् पार्श्वेऽपरस्मिश्चाष्टौ । कथमित्याह-पुच्छाग्र तिस्र. तासा पुरस्तादेकाम् । एवमुत्तरस्मिन्पार्श्वे विपर्यस्य कारिता । पुच्छे चात्मनि चस्यिते तिर्यक्—तयोश्चेति तयो. पश्चात्पुच्छे अनीकनीसहिते—मुखसहिते मेपयूथवत्[1] ।

**Karavinda (Sutra 14)**

त्रिंशदङ्गुलायाम पञ्चदशव्यास यत्तत्पञ्चम करणम् ॥

**Karavinda (Sutra 15)**

पञ्चमस्याक्ष्णया भेद कृत्वा षष्ठ करणं भवति सा पादेष्टका । तस्यैकस्त्रिंशदङ्गुलमन्यत् पञ्चदशाङ्गुलमन्यदक्ष्णया एकोनविंशतितिलाधिक त्रयस्त्रिंशदङ्गुलम् । एतत् षष्ठ करणम् ॥

**Karavinda (Sutra 17, 18 and 19)**

चतुर्विंशत्यङ्गुलायाम तदर्धविस्तार चतुरस्र कृत्वा तस्य दक्षिणत उत्तरतश्च तादृशे चतुरस्रे । एवं त्रीणि चतुरस्राणि कृत्वा दक्षिणोत्तरचतुरस्रे दक्षिणापरकोटी प्रत्यालिखेत् । एव पार्श्वमान्यौ षड्विंशत्यङ्गुले अष्टाविंशतितिलाधिके । तिर्यङ्मान्यौ चतुर्विंशत्यङ्गुले । एतत्सप्तम करणम् ॥

**Karavinda (Sutra 20 21 and 22)**

सप्तमवत्त्रीणि चतुरस्राणि कृत्वा दक्षिण दक्षिणापरकोटिं प्रत्यालिखेदुत्तरमुत्तरापरकोटिं प्रति । एवमपि ते एव पार्श्वमान्यौ पूर्वं पार्श्वं द्वादशाङ्गुल पश्चिम तु षट्त्रिंशदङ्गुल । यदेवं तदष्टम करणम् ॥

1. मेषयुद्धवत् ।

**Karavinda** (Sutra 23)

चतुर्भागीयाया उभयतो भेदोऽक्ष्णया भवेत्। इयमपि पादेष्टका। पार्श्वमान्यो अक्ष्णया एकविंशत्यङ्गुले सप्ततिलसहिते तिर्यगेकं त्रिंशदङ्गुलम्। एवं नवमं करणम्।

अथोपधानमुच्यते—

**Karavinda** (Sutra 24)

उपधानकाले दक्षिणे पक्षे षष्टिः प्रथमा उदीचीर्निदध्यात्। उत्तरे च षष्टिम्। छान्दसो विभक्तिव्यत्ययः।

**Karavinda** (Sutra 25 and 26)

पष्ठकरणोत्पन्ना अष्टावष्टौ पुच्छपार्श्वयोः।

उपधानप्रकारमाह—

**Karavinda** (Sutra 27)

पुच्छपार्श्वयोरित्येव। तिस्रोऽग्रे पुच्छस्य दक्षिणश्रोण्यामेका प्राची बाह्यविशेषा। तस्या उत्तरतो द्वे नानाग्रे विशेषसहिते। तयोः पुरस्तादेका बाह्यविशेषा प्रागग्रा। तस्याः पुरस्तात्पूर्ववत्तिस्रः। तासां पुरस्तात् पूर्ववदेका। एवमुदक्पार्श्वेऽपि॥

**Karavinda** (Sutra 28)

पुच्छात्मसन्धौ द्वे चतुर्थ्यौ विलये। अविशेषादात्मनि पुच्छे च समे॥

**Karavinda** (Sutra 29)

तयोश्च पश्चात् द्वे पञ्चम्यावर्धेष्टके। अनीक मुखम्। तेन सहिते मेषयुद्धवत्॥

**Sundararaja** (Sutra 14)

त्रिंशदङ्गुलायाम पञ्चदशाङ्गुलव्यास समकर्णं दीर्घचतुरस्रम्।

**Sundararaaja** (Sutra 15 16, 17, 18, 19, 20, 21 and 22)

*यथा पुरस्तात्प्रादेशस्तिर्यङ्मानी पश्चात्तु प्रादेशत्रयम्।* सप्तमाष्टमयोरुभयोरपि पार्श्वफलकानि सप्तविंशकानि षट्तिलोनानि।

**Sundararaja** (Sutra 23)

चतुर्भागीयामुभयतोऽक्ष्णयाभिन्नाया चत्वारो नवमा भवन्ति

त्रिकोणाः । तेषामेकं करणं नवमम् । तस्यैकं फलकं त्रिंशदङ्गुलं । अन्ये एकविंशके सप्ततिले ।

Sundararaja (Sutra 24)

प्रथमाः प्रथमकरणकृता । एवं षष्ट्य इत्यादिषु उदीचीरुदगायताः ॥

Sundararaja (Sutra 25 and 26)

प्रागायता एताः । आसामुपधानप्रकारमाह—

Sundararaja (Sutra 27)

तिसृणां द्वे प्रागग्रे । एका प्रत्यगग्रा ।

Sundararaja (Sutra 28)

उदगग्रा दक्षिणाग्रा च । ते आत्मानं पुच्छं च पञ्चदशाङ्गुलावेते ।

Sundararaja (Sutra 29)

अनीकसहिते मुखसहिते । उदगायते ।

इति षोडशः खण्डः

## सप्तदशः खण्डः

शेषे दश चतुर्थ्यः ॥ (1)

श्रोण्यंसेषु चाष्टौ ॥ (2)

प्राचीः प्रतीचीश्च ॥ (3)

**Kapardi (Sutra 1, 2 and 3)**

पुच्छशेषे चतुर्थ्यो दश तिर्यगायताः । श्रोण्यंसेषु चाष्टौ श्रोण्याश्चतस्रः प्रागायताः । उत्तरस्यां दक्षिणस्यां च विपर्यस्य कारिताः । अंसयोश्चैवम् ।

शेषे च षड्विंशतिरष्टौ षष्ठ्यश्चतस्रः पञ्चम्यः ॥ (4)

**Kapardi (Sutra 4)**

आत्मनि शेषे शिष्टे देशे षड्विंशतिश्चतुर्थ्यः । अष्टौ चतस्रः पञ्चम्यः । तासामुपधानमार्गं उच्यते—विधायानां मार्गे तिर्यगात्मनि चतुर्दश चतुर्थ्यः । तासां पार्श्वयोर्द्वे द्वे प्राच्यौ प्रतीच्यौ च विपर्यस्य कारिते । उत्तरे पार्श्वे चतुर्दशानामेव पार्श्वयोर्मध्ये द्वे द्वे तिर्यक् । एताष्षड्विंशतिश्चतुर्थ्य उपहिताः । चतस्रश्चतुर्भागीयाकोणेषु स्थिताः । तासु चतस्रः पञ्चम्यः तिर्यक् । षष्ठ्यश्चाष्टौ तिर्यगेव ॥

शिरसि चतुर्थ्यो विंशये ॥ (5)

तयोश्च पुरस्तात्प्राच्यौ ॥ (6)

एष द्विशतः प्रस्तारः ॥ (7)

**Kapardi (Sutra 5, 6 and 7)**

तयोर्विशययोः पुरस्तात्प्राच्यौ चतुर्थ्यौ विपर्यस्य कारिता दक्षिणतः । एषेति किमर्थमिदम् यावता द्विशत एव ? परिभाषेयम् । योऽय प्रस्तारो द्विशत (स्स) इति परिभाष्यते । सङ्ख्यां पूरयेदित्युक्ते द्विशत एव पूर्यते । इतरथा का सङ्ख्या पूरयितव्येति न ज्ञायते । अस्ति सहस्रसङ्ख्येति चेन्न । प्रतिप्रस्तारं पूरयेदिति वचनमनर्थकं सम्पद्यते । तस्मात्परिभाषेयमिति ॥

अपरस्मिन्प्रस्तारे पञ्च पञ्च निर्णामयोर्द्वितीयाः ॥ (8)

अप्यययोश्च तृतीयाः ॥ (9)

आत्मानमष्टभागावेताः ॥ (10)

**Kapardi** (Sutra 8, 9 and 10)

द्वितीया वक्रीभूता । निर्णामो वक्रप्रदेशः । तस्मिन् प्रदेशे पञ्चपञ्च द्वितीयाः । अप्यययोश्च तृतीयाः—पक्षाप्यययोस्तृतीया आत्मानमष्टभागावेता व्याप्ताः । चतुर्भागीयेष्टकामात्रमात्मनि स्थिताः । पञ्चपञ्च विपर्यस्य कारिता उत्तरे पक्षाप्यये ।

शेषे पञ्चचत्वारिंशत्प्रथमाः प्राचीः ॥ (11)

**Kapardi** (Sutra 11)

दक्षिणे पार्श्वे पञ्चविंशति. । दक्षिणे पक्षे उत्तरे पार्श्वे पञ्चविंशतिरुत्तरे पक्षे विपर्यस्य कारिता दक्षिणे पक्षे विंशतिः ।

पुच्छपार्श्वयोः पञ्च पञ्च सप्तम्यः ॥ (12)

**Kapardi** (Sutra 12)

उत्तरे पार्श्वे विपर्यस्य कारिता. ।

द्वितीयचतुर्थ्योश्चान्यतरतः प्रतिसंहितामेकैकाम् ॥ (13)

**Kapardi** (Sutra 13)

द्वितीयायां रीत्या चतुर्थ्यां च रीत्या अन्यस्मिन्पार्श्वे एकैका सप्तमी । एका दक्षिणे पार्श्वे विपर्यस्य कारिता । अपरा उत्तरे पार्श्वे ॥

शेषे त्रयोदशाष्टम्यः ॥ (14)

**Kapardi** (Sutra 14)

पुच्छदेशे त्रयोदशाष्टम्यश्शेरते ।

श्रोण्यंसेषु चाष्टौ चतुर्थ्यो दक्षिणा उदीचीश्च ॥ (15)

**Kapardi** (Sutra 15)

दक्षिणस्यां दक्षिणायते विपर्यस्य कारिते । उत्तरस्यां श्रोण्यां उदगायते । दक्षिणेंऽसे दक्षिणायते : उत्तरेंऽसे उदगायते विपर्यस्य कारिते ॥

शेषे च विंशतिः ॥ (16)

त्रिंशत् षष्ठ्यः एकां पञ्चमीम् ॥ (17)

**Kapardi** (Sūtra 16 and 17)

चकारेण चतुर्थ्योऽनुकृष्यन्ते। त्रिंशत् षष्ठ्य एका च पञ्चमी। तासामुपाधानदेश उच्यते—आत्मनो दक्षिणे पार्श्वे दश चतुर्थ्य.। पञ्च प्राची. पञ्च प्रतीची एवमुत्तरे पार्श्वे। मध्ये त्रिंशत् षष्ठ्य प्राची एका च पञ्चमी। तासा पञ्चदश प्राची[1] ॥

शिरसि चतुर्थ्यौ ॥ (18)

तयोश्च पुरस्ताच्चतस्रो नवम्यः ॥ (19)

एष द्विशतः प्रस्तारः ॥ (20)

व्यत्यासं चिनुयाद्यावत प्रस्ताराश्चिकीर्षे तु ॥ (21)

**Kapardi** (Sūtra 18 19, 20 and 21)

नवम्यश्चतस्र पुरस्तात् । एषेति—गतमेतत्। किमर्थमिदम्? नियमार्थम्। किमत्र नियम्यते? त्रियमद्विशतप्रस्तारो नियम्यते नोपरि श्येन। श्येन एव नियम्यते नान्य। कथमवगम्यते नान्य इति? प्रस्तार-पूरणवचनात्—तत्रापि व्यत्यास चिनुयादित्येतदेवोक्त न पूरणवचनम्। तस्मादन्ये द्विशतप्रस्तारा.। अत्रैव परिभाषितत्वात्। इष्टकाकरणे पञ्च-चत्वारिंशदङ्गुल दक्षिणेन गृहीत्वा चतुर्थी कारयेत्। विपर्यस्ता सव्ये। 'व्यत्यास चिनुयाद्यावत, प्रस्ताराश्चिकीर्षेत्" इति। गतमेतत्।

अत्र श्लोका भवन्ति—

एकोनविंशतिस्तिर्यगङ्गुल सतिलद्वयम्।
यथा भवेत्तथा कार्या यथायोगनत तु तत् ॥
यथोदीच्येव षड्भागे षष्ठभागेन वर्धनम्।
करणस्य तृतीयस्य यथायोगनत भवेत् ॥
स विशेषश्चतुर्थस्य द्विचत्वारिंशदङ्गुलम्।
चतुर्दशतिलैर्युक्त करणस्य भविष्यति ॥
षष्ठस्य करणफलक स्यात्त्रयस्त्रिंशदङ्गुलम्।
अष्टादशतिलैर्युक्त इतरे सूत्रवोदिते ॥
पार्श्वस्था सप्तमस्येय विशत्य सह सप्तभि।
षड्भिरेव तिलैरून फलकेऽष्टाष्टमस्य च ॥

---

1 प्रतीची।

अपरस्मिन्प्रस्तारे पञ्च पञ्च निर्णामयोर्द्वितीया ॥ (8)

अप्ययमोश्च तृतीया ॥ (9)

आत्मानमष्टभागावेता. ॥ (10)

*Kapardi (Sutra 8, 9 and 10)*

द्वितीया वक्रीभूता । निर्णामो वक्रप्रदेश । तस्मिन् प्रदेशे पञ्चपञ्च द्वितीया. । अप्ययमोश्च तृतीया.—पक्षाप्ययमोस्तृतीया आत्मानमष्ट-भागावेता व्याप्ता. । चतुर्भागीयेष्टकामात्रमात्मनि स्थिता. । पञ्चपञ्च विपर्यस्य कारिता उत्तरे पक्षाप्यये ।

शेषे पञ्चचत्वारिंशत्प्रथमाः प्राचीः ॥ (11)

Kapardi (Sutra 11)

दक्षिणे पार्श्वे पञ्चविंशति । दक्षिणे पक्षे उत्तरे पार्श्वे पञ्च-विंशतिरुत्तरे पक्षे विपर्यस्य कारिता दक्षिणे पक्षे विंशति ।

पुच्छपार्श्वयोः पञ्च पञ्च सप्तम्य ॥ (12)

Kapardi (Sutra 12)

उत्तरे पार्श्वे विपर्यस्य कारिता ।

द्वितीयचतुर्थ्योश्चान्यतरतः प्रतिसंहितामेकैकाम् ॥ (13)

Kapardi (Sutra 13)

द्वितीयायां रीत्या चतुर्थ्यां च रीत्या अन्यस्मिन्पार्श्वे एकैका सप्तमी । एषा दक्षिणे पार्श्वे विपर्यस्य कारिता । अपरा उत्तरे पार्श्वे ॥

शेषे त्रयोदशाष्टम्यः ॥ (14)

Kapardi (Sutra 16 and 17)

चकारेण चतुर्थ्योऽनुकृष्यन्ते । त्रिंशत् पष्ठ्य. एका च पञ्चमी । तासामुपधानदेश उच्यते—आत्मनो दक्षिणे पार्श्वे दश चतुर्थ्यः । पञ्च प्राची: पञ्च प्रतीची: एवमुत्तरे पार्श्वे । मध्ये त्रिंशत् षष्ठ्यः प्राची एका च पञ्चमी । तासां पञ्चदश प्राची:[1] ॥

शिरसि चतुर्थ्यौ ॥ (18)

तयोश्च पुरस्ताच्चतस्रो नवम्यः ॥ (19)

एष द्विशतः प्रस्तारः ॥ (20)

व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् ॥ (21)

Kapardi (Sutra 18, 19, 20 and 21)

नवम्यश्चतस्रः पुरस्तात् । एषेति—गतमेतत् । किमर्थमिदम् ? नियमार्थम् । किमत्र नियम्यते ? विषमद्विशतप्रस्तारो नियम्यते नोपरि श्येनः । श्येन एव नियम्यते नान्यः । कथमवगम्यते नान्य इति ? प्रस्तार-पूरणवचनात्—तत्रापि व्यत्यास चिनुयादित्येतदेवोक्तं न पूरणवचनम् । तस्मादन्ये द्विशतप्रस्तारा: । अत्रैव परिभाषितत्वात् । इष्टकाकरणे पञ्च-चत्वारिंशदङ्गुलं दक्षिणेन गृहीत्वा चतुर्थी: कारयेत् । विपर्यस्ता: सव्ये । "व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत्" इति । गतमेतत् ।

अत्र श्लोका भवन्ति—

एकोनविंशतिस्तिर्यगङ्गुलं सतिलद्वयम् ।
यथा भवेत्तथा कार्या यथायोगनतं तु तत् ॥

यथोदीच्येव षड्भागे षष्ठभागेन वर्धनम् ।
करणस्य तृतीयस्य यथायोगनतं भवेत् ॥

स विशेषश्चतुर्थस्य द्विचत्वारिंशदङ्गुलम् ।
चतुर्दशतिलैर्युक्तं करणस्य भविष्यति ॥

षष्ठस्य करणफलक स्यात्त्रयस्त्रिंशदङ्गुलम् ।
अष्टादशतिलैर्युक्तं इतरे सूत्रवोदिते ॥

पार्श्वस्था: सप्तमस्येव विंशत्यः सह सप्तभिः ।
षड्भिरेव तिलैरून फलकेऽष्टाष्टमस्य च ॥

---

1. प्रतीची. ।

प्रथमेन तृतीयेन विपर्यस्य पुनः पुनः ।
तथा सप्तमषष्ठाभ्यां कारयेदिष्टकाः कृतौ ॥
पञ्चत्रिंशद्विपर्यस्य चतुर्थेनापि कारयेत् ।
एतावदेव कुशला इष्टकाकरणे विदुः ॥
पुच्छे तिर्यङ्निधातव्या चतुर्थ्यो दश चोदिताः ।
ययोश्चान्तरा तिर्यक् चतुर्थ्यस्स्युश्चतुर्दश ॥
चतुर्थ्यः पार्श्वयोस्तासां षट्षट्तिर्यक्तु मध्यमाः ।
कोणेषु तिर्यक् पञ्चम्यः पष्ठश्चाष्टौ तथाविधाः ॥
आपुच्छम्याप्ययात्तद्वत् शिरसि त्रिंशदिष्यते ।
प्राच्यश्चैव प्रतीच्यश्च प्राचीष्वेव च पञ्चमी ॥
चतुर्थ्यः पार्श्वयोस्तासां तथा शिष्टे च विंशतिः ।
अन्यत्सर्वं यथासूत्र प्रस्तारो द्विशतः क्रतौ ॥
श्रोण्या[1] चैव तथैवासौ पट्सु त्वेव तथाविधा ।
चतुर्थ्यो दक्षिणे न पैता ॥
श्रोण्योर्दक्षिणे विज्ञेय तथा चैवास उत्तरे ॥

**Karavinda** (Sutra 1)

पुच्छे दश चतुर्थकरणनिष्पन्नाः तिर्यगायनाः ॥

**Karavinda** (Sutra 2 and 3)

एवं श्रोण्योश्चतस्र उत्तरपार्श्वे विपयस्य कारिता ॥

**Karavinda** (Sutra 4)

शेषे चेति चत्वाराच्चतुर्थ्योऽनुपज्यन्ते । आत्मशेषे षड्विंशतिश्चतुर्थ्यं । अष्टौ च पष्ठ्यः । चतस्र पञ्चम्यः । ता एता अष्टात्रिंशत् । आसामुपधानमुच्यते—

**Karavinda** (Sutra 5 and 6)

पुच्छगतविंशयाना मध्ये तिर्यगात्मनि चतुर्दश चतुर्थ्यः प्राच्यो रीतयः । तासां पार्श्वयोः पश्चाद्द्वे पुरस्तात् द्वे दक्षिणत उत्तरतश्च । ता षष्ठ्यः । पष्ठ्यानां चतस्रः प्राच्यश्चतस्रः प्रतीच्यः । चतुर्दशानामेव[3]

---

1 श्रोण्यौ ।
2. चतुर्थ्योऽष्टौ स्यापि दक्षिणे
3 अष्टानामेव—C

पार्श्वयोर्मध्ये दक्षिणत उत्तरतश्च द्वेद्वे । तादचतस्रः । एवं षड्विंशतिश्चतुर्थ्यः । अत्रानुपहिताः कोणेषु चत्वारश्चतुर्भागीयादेशाः । तेषु चतस्रः पञ्चम्यः तिर्यक् । षष्ठिश्चाष्टौ तिर्यगेव । शिरसि प्रत्येक दक्षिणोत्तरतः प्राच्यौ तयोर्विशययोः पुरतः प्राच्यौ चतुर्थ्यौ । एवं बाह्यविशेषे ॥

Karavinda (Sutra 7)

उपधानविधिगतदेशादिसंख्यासमुदायवशेन प्रस्तारे शतद्वये सिद्धेऽपि द्विशतः प्रस्तार इति वचनं प्रस्तारे द्विशतत्वसिद्धिकरणाय ।

Karavinda (Sutra 8)

निर्णामः पक्षयोर्मध्ये वक्रप्रदेश इत्युक्तम् । तस्मिन् द्वितीया. दक्षिणोत्तरपक्षयोः पञ्चपञ्च निर्णामानुरूपमुपधेयाः ॥

Karavinda (Sutra 9 and 10)

तृतीयकरणावेताः पञ्चपञ्चैवाष्टभागेन वर्धितेनात्मानमवगताः षड्भागेन पक्षम् ॥

Karavinda (Sutra 11)

दक्षिणपक्षस्य दक्षिणभागे पञ्चविंशतिः । उत्तरपक्षस्य उत्तरभागे पञ्चविंशतिः दक्षिणे विंशतिः ॥

Karavinda (Sutra 12)

पुच्छस्य दक्षिणे पार्श्वे पञ्च सप्तम्यः । उत्तरे पञ्च प्राच्यो रीतयः ॥

Karavinda (Sutra 13)

अनेनान्ययोः सप्तम्योरुपधानमुच्यते । पुच्छपार्श्वगतसप्तमीरीत्योरन्तरस्या रीत्या द्वितीया । प्रतिसहितामेकामन्यस्या चतुर्थीप्रतिसहितां चैकां सप्तमीमुपदध्यात् । एव द्वादश सप्तम्य उपहिता भवन्ति ॥

Karavinda (Sutra 14)

पुच्छशेषे अष्टमकरणोत्पन्नाः त्रयोदशोदीच्यः पञ्च रीतयः । पुच्छाग्रे पार्श्वगतयोस्सप्तम्योर्मध्ये पञ्चाष्टम्यौ । ननाग्रा द्वितीयायाम् । तिसृणा सप्तमीनां मध्ये निस्रोऽष्टम्यः । तृतीयायां च तिस्रः । चतुर्थरीत्या

तिसृणां सप्तमीनां मध्ये एका । पञ्चमरीत्यां सप्तम्योर्मध्ये एका । एवं त्रयोदशाष्टम्यः यथायोग प्रागग्राः प्रत्यगग्राश्च भवेयुः ॥

**Karavinda** (Sutra 15)

श्रोण्योश्चतस्रः प्रत्येकं द्वे द्वे दक्षिणयोर्दक्षिणा उत्तरयोरुत्तराः । सर्वा बाह्यविशेषाः ॥

**Karavinda** (Sutra 16, 17, 18 and 19)

आत्मशेषे विंशतिः । चकारेण वचनाभावे शिरसि चतुर्थ्यौ । तयोश्च पुरस्तात् चतस्रो नवम्यः ॥

**Karavinda** (Sutra 20)

प्रस्तारशतद्वयानियमशङ्कानिराकरणाय द्विशतवचनम् ॥

**Karavinda** (Sutra 21)

गतम् ॥

अथ फलकानां प्रजम्भनमुच्यते—प्रथमकरणस्य विंशत्यङ्गुला तिर्यङ्मानी प्रजम्भिते यथैकोनविंशतिरङ्गुलयस्साष्टादशतिलद्वयं च ऋज्ववस्थिता भवति, तथा करणं प्रजम्भयेत् । वक्ष्यमाणप्रकारेण द्वितीयस्य करणस्य पक्षनमनी चतुर्विंशत्यङ्गुला सार्धसप्ततिला । तस्याष्षष्ठो भागश्चतस्रोऽङ्गुलयः सपादनतिलश्च । तेन द्वितीयकरणस्य दीर्घतया चत्वारिंशदङ्गुलयोः फलकयोर्मध्ये चतुर्विंशत्यङ्गुले एकस्मिन्नुन्नतिं च कुर्यात्; यथा तस्य भागद्वयमेकैकशः पूर्वकर्णसदृशं भवति तथेति । तृतीयस्य तु षष्ठाष्टभागसन्धौ नमनं । षष्ठं भाग पूर्ववन्नमयेत्[1] । अष्टमस्य तु नमनमारम्भानुरूपं ऋजुत्ववस्थानमेव । तस्मिन्नमनं षष्ठापेक्षया ।

अत्र श्लोकाः—

श्येने प्रथम माद्यस्य करणस्य प्रजम्भनम् ।
द्वितीयस्य तृतीयस्य चोच्यते फलकानतिः ॥
यस्मिन् श्येने स्यादिमस्य करणस्य प्रजम्भनम् ।
पुच्छस्य[2] पक्षकरणौ षष्ठस्यागो यथार्जवम् ॥
द्वितीयस्य तृतीयस्य पक्षकाणां नतेः फलम् ।
स्यादस्य पक्षकरणौ षष्ठानादिमे नतिः ॥

---

1. पूर्वं नमयेत् ।
2. पक्षस्य—C.

एकोनविंशत्यङ्गुल्यस्साष्टांशं च तिलद्वयम् ।
तिर्यङ्मानी यथा सा स्यात्तया रज्ज्वा प्रजम्भयेत् ॥
सपादतिलसंयुक्तचतुरङ्गुलमात्रतः ।
पक्षस्य नमनी पक्षः तेन स्यात्फलकानतिः ॥
एवं द्वितीयस्येनोक्तमार्गेणोन्नीय जम्भनम् ।
करणस्य विधातव्यं फलकानमनं तथा ॥

Sundararaja (Sutra 1)

पुच्छ उदगायताः ।

Sundararaja (Sutra 2 and 3)

आत्मनः श्रोण्यंसेषु द्वेद्वे बाह्यविशेषे ।

Sundararaja (Sutra 4)

आत्मशेषे षड्विंशतिचतुर्थ्यः प्राच्यः प्रतीच्यः । तत्र मध्यरीत्योः सप्तसप्तोदगग्रा दक्षिणाग्राश्च । द्वितीयपञ्चमरीत्योः पञ्चपञ्च मताः । सममध्ये दक्षिणोत्तरे अन्याः प्राक्प्रतीच्यः । आद्यन्तरीत्योर्मध्ये एकैक-चतुर्थ्यौ दक्षिणोत्तरयोः पश्चात्पुरस्ताच्च द्वेद्वे पक्षयो । ताश्चाष्टौ दक्षिणो-त्तराः । तद्रीत्योः शेषे चतस्रः पञ्चम्य उदगायताः ।

Sundararaja (Sutra 5)

अप्यये पुच्छाप्ययवत् ।

Sundararaja (Sutra 6)

बाह्यविशेषे चतुर्थ्यौ ।

Sundararaja (Sutra 7)

अतोऽत्र संख्यापूरणाय कर्तव्यो यत्न इत्यर्थः ।

Sundararaja (Sutra 8, 9, 10, 11, 12 and 13)

अन्यतरतः दक्षिणे पार्श्वे उत्तरे वा द्वितीयचतुर्थीभ्यां सप्तमीभ्यां संहितामेकां सप्तमीमन्तरुपदध्यात् ॥

Sundararaja (Sutra 14)

पुच्छ शेषे ।

Sundararaja (Sutra 15)

द्वेद्वे बाह्यविशेषे ।

Sundararaja (Sutra 16 and 17)

आत्मशेषे विंशतिश्चतुर्थ्यः प्रागायताः । मध्ये प्रागायताभिः षष्ठीभिर्द्वात्रिंशता द्वे रीती । तयोर्दक्षिणस्यां द्वे उद्धृत्य एकां पञ्चमीं निदध्यात् ॥

Sundararaja (Sutra 18)

उदगायते ॥

Sundararaja (Sutra 19, 20 and 21)

उदगायताः ॥

इति सप्तदशः खण्डः

इति पञ्चमः पटलः ॥

# षष्ठः पटलः

## अथ अष्टादशः खण्डः

श्येनचितं चिन्वीत सुवर्गकाम इति विज्ञायते ॥ (1)

वक्रपक्षो व्यस्तपुच्छो भवति ॥ (2)

पश्चात् प्राङ् उदूहति ॥ (3)

पुरस्तात् प्रत्यङ् उदूहति ॥ (4)

एवमिव हि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते ॥ (5)

**Kapardi** (Sūtra 1, 2, 3,4 and 5)

अस्याः श्रुते. पुनरुपन्यासो मार्गान्तर प्रतिपादयितुम् । अथवा अन्यैवेषा श्रुतिः । इयमेवाकारमार्गता । वक्रेति-गतमेतत् ।

पुरुषस्य षोडशभिर्विंशं शतं सारत्निप्रादेशस्सप्तविधस्संपद्यते ॥ (6)

तासां चत्वारिंशदात्मनि ॥ (7)

तिस्रश्शिरसि ॥ (8)

पञ्चदश पुच्छे ॥ (9)

एकत्रिंशद् दक्षिणे पक्षे ॥ (10)

तथोत्तरे ॥ (11)

**Kapardi** (Sūtra 6, 7, 8, 9, 10 and 11)

पुरुषस्य षोडशभागः षोडशी । ताभिर्विंशोत्तर शत सपद्यते । परिगणनाया क्रियमाणाया एतावत्य. षोडश्य. सप्तार्धे शेरते । सप्त स्थापयित्वा षोडशोभिर्गुणिते द्वादशोत्तर शतम् । अर्धपुरुषे द्वादशसु अष्टौ । क्षिप्ते विंशतिः । एव विंशोत्तर शत सम्पन्नम् । तासामिति—तासा षोडशीना चत्वारिंशदात्मन्युपधेयाः; तिस्रश्शिरसि, सर्वत्र निधेया इति शेष । पञ्चदश पुच्छे । दक्षिणे पक्षे एकत्रिंशत् तथोत्तरे । एकत्रिंशदुत्तरे पक्ष । कथमेता निधेया इत्युच्यते—

अध्यर्धपुरुषस्तिर्यग्द्वावायामत इति दीर्घं चतुरस्रं विहृत्य श्रोण्यंसेभ्यो द्वे द्वे षोडश्यौ निरस्येत् ।। (12)

चत्वारिंशत्परिशिष्यन्ते ।। (13)

स आत्मा ।। (14)

Kapardi (Sutra 12 13 and 14)

अध्यर्धपुरुषा तिर्यङ्मानी द्विपुरुषा पार्श्वमानी । एवं दीर्घचतुरस्रं विहृत्य श्रोणीभ्यामंसाभ्या च द्वे द्वे षोडश्यौ प्रत्येक निरस्येत्—त्यजेत् । अक्ष्णया ·····यथा श्रोण्यंसेषु चत्वारि चतुरस्राणि अर्धपुरुषप्रमाणानि कृत्वा अक्ष्णयार्धानि निरस्येत् । शिष्ट चत्वारिंशत् । स आत्मा ।।

शिरस्यर्धपुरुषेण चतुरस्रं कृत्वा पूर्वस्याः करण्या अर्धात्तावति दक्षिणोत्तरयोर्निपातयेत् ।। (15)

Kapardi (Sutra 15)

गतमेतत् —

तिस्रः परिशिष्यन्ते ।। (16)

तच्छिरः ।। (17)

Kapardi (Sutra 16 and 17

तिस्रश्शिष्टः । तच्छिरः ।

पुरुषस्तिर्यग्द्वावायामतः ।। (18)

षोडशभागश्च दक्षिणः पक्षः ।। (19)

तथोत्तरः ।। (20)

Kapardi (Sutra 18, 19 and 20)

पुरुषमात्री तिर्यङ्मानी । द्विपुरुषा पार्श्वमानी । पुरुषषोडशभागाभ्यासेनाष्टाङ्गुलमात्रं दक्षिणे पक्षे आयामः । तद्वदेवोत्तरपक्षः ।।

पक्षाग्रे पुरुषचतुर्थेन चत्वारि चतुरस्राणि कृत्वा तान्यक्ष्णया व्यवलिख्यार्धानि निरस्येत् ।। (21)

एकत्रिंशत् परिशिष्यन्ते ।। (22)

Kapardi (Sutra 21 and 22)

पक्षयोरग्रे प्रत्येकं पुरुषचतुर्थप्रमाणेन चत्वारि चतुरस्राणि कृत्वा

तान्यक्ष्णया कर्णेनलिख्य ग्रधानि निरस्येत् । स्रुच्यवद्दक्षिणपक्षाग्राणि[1] वहिर्भूतानि निरस्येत् । द्विपुरुषायामे द्वात्रिंशत् षोडश्यो भवन्ति । षोडशभागेन चैका । तासु द्वयोस्त्यक्तयो एकत्रिंशत्परिशिष्यन्ते ॥

पक्षाग्रमुत्सृज्य मध्ये पक्षस्य प्राचीं लेखामालिखेत् ॥ (23)

*Kapardi (Sutra 23)*

पक्षाग्रमिति पुरुषचतुर्थेन कृतानि चतुरस्राणि लक्ष्यन्ते । पक्षायामे पुरुषचतुर्भागार्धमुत्सृज्येत्यर्थ. । मध्ये पक्षस्य प्रागायतां लेखामालिखेत् ॥

पक्षाप्यये पुरुष नियम्य (लेखायां) पुरुषान्ते नितोद कुर्यात् ॥ (24)

नितोदात्प्राचीनं पुरुषान्ते नितोदम् ॥ (25)

नितोदयोर्ना (गा) नान्तावालिखेत् ॥ (26)

तत्पक्षनमनम् ॥ (27)

एतेनोत्तरः पक्षो व्याख्यात ॥ (28)

Kapardi (Sutra 24 25 26, 27 and 28)

आत्मपक्षसन्धौ पुरुषमात्र वेणुं नियम्य लेखायामेव पुरुषस्यान्ते वेणोरन्ते लक्षण कुर्यात् । तस्मान्नितोदात्प्रागायत प्राचीन वेणु लेखायामेव निधायान्त्ये छिद्रे शङ्कु लक्षण वा निहत्य नितोदयोरन्तौ नाना आलिखेत् । अपरस्मान्निनोदादारभ्यापरान्तावालिखेत् । पूर्वस्मान्नितोदाच्चारभ्य पूर्वान्तमिति । तत्पक्षनमन पक्षस्य वक्रता । एतेनेति उत्तरपक्षनमनमप्येव कुर्यात् ॥

द्विपुरुषं पश्चादर्धपुरुष पुरस्ताच्चतुर्भागोन पुरुष आयामः ॥ (29)

अष्टादश करण्यौ ॥ (30)

पार्श्वयोस्ताः पञ्चदश परिगृह्णन्ति ॥ (31)

तत्पुच्छम् ॥ (32)

*Kapardi (Sutra 29 30, 31 and 32)*

पश्चात्तिर्यङ्मानी द्विपुरुषा । पुरस्तादर्धपुरुषा । पादोनपुरुषायामा । पार्श्वयोरष्टादशषोडशी करोति । अष्टादशकरणी सा पार्श्वयो । ता एता पञ्चदशषोडशी परिगृह्णन्ति । कथमर्धपुरुषव्यासा पादोनपुरुषायामा

1 स्रोववद्दक्षिणपक्षाग्राणि ।

पट्करोति ? तस्याभितो द्वे चतुरस्रे समे सर्वतः पादोनपुरुषमात्रे । ताव-क्षण्या लिखेत् । एकैकमर्धं त्यजेत् । शिष्ट प्रत्येकमर्धपञ्चमं करोति । अर्ध-पञ्चमं अर्धपञ्चम नव । नवसु पट्सु क्षिप्तेषु पञ्चदश । तत्पुच्छम् ॥

**Karavinda (Sutra 1, 2 3, 4, and 5)**

द्वितीयश्येनमुपदेष्टुं सैव श्रुतिः पुनरपि पठिता । तत्र विशेषमाह–

**Karavinda (Sutra 6, 7, 8, 9, 10 and 11)**

षोडशी-षोडशभागपरिमिताः । ताभिः षोडशीभिः । सारत्निप्रादेशस्सप्तविधोऽग्निर्विंशतिशत सपद्यते । तथाहि—सप्त स्थापयित्वा षोडशीभिर्गुणिते द्वादशोत्तर शत भवति । अर्धे षोडशीभिर्गुणिते अष्टौ । तेष्वष्टसु क्षिप्तेषु विंशत्युत्तरं शत षोडश्यो भवन्ति । तासा चत्वारिंशदात्मनि चत्वारिंशत् षोडशिनीक्षेत्राण्यात्मेत्यर्थः । तिस्रश्शिरसि षोठश्यस्स्युः । पञ्चदश पुच्छे । पञ्चदशषोडश्यः पुच्छक्षेत्रम् । एकत्रिंशद्दक्षिणे पक्षे । तथोत्तरे पक्षे । एकत्रिंशत् षोडशीक्षेत्रं दक्षिणः पक्ष उत्तरश्च । एवं विभज्य विमानमाह—

**Karavinda (Sutra 12, 13 and 14)**

अनुपृष्ठ्य चत्वारिंशद्द्वे शते चाङ्गुलय आयामः । विस्तारोऽशीतिशतमङ्गुल्यस्तिर्यक् । एव दीर्घं चतुरस्र विहृत्य श्रोण्यंसेष्वर्धपुरुषप्रमाणानि चत्वारि चतुरस्राणि कृत्वा तान्यात्मपार्श्वमानीनिष्ठकाणतः निर्यङ्मानीनिघ्रणेण प्रत्यक्षणयालिखेत् । लेखाना बहिर्भूतास्त्यजेत् । चत्वारिंशदर्वशिष्यन्ते । स आत्मा भवति । कथम् ? आयामतोऽष्टौ षोडश्यः । तिर्यक् पट् । अष्टौ षड्गुणिता अष्टाचत्वारिंशत् । तत्र श्रोण्यंसेभ्यो द्वे द्वे निरस्याष्टौ निरस्ता भवन्ति । शिष्टाश्चत्वारिंशदात्मनि भवन्ति ॥

**Karavinda (Sutra 15, 16 and 17)**

शिर. प्रदेशे आत्मनोऽस्मयोः पुरतः पृष्ठ्यायामर्धपुरुषेण चतुरस्रं कृत्वा पूर्वस्याः करण्याः इत्यादिकृते तिस्रः परिशिष्यन्ते । तच्छिरो भवति ॥

**Karavinda (Sutra 18, 19 and 20)**

पुरुषमात्रं तिर्यगायामः । द्विपुरुषमात्रमर्धाष्टमाङ्गुलयश्च । एवं दक्षिणे पक्षे दीर्घचतुरस्रं कृत्वा । तथोत्तरेऽपि ॥

Karavinda (Sutra 21 and 22)

पक्षस्याग्रे पुरुषचतुर्थेन त्रिंशदङ्गुलेन चत्वारि चतुरस्राणि कृत्वा तानि प्रत्येकं दक्षिणाप्रत्यग्व्यवलिख्य पूर्वाण्यर्धानि निरस्येत् । एवमेकत्रिंशत् षोडश्यः परिशिष्यन्ते । स दक्षिण पक्षः । कथ ? पक्षे द्वात्रिंशत् षोडश्यः । षोडशो भागश्चैकः । तास्त्रयस्त्रिंशत् । ताभ्यां चतुर्ष्वर्धेषु निरस्तेषु एकत्रिंशत्परिशिष्यन्ते । एवमेवोत्तर पक्षः । तत्र चतुरस्रान्युत्तराप्रत्यगक्ष्णया विलिख्य पूर्वार्धानि निरस्येत् ॥

Karavinda (Sutra 24, 25, 26 and 27)

पक्षाग्रमुत्सृज्य त्रिंशदङ्गुलमपहाय मध्ये पक्षस्य प्राची लेखामालिखेत् । पक्षाग्रे उत्सृष्टे शेषः पक्षः अर्धतृतीयाङ्गुलोनविंशत्यधिकशतद्वयाङ्गुलम् । तस्य मध्ये सपादाङ्गुलोनदशाधिकशताङ्गुलेन पश्चादारभ्य प्रगायतां लेखां पक्षमतीत्यालिखेत् । पश्चिमे पक्षाप्यये पुरुषमात्रं वेणुं निधाय नियम्यापर वेणोरन्तर दक्षिणाप्राक् लेखाया निपातयेत् । स पश्चिमपक्षान्तात् प्राक्पञ्चाशदङ्गुले पञ्चविंशतितिलाधिके निपतति । तत्र नितोदं–बिन्दुं कुर्यात् । तस्माच्च प्राचीनलेखायामेव पुरुषमात्रे द्वितीय नितोदं कुर्यात् । नितोदयो नानान्तावालिखेत् । नितोदयोरारभ्य पक्षान्तावभि नानापृथक् आलिखेत् । पश्चिमान्नितोदादारभ्य पश्चिमपक्षाग्रं पक्षाप्यय च प्रत्यगालिखेत् । तत्पक्षनमन –इदेतत्पक्षस्य नमन भवति । पूर्वस्मन्नितोदादारभ्य पूर्वं पक्षाग्र पक्षाप्यय च प्रत्यगालिखेत् । तत् पक्षनमन—पक्षस्य नमन भवति ।

Karavinda (Sutra 28)

ऋजु ॥

Karavinda (Sutra 29, 30, 31 and 32)

पुच्छस्याग्र द्विपुरुषप्रमाणम् । तस्य मूलमर्धपुरुषप्रमाण । आयामश्चतुर्भागोनः पुरुषः । अष्टादशकरण्यौ पार्श्वयोः । अष्टादश करोतीत्यष्टादशकरणी । षोडशीना प्रकृतत्वात्तासा अष्टादशाना करणी । ते खलु त्रिषोडशीप्रमाणनवत्यङ्गुलसमचतुरस्रस्याक्ष्णयाभूते । तथाहि—पुच्छमूलाद्दक्षिणत उत्तरतश्च पार्श्वमानी तिर्यङ्मानी चतुर्भागोनपुरुषप्रमाणेपेता । त्रिभिर्नवेभि नवषोडशीक्षेत्रस्याक्ष्णयारज्जुभूते । अत्र चतुरस्रस्याक्ष्णयारज्जु

द्विस्तावती भूमिं करोतीति तेऽष्टादशकरण्यौ षोडशीनाम् । ता एताश्चतस्र करण्य । द्विषोडशिकाष्टषोडशिके तिर्यङ्मान्यावष्टादशकरण्यौ पार्श्वमान्यौ पञ्चदश षोडशी परिगृह्णन्ति । कथम् ? अर्धपुरुषव्यासा पादोनपुरुषायामा षट्करोति । तस्याभितो द्वे चतुरस्रे समे सवत पादोनपुरुषमात्रे । तावक्ष्णया लिखेत् । शिष्टं प्रत्येकमर्धपञ्चमं करोति । अर्धपञ्चममर्धपञ्चमं च नव । नवसु षट्सु क्षिप्तेषु पञ्चदश । तत्पच्छ—पुच्छसंज्ञ । भवति करण्यनु च्यन्त ।

Sundararaja (Sutra 1, 2 3 4 and 6)

अथोक्तमेव श्येनचित प्रकारान्तरेण व्याख्यातु ब्राह्मण पुनरुपन्यस्यति—

षोडश्य षोडशांशा । ताश्चतुर्भागीया इष्टका विंशत्यधिक शत । 'शदन्तविंशतेश्चेति' ड । सारत्निप्रादेश सप्तविधोग्नि पुरुषक्षत्रस्य षोडशीभिर्विंशत्यधिक शत सम्पद्यते ॥

Sundararaja (Sutra 7)

कुर्यात् । शङ्कुं निहन्यात् । तत्र पुरुषं नियम्य तत पुरस्तात्पुरुषान्ते नितोदं कृत्वा तदनुगुण पूर्वापरावन्तावालिखेत् । पूर्वस्येने द्विपुरुषां रज्जुमित्युक्तमेव संनमनमत्र प्रकारान्तरेणोक्तमनुसन्धातव्यम् ॥

**Sundaraaja** (Sutra 28, 29, 30, 31 and 32)

अष्टादशाना षोडशीनां करण्यौ नव तिलयुक्ते सप्तविंशतिशताङ्गुले पार्श्वयोरक्षणयारूपे भवत. । पुच्छात्मशिरसां षोडशी सख्या भूमौ लिखित्वा द्रष्टव्या ॥

इत्यष्टादशः खण्डः

## अथैकोनत्रिंशः खण्डः

षोडशीं चतुर्भिः परिगृह्णीयात् ॥ (1)

Kapardi (Sūtra 1)

पुरुषस्य षोडशभागे[1] या तिष्ठति सा षोडशी। तां चतुर्भिः वक्ष्यमाणैः परिगृह्णीयात्— कारयेदिति यावत्।

अष्टमेन त्रिभिरष्टमैश्चतुर्थेन चतुर्थसविशेषेणेति ॥ (2)

अर्धेष्टकां त्रिभिर्द्वाभ्यां चतुर्थाभ्यां चतुर्थसविशेषेणेति ॥ (3)

पादेष्टकां त्रिभिश्चतुर्थेनैकं चतुर्थसविशेषार्धाभ्यां चेति ॥ (4)

पक्षेष्टकां चतुर्भिर्द्वाभ्यां चतुर्थाभ्यां सप्तमाभ्यां[2] चेति ॥ (5)

पक्षमध्यीयां चतुर्भिर्द्वाभ्यां चतुर्थाभ्यां द्विसप्तमाभ्यां चेति ॥ (6)

पक्षाग्रीयां त्रिभिश्चतुर्थेनैकं चतुर्थसप्तमाभ्यामेकं चतुर्थसविशेषसप्तमाभ्यां चेति ॥ (7)

Kapardi (Sūtra 2, 3, 4, 5, 6 and 7)

पुरुषचतुर्थेनैक चतुर्थसप्तमाभ्या वक्रभूताभ्यामेक चतुर्थमविशषसप्तमाभ्या-मेव ॥

Karavinda (Sutra 1 and 2)

पुरुषस्य षोडशभागे या तिष्ठति सा षोडशी। ता चतुर्भि चतुष्प्रकारै फलकैष्षोडशी परिगृह्णीयात्–सम्पादयेत । अष्टमेन–प्रकृतत्वात पुरुषस्य । पञ्चदशाङ्गुलनेमि य वत् । त्रिभिरष्टमै पञ्चचत्वारिंशदङ्गुलै । चतुर्थेन त्रिशदङ्गुलन। चतुर्थसविशेषेण द्विचत्वारिंशदङ्गुलेन साधचतुर्दशतिलाधिकेन अक्षणयावस्थितेन । इतिश०ञ्ञार्थे । एतेनचैतेन चेति—अष्टमी त्रिरष्टम्यौ पार्श्वमान्यौ । चतुर्थतत्सविशेषौ तिर्यङ्मान्यौ । चतुर्थस्यैत्र सविशेषप्राप्तयर्थ चतुर्थशब्द ॥ एवमेतैश्चतुर्भि फलकै षोडशी कारयेत् ॥

Karavinda (Sutra 3)

परिगृह्णीयादिति शेष । अर्धेष्टका त्रिभि फलकै परिगृह्णीयात् । त्रिशदङ्गुलाभ्या द्विचत्वारिंशदङ्गुलेन सचतुर्दशतिलेन च त्रिभि फलकै ॥

Karavinda (Sutra 4)

एकविंशत्यङगुलाभ्या ससप्ततिलाभ्या त्रिशदङगुलेन चैकेन चेति त्रिभि ॥

Karavinda (Sutra 5)

त्रिशदङगुलाभ्या सप्तदशाङगुलाभ्या पञ्चतिलाधिकाभ्या चेति । पक्षष्टका द्वाभ्या चतुर्थाभ्या समाभ्या च कारयेत् । अस्य च नमनमुपरिष्टाद्वक्ष्यति ॥

Karavinda (Sutra 6)

पक्षमध्यमयोग्या पक्षमध्यीया । ता त्रिशदङगुलाभ्या चतुस्त्रिशदङ्गुलाभ्या द्विसप्तदशाङगुलाभ्या दशतिलाधिकाभ्याचेति चतुर्भि ॥

Kararvinda (Sutra 7)

पक्षाग्रयोग्या पक्षाग्रीया । ता त्रिशदङगुलेनैक पञ्चतिलाधिकसप्तचत्वारिंशदङ्गुलेनैक तयैकोनविंशतितिलाधिकेन एकोनषष्टयङगुलेनैकमिति त्रिभि फलकै परिगृह्णीयात् । एव षट करणान्युक्तानि । पक्षष्टका पक्षमध्यीया पक्षाग्रीया इति त्रयाणां तत्र तत्रोपधाने योग्यत्वाय क्षत्र समत्वाय ।

**Sundararaja** (Sutra 1 and 2)

अथकरणानि—

पूर्वश्येनचतुर्थ्येषा। एता चतुर्भि फलकं परिगृह्णीयात्। तत्राष्टमेन त्रिभिरष्टमैरिति पार्श्वफलके। उत्तरे तिर्यक्फलके। सविशेष चतुर्थं चतुर्थस्य द्विकरणी चतुर्दश तिला द्विचत्वारिंशदङ्गुला।

**Sundararaja** (Sutra 3 and 4)

पूर्वश्येननमन्येषा।

**Sundararaja** (Sutra 5)

चतुर्थे त्रिंशदङ्गुले पार्श्वफलके। सप्तमे सपञ्चतिलसप्तदशाङ्गुले तिर्यक्फलके।

**Sundararaja** (Sutra 6)

द्वे पक्षेष्टके। समस्ते एषा। पूवश्येने द्वितीयावद्रूप।

**Sundararaja** (Sutra 7)

पक्षेष्टका—अर्धेष्टका। समस्ते एका।

पक्षकरण्यास्सप्तम तिर्यङ्मानी, पुरुषचतुर्थं पार्श्वमानी ॥ (8)

तस्याक्ष्णया रज्ज्वा करणं प्रजम्भयेत् ॥ (9)

**Kapardi** (Sutra 8 and 9)

दीर्घीकुर्यात्। अनयेति करणी। पक्षकरणी—पक्षस्य करणी पक्षकरणी इष्टका। तस्या उक्त करण पुरुषसप्तम तिर्यङ्मानी पुरुषचतुर्थी पार्श्वमानीति। पक्षेष्टका चतुर्भिरिति। तमेव दीर्घीभूत करण प्रजम्भयेत्—दीर्घीकुर्यात्। कथमेतस्याक्ष्णया रज्ज्वायतया दीर्घीकुर्यात्करणम् ?

पक्षनमन्यास्सप्तमेन फलकानि नमयेत् ॥ (10)

**Kapardi** (Sutra 10)

पक्षनमनीति नितोदलेखामूलयोरन्तरालम्। तत्सप्तधा विभज्य एकेन भागेन। किमुक्त भवति ? यावत्प्रजम्भितेन तस्यास्सप्तमी तिर्यग्भवति तावत्प्रजम्भयेदिति। एव यथा भवति तथा फलकानि नमयेत्। नत[1] नमन कुर्यात्।

---

1 गत—A+B

पक्षनमनी सा पक्षाग्राणामप्येवमेव । तत्र श्लोकः—

तिलैष्षोडशभिन्यूंनं तिर्यक्स्ययात्षोडशाङ्गुलम् ।
तथा तथा चतुर्भ्यां च सप्तमाभ्यां च नामयेत् ॥

उपधाने चतस्रः पादेष्टका. पुरस्ताच्छिरसि ॥ (11)
अपरेण शिरसोऽप्ययं पञ्च ॥ (12)
पूर्वेण पक्षाप्ययावेकादश ॥ (13)
अपरेणैकादश॥ (14)
पूर्वेण पुच्छाप्यय पञ्च ॥ (15)
अपरेण पञ्च ॥ (16)
पञ्चदश पुच्छाग्रे ॥ (17)

**Kapardı** (Sūtra 11, 12, 13, 14, 15, 16 and 17)

उपदध्यादिति शेष । पुरस्ताच्छिरसि घोणाकारे एका । तस्याः पश्चात्तिस्रः । अपरेणेति—कर्णाभरणवत् । पादेष्टका एव । पूर्वेति–आत्मनि पक्षाप्यययो पुरस्तादेकादश अपरेण पक्षाप्यययावेकादश एता एव । पूर्वेति—पुच्छस्याप्ययस्य पुरस्तात् पञ्च पश्चाच्च पञ्च । पञ्चदशेति—पुच्छाग्रे पञ्चदश । ता एवैता षट्पञ्चाशत्पादेष्टका ॥

**Karavinda** (Sūtra 8, 9 and 10)

च वक्रता कार्येत्याह—

प्राथम्यात् सामर्थ्याच्च पक्षेष्टकाकरणीविषयमिदम् । ले यथा विभक्तस्य पक्षार्धस्य करणी पक्षकरणी । सा सपादाङ्गुलोनदशशताङ्गुला । तस्यास्सप्तम साष्टादशतिला पञ्चदशाङ्गुला ऋज्ववस्थिता प्रजम्भ्यमानस्य करणस्य यथा तिर्यङ्मानी भवति तथा तत्करण ऋज्वक्षणया प्रजम्भयेत्—प्रकर्षेण नमयेत् । पार्श्वमानो तु प्रजम्भ्यमानेऽपि करणे पुरुषचतुर्थमेव । प्रजम्भनिरत्रापि मानार्थ एव । एतदुक्त भवति—करणस्य एकस्या कोट्या रज्जुं प्रवध्य ता कोटिमितराग कोटिं प्रति प्रक्षणया बलेन कर्षयेत् । यथा आकर्षणे कृते द्वयो कोट्यो सन्निकर्षेण पार्श्वमान्योरन्तरालमृजुत्वेन पक्षकरण्यास्सप्तमं भवति न न्यून नाप्यधिक तथा प्रजम्भयेत् । तिर्यङ्मान्योरन्तरालमृज्ववस्थितमपि पुरुषचतुर्थमेव । अनेन तिर्यङ्मान्या ह्रास. क्रियते वक्रत्वाय क्षेत्रसमत्वाय च । अथवा साष्टादशतिल पञ्च-

दशाङ्गुल तिर्यङ्मानी कृत्वा त्रिंशदङ्गुल पार्श्वमानी च कृत्वा ताभ्या चतुरस्र विहृत्य तस्याक्ष्णयारज्ज्वा पक्षेष्टकाकरण प्रजम्भयेत् । एतदुक्तं भवति –उक्तप्रकाराक्ष्णयारज्ज्वधिका रज्जु मीत्वा तया पक्षेष्टकाकरणस्यैका कोटिं बध्वा ता कोटिं अन्या कोटिं प्रत्यक्ष्णया जम्भयेत्— नमयेत् । यथा तयो कोट्योरन्तराल एतदक्ष्णयारज्जुस्सम्भवति तथा नमयेदित्यर्थं । एव कृते अस्य करणस्यैकाऽक्ष्णयारज्जु सार्धद्व्यङ्गुलेन द्राघीयसी भवति । अन्या तेनैव ह्रसीयसी भवति ॥

व्याख्या द्वितीया यं कश्चिदुक्ता नाञ्जस्यभागिनी ॥ पक्षेष्टकाकरणस्य प्रजम्भनेन नमनविधिमुक्त्वा पक्षमध्यीयापक्षाग्रीयाकरणयोर्नमनसिद्ध्यर्थं तत्फलकाना नतिरुच्यते—पक्षनमनी—यया मात्रया पक्षो नम्यते सा पक्षनमनी । सा च पक्षमध्यलेखाया प्रथमनितोदात् पश्चिममात्रा । सा च पञ्चविंशतिनिवारि रपञ्चाशदङ्गुलेत्युक्ता । तस्यास्सप्तम सार्धाष्टतिल सप्ताङ्गुल । तेन फलकानि पक्षमध्यीयापक्षाग्रीयाकरणयोर्दीर्घानि यानि फलकानि तानि नमयेत—वक्रीकुर्यात् । अयमथ —यथा मध्ये कृतेन नमनेन पक्षमध्यीयाभागद्वय पक्षकरण्या सप्तम तिर्यङ्मानी पुरुषचतुर्थं च पार्श्वमानीत्युक्तप्रकार भवति । तथा द्विसप्तफलकयोर्मध्ये सप्तममात्र पक्षनमन्यास्सप्तमे । एतस्मिन् फलके नतिमेकस्मिन्नुदञ्च कुर्यात् ॥

तत्र श्लोका —

पक्षेष्टकाया करण तथा रज्ज्वा प्रजम्भयेत् ।
तस्य तिर्यग्यथा पक्षकरण्यास्सप्तम भवेत् ॥
पक्षमध्यीयाकरणे द्राघीय फलकद्वये ।
नमनीसप्तमेन स्यान्नतिस्सप्तममात्रके ॥
पक्षाग्रीयाकरणस्याप्येवमेव नमनक्रिया ।
सप्तमेऽत्र नतिस्तस्य भागोनेऽयो भवेदृजु ॥
साष्टादशतिल तिर्यग्यथा पञ्चदशाङ्गुलम् ।
भागान्तमिष्टकाना च तथा स्यान्नमनक्रिया ॥
प्रागस्येनै स्यादिमस्य करणस्य प्रजम्भनम् ।
फल षष्ठ पक्षकरणी एकद्व्यागो यथा भवेत् ।
द्वितीयस्य तृतीयस्य प्रष्टाना नते फलम् ।
चतुर्थस्य पक्षकरणी षष्ठ्या साष्टमे नति ॥

आपस्तम्बविषयमिद श्लोकद्वयम् ॥

पक्षेष्टका पञ्चभागास्त षट् च पादेष्टका अपि ।
[illegible] ॥

**Karavinda (Sūtra 11)**

उपधानकाले चतस्रः पादेष्टकाशिर (सि)सः पूर्वभागे पुरस्तादु-पदध्यात् । तासां चतसृणामेका पुरस्तात् बाह्यविशेषात् प्रागग्रा । ततः पश्चात्तिस्रः तासु मध्यमा प्रत्यगग्रा ॥

**Karavinda (Sūtra 12)**

शिरसोऽप्यस्य परतः पञ्च । प्रत्यग्रे द्वे । अपुच्छात्पादाप्यये इत्येव ॥

**Karavirda (Sūtra 13)**

पूर्वेण—पक्षाप्यययोः पुरतः । आत्मनैकादश । पञ्च प्रत्यागग्राः ॥

**Karavinda (Sūtra 14)**

अपरेण पश्चिमपक्षाप्यययोः पश्चादेकादश । षट्प्रत्यगग्राः ॥

**Karavinda (Sūtra 15)**

पुच्छाप्ययस्य पुरतः पञ्च । तासु प्रत्यगग्राः तिस्रः ॥

**Karavinda (Sūtra 16)**

पुच्छाप्ययस्य परतः पञ्च । तासु प्रत्यगग्रे द्वे ॥

**Karavinda (Sūtra 17)**

पुच्छाग्रे पञ्चदश उपधेयाः । तासु सप्त प्रत्यगग्राः । ता एताष्षट्-पञ्चाशत्पादेष्टकाः ॥

**Sundararaja (Sūtra 8 and 9)**

पक्षकरणी—पक्षार्धस्य तिर्यङ्मानी पादेननवशताङ्गुला । अर्धे तस्य सप्तम पञ्चदशाङ्गुलं साष्टादशतिल । तस्य करणस्य यथा तिर्यङ्मानी भवति पार्श्वमानी त्रिंशदङ्गुलैव तथाऽक्ष्णया रज्ज्वा करण[1] प्रजम्भयेत्—नमयेत् । एकः कर्णः चत्वारिंशदङ्गुलो द्वादशतिलान्वित । अपरः सप्तविंशको विंशतितिलयुक्तः । प्रारत्नि (प्रादेश) रहिते (द्वे) (त्वे) एकः कर्णः सार्धत्रयोविंशकः । अन्यः पञ्चतिलोनस्त्रिचत्वारिंशदङ्गुलः

1. दीर्घचतुश्रस्य समकर्णस्याकर्षणेन विषमकरणक्षेत्रसम्पादन प्रजम्भनम् ॥ पा ।

दशाङ्गुल तिर्यङ्मानी कृत्वा त्रिंशदङ्गुल पार्श्वमानी च कृत्वा ताभ्यां चतुरस्रं विहृत्य तस्याक्ष्णयारज्ज्वा पक्षेष्टकाकरणं प्रजम्भयेत् । एतदुक्तं भवति—उक्तप्रकाराक्ष्णयारज्ज्वधिका रज्जुं नीत्वा तया पक्षेष्टका-करणस्यैकां कोटिं बध्वा तां कोटिं अन्यां कोटिं प्रत्यक्ष्णया जम्भयेत्—नमयेत् । यथा तयोः कोट्योरन्तरालं एतदक्ष्णयारज्जुस्सम्भवति तथा नमयेदित्यर्थः । एवं कृते अस्य करणस्यैकाऽक्ष्णयारज्जुः सार्धद्वयङ्गुलेन द्राघीयसी भवति । अन्या तेनैव ह्रसीयसी भवति ॥

व्याख्या द्वितीया यं कश्चिदुक्ता नाञ्जस्यभागिनी ॥ पक्षेष्टका-करणस्य प्रजम्भनेन नमनविधिमुक्त्वा पक्षमध्यीयापक्षाग्रीयाकरणयोर्नमन-सिद्ध्यर्थं तत्करणकाना वनिरुच्यते—पक्षनमनी—यया मात्रया पक्षो नम्यते सा पक्षनमनी । सा च पक्षमध्यलेखाया प्रथमनितोदात् पश्चिममात्रा । सा च पञ्चविंशतिनिलाहि रपञ्चाशदङ्गुलेत्युक्ता । तस्यास्सप्तम सार्धा-ष्टतिल सप्ताङ्गुल । तेन फलकानि पक्षमध्यीयापक्षाग्रीयाकरणयोर्दीर्घानि यानि फलकानि तानि नमयेत्—वक्रीकुर्यात् । अयमर्थः —यया मध्ये कृतेन नमनेन पक्षमध्यीयामाग्द्वय पक्षकरणया सप्तम तिर्यङ्मानी पुरपचतुर्थं च पार्श्वमानीत्युक्तप्रकार भवति । तथा द्विसप्तफलकयोर्मध्ये सप्तममात्र पानगन्यास्सप्तमे र एतस्मिन् फलके नतिमेकस्मिन्नुदञ्च कुर्यात् ॥

तत्र श्लोका —

**Karavinda** (Sutra 11)

उपधानकाले चतस्रः पादेष्टकाश्शिर (सि)सः पूर्वभागे पुरस्तादुपदध्यात् । तासां चतसृणामेका पुरस्तात् बाह्यविशेषात् प्रागग्रा । ततः पश्चात्तिस्रः तासु मध्यमा प्रत्यगग्रा ॥

**Karavinda** (Sutra 12)

शिरसोऽप्यस्य परतः पञ्च । प्रत्यग्रे द्वे । अपुच्छात्वादाप्यये इत्येव ॥

**Karavinda** (Sutra 13)

पूर्वेण—पक्षाप्ययमो. पुरतः । आत्मनैकादश । पञ्च प्रत्यागग्राः ॥

**Karavinda** (Sutra 14)

अपरेण पश्चिमपक्षाप्ययमोः पश्चादेकादश । षट्प्रत्यगग्राः ॥

**Karavinda** (Sutra 15)

पुच्छाप्ययस्य पुरतः पञ्च । तासु प्रत्यगग्राः तिस्रः ॥

**Karavinda** (Sutra 16)

पुच्छाप्ययस्य परतः पञ्च । तासु प्रत्यगग्रे द्वे ॥

**Karavinda** (Sutra 17)

पुच्छाग्रे पञ्चदश उपधेयाः । तासु सप्त प्रत्यगग्राः । ता एताष्षट्पञ्चाशत्पादेष्टकाः ॥

**Sundararaja** (Sutra 8 and 9)

पक्षकरणी—पक्षार्धस्य तिर्यङ्मानी पादोननवशताङ्गुला । अर्धं तस्य सप्तम पञ्चदशाङ्गुलं माष्टादशतिल । तस्य करणस्य यथा तिर्यङ्मानी भवति पार्श्वमानी त्रिंशदङ्गुलैव तथाऽक्ष्णया रज्ज्वा करण[1] प्रजम्भयेत्—नमयेत् । एकः कर्णः चत्वारिंशदङ्गुलो द्वादशतिलान्वितः । अपरः सप्तविंशको विंशतितिलयुक्त । आरत्नि (प्रादेश) रहिते (द्वे) (त्वे) एकः कर्णः साधंत्रयोविंशकः । अन्यः पञ्चतिलोनत्रिचत्वारिंशदङ्गुलः

1. दीर्घचतुरश्रस्य समकर्णस्याकर्षणेन विषमकरणक्षेत्रसम्पादन प्रजम्भनम् ॥ पा ।

इष्टकाव्यासश्च त्रयोदशाङ्गुलस्त्रयोदशतिलयुक्तः । अथ पक्षाग्रीयापक्षमध्ययोर्नमनमाह—

Sundararaja (Sutra 10)

पक्षनमनी—पुरुषमात्री । तस्याः सप्तमेन पक्षाग्रीयापक्षमध्ययोः पक्षेष्टकांशस्य तिर्यक्फलकानि नमयेत् । तस्य साष्टादशतिलपञ्चदशाङ्गुलव्यासस्य पक्षेष्टकांशस्य तिर्यक्फलके यथा सपञ्चतिले सप्तदशाङ्गुले भवतः तथा फलकानि तक्षेत् । द्वे पक्षष्टके पार्श्वसहिते पक्षमध्यीया षडश्रिः पक्षेष्टकामुत्तरपूर्वदीर्घकर्णा भूमौ लिखित्वा तस्या दक्षिणतः त्रिंशदङ्गुलं समचतुरश्रं कृत्वा तस्य दक्षिणपूर्वमर्धं अ (पूर्वम) क्ष्णया जह्यात् । सा पक्षाग्रीया पञ्चकोणा । अत्राणूकाः पञ्चदशभागीयाना स्थान इति वक्ष्यमाणत्वात् अणूकसञ्ज्ञे द्वे करणे कार्ये । त्रिंशदङ्गुले द्वे समचतुरश्रे दक्षिणोत्तरे लिखित्वा दक्षिणस्य दक्षिणपूर्वमर्धमक्ष्णया निरस्येत् । उत्तरस्यांतरापर । एतदेकमणूकं । त्रिकोणं द्वितीयं । तस्य षट्षड्गुलमेकं फलकं । अन्ये चतुर्थसविशेषे ॥

अथोपधान—

Sundararaja (Sutra 11)

मग्रणीका । तस्याः पश्चात्तिस्र. ।

Sundararaja (Sutra 12)

पादेष्टकाः । उदीची रीतिः ।

Sundararaja (Sutra 13)

उदीच्येव रीतिरात्मन्येव ।

Sundararaja (Sutra 14 15, 16 and 17)

एता षट्पञ्चाशदप्युदगायताः ॥

इत्येकोनविंशः खण्डः

## अथ विंशः खडः

चतस्रश्चतस्रः पक्षाग्रीयाः पक्षाग्रयोः ॥ (1)

पक्षाप्यययोश्च विशयाः ॥ (2)

ता आत्मनि चतसृभिश्चतसृभिष्पोडशीभिर्यथायोगं पर्युपदध्यात् ॥ (3)

**Kapardi** (Sutra 1, 2 and 3)

विपर्यस्य कारिता उत्तरे पक्षे। चतस्रश्चतस्रो विशयाः । पक्षसन्ध्यो-र्दक्षिणपक्षाप्यये विपर्यस्य कारिता उत्तरे पक्षेष्टकामात्रम् । पक्षयोरात्म-न्यर्धेष्टकामात्रं । ता इति विशयाः प्रत्ययमृश्यन्ते । आत्मनि चतसृभिश्च-तसृभिष्पोडशीभिः विपर्यस्य कारिताः। दक्षिणपक्षाप्ययस्या यथा तैरेता-भिश्चतसृभिरुपदध्यात् तथा चतसृभिरुत्तरपक्षाप्ययस्या. । प्रतीत्यस्मिन्नर्थे परिशब्दः ॥

चतस्रश्चतस्रः पक्षमध्यीयाः पक्षमध्ययोः ॥ (4)

पक्षेष्टकाभिः प्राचीभिः पक्षौ प्रच्छादयेत् ॥ (5)

**Kapardi** (Sutra 4 and 5)

पक्षमध्ये भवा वक्रभूताश्चतस्रो दक्षिणे पक्षमध्ये चतस्र एवोत्तर-पक्षमध्ये। पक्षेष्टका उक्तलक्षणाः । ताभिः प्रागायताभि. पक्षौ प्राच्छाद-येत्। पक्षयोरुपदध्यात्। विपर्यस्य कारिताश्चत्वारिंशत् ॥

अवशिष्टं षोडशीभिः प्रच्छादयेत् ॥ (6)

**Kapardi** (Sutra 6)

शिष्टमस्मिन्क्षेत्र षोडशीभिः उपदध्यात् ॥

अन्त्या बाह्यविशेषा अन्यत्र शिरसः ॥ (7)

अपरस्मिन्प्रस्तारे पुरस्ताच्छिरसि द्वे षोडश्यौ बाह्यविशेषे उपदध्यात् ॥ (8)

**Kapardi** (Sutra 7 and 8)

अन्ते भवा अन्त्याः—अन्तचन्तस्थाः । ता बाह्यविशेषाः बाह्यतस्स-

विशेषा । अन्यत्र शिरस —शिरो वर्जयित्वा । आत्मनि मध्ये षट् प्राच्यः षट् प्रतीच्य । आत्मनि रीतिद्वयम् । अवशिष्टं पुच्छे च । तासु यदि षोडशीभिरेवोपधीयन्ते सङ्ख्या पूर्यते किं तु भिद्यते । चतसृष्वपि रीतिषु भेदो वर्जनीय । तस्मादर्धाश्चोपधेया । कथमनुच्यमाना उपधीयन्ते नोच्यमाना ? उक्ता एव 'यच्चतुरस्र मचस्रि वा सम्पद्येतार्धेष्टकाभि पादेष्टकाभिर्वा प्रच्छादयेत्' इति वदता । ननु यद्यर्धाश्चोपधीयन्ते अतिरिच्यते सङ्ख्या, नैष दोष, ऊनाधिकप्रस्तार इत्युक्त पूर्वस्मिन् पटले । पुच्छे रीतिद्वयम् । तिस्रस्तिस्रोऽर्धेष्टका उपधाय षोडश्य पुनश्चोत्तरे पार्श्वे एकैकोऽर्ध । एवमात्मनि द्वयो रीत्योर्दक्षिणतस्तिस्रोऽर्धेष्टका [1] । ततो द्वे षोडश्यौ एकैकोर्धं । शिरसि तिर्यग्द्वे षोडश्यौ । एवमष्टोत्तर शतद्वय । अपरस्मिन्निति—पूर्वभागे द्वे षोडश्यौ बाह्यतस्सविशेषे घोणाकारे उपदध्यात् । विपर्यस्य कारिता दक्षिणत ।

तेऽपरेण द्वे विशये अभ्यन्तरविशेषे ॥ (9)

द्वाभ्यामर्धेष्टकाभ्या यथायोग पर्युपदध्यात् ॥ (10)

Kapardi (Sutra 9 and 10)

ताभ्या पश्चादात्मनि अर्धेष्टकामात्र , शेष शिरसि । अभितो युज्यते यथा तथोपदध्यात् । चतस्र एता विशया ॥

Karavinda (Sutra 1)

प्रत्येक चतस्र ॥

Karavinda (Sutra 2)

चकारेण पक्षाग्रीया अनुकृष्यन्ते । पक्षाप्ययो चतस्रश्चतस्र पक्षाग्रीया विशयाः स्यु । ता सप्तमेन पक्षयो शेरते । अवशिष्टे चतुर्थेनात्मनि ॥

Karavinda (Sutra 3)

आत्मनि प्रविष्टपक्षाग्रीयापरितश्चतसृभि [2] षोडशीभिर्यथा युज्यन्ते तथोपदध्यात् । पक्षाग्रीयाणां च यथा विशेषाम्सहिता भवेयुस्तथोपदध्यादित्यर्थ ॥

---

1 दक्षिणत उत्तरतश्च तिस्रोऽर्धेष्टकाः ।

2 ता पक्षाग्रीया आत्मनि आत्मप्रदेशे चतसृभिश्चतसृभि —C

Karavinda (Sutra 4)

यथायोगमित्येव । गतम् ॥

Karavinda (Sutra 5)

यथायोगमित्येव । चत्वारिंशता चत्वारिंशता पक्षेष्टकाभिः प्रागायताभिः पक्षौ प्रच्छादयेत् ॥

Karavinda (Sutra 6)

अवशिष्टं अनुपहितमग्निक्षेत्र पुच्छावशिष्टं षोडशीभिः प्रच्छादयेत् । पुच्छमध्ये द्वे रीत्यौ । पूर्वाश्चतुरिष्टकाः । पश्चिमाष्पडिष्टकाः । द्वे द्वे विशेषसहिते स्यातां । ता एता दश आत्मनि । आत्ममध्ये तिस्रो रीतयः । प्राच्यश्चतुरिष्टका आत्मन्येव । पश्चात्पुरस्ताच्चोदीच्यौ द्वे रीत्यौ चतुरिष्टके । ता विंशतिः । शिरसि द्वे षोडश्यौ ॥

Karavinda (Sutra 7)

अन्ते उपधेया अन्त्याः । पुच्छे चतस्रः आत्मनि चतस्रः । बाह्यविशेषाः—बहिर्गतविशेषाः । न चात्र सङ्ख्यापूरणं; सङ्ख्यायाः स्थाने द्विशतविनियोगात् । तथाहि—षट्पञ्चाशत् पादेष्टकाः—अष्टावष्टौ पक्षाग्रीयाश्चत्वारिंशच्चत्वारिंशत्पक्षेष्टकाः । अष्टौ । पक्षमध्यीयाश्चत्वारिंशत् षोडश्यः । एवं द्विशतं ॥

Karavinda (Sutra 8)

द्वितीये प्रस्तारे शिरसः पूर्वभागे प्रागग्रे बाह्यविशेषे द्वे षोडश्यौ ॥

Karavinda (Sutra 9)

तयोष्षोडश्योः पश्चात् प्रागग्रे शिरस्यर्धपादेष्टकामात्रे विशये विशेषेणात्मनि । एवं विशये द्वे षोडश्यावन्तविशेषे ॥

Karavinda (Sutra 10)

ते इत्येव । ते विशये इष्टके द्वाभ्यामर्धेष्टकाभ्यां विशयाभ्यां यथायोगं परिगृह्णीयात् । षोडश्योरर्धेष्टकयोश्च यथा विशेषास्सहिता भवेयुः तथोपदध्यादित्यर्थः ॥

Sundararaja (Sutra 1 and 2)

तासामर्धेष्टकामात्राण्यात्मनि ।

Sundararaja (Sutra 3)

दक्षिणाग्राभि दक्षिणाध्ययस्था उदीचीरितरा ॥

Sundararaja (Sutra 4 and 5)

अशीत्या प्रागायताभि ॥

Sundararaja (Sutra 6)

अणूका पञ्चदशभागीयाना स्थान इति वक्ष्यमाणत्वात् अणूकाभि सह प्रच्छादनभेदपरिहाराय तत्र पुच्छात्मशिरस्सु पूर्वनिहिताभि पादरीतिभिस्सह षोडश रीतय उदीच्य । पुच्छाग्र पादरीतिरुक्ता । द्वितीयस्या पार्श्वयोरणूके मध्ये चतस्र षोडश्य । एव तृतीयापष्ठीत्रयोदश्योऽणूकाभिरेव द्विप्रकाराभि सन्ध्यन्तराले द्वादश षोडश्य प्रगायता शिरसोऽपरार्धे द्व षोडश्यौ द्विशत प्रस्तार ॥

Sundararaja (Sutra 7)

च शब्दोऽत्राध्याहर्तव्य । द्वाभ्या विशेषा । अन्तेषु या उपधेयास्ता बाह्यविशेषा षोडश्यो भवेयु । एतच्चात्मन्येव । पक्षयोरशक्यत्वात् पुच्छभेदसम्भवाच्च । तस्मादात्मन श्रोणप्रसेऽत्रष्टौ षोडशीर्दक्षि (णाग्रा) णा उदगग्राश्चोपदध्यात् । एकैकत्र द्वद्वे । अस्मिन् पक्षे यच्चतुरस्र त्र्यस्रि वेति वक्ष्यमाणाभि पाद्याभि सङ्ख्यापूरण । तत्र पुच्छाप्ययस्य पुरस्ताद्द्व अर्धे शिरसोऽप्ययस्य पश्चाद्द्वे अर्धे । तासा मध्ये चतुर्विशति पाद्या । पार्श्वयो षट् षट् षोडश्य । यद्वा एता पाद्या षोडशीश्च षट्त्रिशतमुद्धृत्य षट्त्रिशद (र्ध्या) र्धा निधेया । तत्र दक्षिणपार्श्वस्था प्रागुत्तरविशेषा विपरीता उत्तरा । पुच्छमध्ये षट् षोडश्य प्रागायता । तत षा (तदग्रा) श्वयोश्चतस्रोऽर्धेष्टका । शेष पूर्ववदेव । अ (त) त्र आत्मनि प्राच्य पञ्चरीत्य उदीच्यो वा अष्टौ ॥

Sundararaja (Sutra 8 and 9)

एते अपि प्रागग्रे ।

Sundararaja (Sutra 10)

तयो षोडश्योर्मध्ये शिरसोऽप्यये द्वे अर्धेष्टके इत्यर्थ ।

बाह्यविशेषाभ्यां परिगृह्णीयात् ॥ (11)

Kapardi (Sutra 11)

उभयत्र तृतीयापदश्रवणात् विध्यन्तरमेतत् न पूर्वयोर्विशेषणम् । चशब्दोऽध्याहर्तव्यः बाह्यविशेषाभ्यां चेति । बाह्यविशेषाभ्यां चार्धेष्टकाभ्यां परिगृह्णीयात् । शिरस्यनवकाशादात्मन्येव ।

आत्मनः करणीनां सन्धिषु षोडश्यो बाह्यविशेषा उपदध्यात् ॥ (12)

Kapardi (Sutra 12)

आत्मनः करण्यः, तासां सन्धिषु श्रोण्यंसेषु चतस्रः षोडश्यो बाह्यविशेषाः प्रत्यन्तविशेषाः ॥

चतस्रश्चतस्रोऽर्धेष्टकाः पक्षाग्रयोः ॥ (13)

Kapardi (Sutra 13)

नखाकारेष्वर्धेष्टकाश्चोपधेयाश्चतस्रश्चतस्रः ॥

पक्षेष्टकाभिरुदीचीभिः पक्षौ प्रच्छादयेत् ॥ (14)

Kapardi (Sutra 14)

उदगायताभिः पक्षयोरुपदध्यात् । षट्पञ्चाशद्विपर्यस्य कारिताः ।

तिस्रस्तिस्रोऽर्धेष्टकाः पुच्छपार्श्वयोः ॥ (15)

Kapardi (Sutra 15)

तिस्रस्तिस्रोऽर्धेष्टकाः पुच्छपार्श्वयोर्बाह्यविशेषाः ॥

अवशिष्टं षोडशीभिः प्रच्छादयेत् ॥ (16)

Kapardi (Sutra 16)

अवशिष्टमग्निक्षेत्र षोडशीभिः प्रच्छादयेत् ॥

अन्त्या बाह्यविशेषा अन्यत्र पुच्छात् ॥ (17)

Kapardi (Sutra 17)

गतमेतत् । पुच्छं वर्जयित्वा ।

Karavinda (Sutra 11)

ते इत्येव । ते एव षोडश्यौ बाह्यविशेषाभ्यामन्याभ्यामर्धाभ्या परिगृह्णीयात् । एते अर्धे शिरस्यनवकाशादात्मनि भवत । एतदुक्त भवति—विशयषोडश्यो पुरस्ताद्विशयभूते बर्हिर्विशेष द्व अर्धे तथाऽऽत्मनि विशयषोडश्योर्दक्षिणत उत्तरतश्च बर्हिर्विशेषे अन्ये अर्धे इति ॥

Karavinda (Sutra 12)

आत्मन करण्य आत्मकरण्य । तासा सन्धिषु श्रोण्यसेषु षोडश्य चतस्र । सर्वत्र छान्दसो विभक्तिव्यत्यय । आत्मनि पक्षाप्यययोस्समांपषु बाह्यविशेषाश्चतस्र षोडशीरुपदध्यात् । अन्त्या बाह्यविशेषा इति वक्ष्यमाणेऽपि बाह्यविशेषग्रहण सङ्ख्यापूरणाय । पादाना चार्धाना च उपधानार्थं षोडशीनामुद्धरणे प्रसक्ते आसामुद्धरण मा भूदित्येवमर्थम् ॥

Karavinda (Sutra 13)

प्रतिपक्ष चतस्रोऽर्धेष्टका बाह्यविशेषा इत्येव ॥

Karavinda (Sutra 14)

पक्षयोरुदीच्य पक्षेष्टका सप्त रीतय ॥

Karavinda (Sutra 15)

बाह्यविशेषा एव ॥

Karavinda (Sutra 16)

अवशिष्टमात्मनि त्रयस्त्रिंशत् षोडशीस्थान पुच्छद्वादशषोडशीस्थानम् ॥

Karavinda (Sutra 17)

अन्त्यास्सर्वा बाह्यविशेषा भवेयु पुच्छादन्यत्र । पुच्छे त्वन्त्याष्षोडश्योऽभ्यन्तरविशेषा एव ।

Sundararaja (Sutra 11)

ते षोडश्यौ बाह्यविशेषाभ्यां द्वाभ्यामर्धेष्टकाभ्या दक्षिणत उत्तरतश्चात्मनि परिगृह्णीयात् ॥

Sundararaja (Sutra 12)

अष्टास्रे रात्मनोऽन्यौ करण्य । तत्र दक्षिणोत्तरपार्श्वचरणयो श्रोण्यसचरणैभि सह चत्वार सन्धय । तत्र श्रोणिसन्ध्योर्द्वे प्रत्यगग्र

पोडश्यौ । असंसन्ध्योर्द्वे प्रागग्रे । एव चतस्रष्पोडश्यः । ये तु चत्वार पूर्वापर (कोट्यो ) करण्योस्सन्धय तत्र पूर्वयोस्तावद्बाह्यविशेषाभ्या परिगृह्णीयादित्यर्थश्रुके उक्त । अपरयोरपि पूर्वसादृश्यार्थं भेदपरिहारार्थं चाध्यर्धे एवोपधेये ।

**Sundararaja (Sutra 13 and 14)**

एकैक षट्पञ्चाशता ।

**Sundararaja (Sutra 15)**

बाह्यविशेषा ।

यन्नुरस्रं त्र्य (त्रि) स्र वा सम्पद्येतार्धेष्टकाभि· पादेष्टकाभिर्वा प्रच्छादयेत् ॥ (18)

**Kapardi (Sutra 18)**

सर्वत्र षोडश्य एव शेरते । यदि तथा क्षिप्येरन् भिद्येत सर्वत्र। अतो भेदपरिहाराय यत्ने क्रियमाणे त्रिकोण चतुरस्र वा प्रकारद्वय सम्पद्यते । पूर्वस्मिन् प्रस्तारे चतुरस्रं सम्पद्यते त्रिकोण च । इह त्रिकोणमेव । तत्र अर्धेष्टकाभि पादेष्टकाभिर्वा प्रच्छादयेत् उपदध्यात् । पुच्छाप्यये चतस्र षोडश्यो विशया । प्राच्यौ द्वे प्रतीच्यौ द्वे । तासा पश्चात् दश षोडश्य । तिर्यक्पुच्छेऽपि । विशयानामभितो द्वावर्धौ द्वावात्मनि[1] । तासा पुरस्ताच्चतस्र षोडश्य प्राच्यश्चतुर्थ्यं [2] प्रत्यर्पिता । तासां पुरस्तादष्टादश षोडश्यो दक्षिणायता उदगायताश्च पुरस्ताद्विपर्यस्ता षडुत्तरे पार्श्वे । तासा पुरस्ताच्चतस्रोऽर्धेष्टका । तासा पुरस्ताच्चतस्र षोडश्य प्रतीच्यस्ताभि प्रत्यर्पिता । तासा पुरस्ताद्द्वे षोडश्यौ नानाग्रे प्राच्यौ । तयोर्मध्ये द्वावर्धौ । आत्मन्यर्धपादेष्टकामात्री[3] । आत्मनि द्वावर्धौ विशयावभित । अर्धषोडश्यौ सहितौ[4] । एव द्वादशोन शतद्वयम् । इह केचिद्दीर्घायुपरसूत्रमेतदनादृत्य स्वमनीषिकया करणान्तरमुत्पाद्य सङ्ख्यापूरणमेव कुर्वन्ति । किं तत्र तेषामसत्यम्[5] ? वय तु सूत्रकारमतानुसारेणोक्त[6] गृह्णीम ।

**Karavinda (Sutra 18)**

एव क्षेत्रपूरण कृत्वा प्रकृतित प्राप्त सङ्ख्यापूरण एव कर्तव्यमित्याह—

---

1 द्वावर्धावात्मनि—B
2 चतुर्भिरर्धं —B
3 मात्रे —B
4 आत्मनि षोडश्यौ यदभित —B
5 तेषा सत्य—A&B
6 चानुक्त न—A

एव षोडशीभि प्रच्छाद्यमाने सङ्ख्यापूरणाय कासुचिदुद्धृतासु च यत् क्षेत्र चतुरस्र त्र्यश्रि वा सम्भवेत् तत् क्षेत्रमर्धेष्टकाभि पादेष्टकाभिर्वा प्रच्छादयेत्—ताभिस्सङ्ख्या पूरयेदित्यर्थ । ननु प्रच्छादयेदिति वचनेन सङ्ख्यापूरण कथम् ? उच्यते । तत्तदग्नौ प्रच्छादनविध्यनन्तर सङ्ख्या पूरयेदिति विधानात् । इह च षोडशीभि प्रच्छादिते सङ्ख्याया असमाप्ते स्तत्पूरणापेक्षया द्वितीयप्रच्छादनवचन सङ्ख्यापूरणार्थमेवेति गम्यते । किञ्च द्विविध प्राकृतोऽग्नि समचतुरस्रमात्रष्टका असमचतुरस्रमात्रष्टकाश्च । प्रथमे चतुरस्राग्नौ पञ्चदशभागीयाभिरर्धेष्टकाभिश्च सङ्ख्या पूरिता । द्वितीये पादेष्टकाणूकाषड्भागीयाभिश्च पूरिता । तदिहापि पादा अर्धा अणूकाश्च विहितास्सन्ति । तस्मात् पादेष्टकाभिरर्धेष्टकाभिश्च सङ्ख्या पूरिता द्वितीये षोडशीभिश्च यथायोग सङ्ख्यापूरण युक्तमिति गम्यते । किञ्च सङ्ख्यापूरणस्य न्याय्यत्वे सति अत्रोपदिष्टेष्टकाभ्योऽन्याभिस्सङ्ख्यापूरणस्याशक्यत्वात् पादाभिरर्धाभिश्च सुकरत्वात्ताभिरेव सङ्ख्यापूरण युक्ततरम् । अत प्रच्छादितासु काश्चिदुद्धृत्य पादार्धषोडशीभि-यथायोग यावत्सङ्ख्यमुपधेया इति ॥

Sundararaja (Sutra 16)

यच्चतुरस्र त्र्यश्रि वेति पाद्यार्धाभि सङ्ख्यापूरण, तत्रा (र्ध्या) र्धाभि पूरणपक्ष आत्मनि प्राच्य षड् रीतय । तत्र दक्षिणोत्तरयोमध्ये षट षड(र्ध्या) र्धा । द्वितीयस्या पश्चात्पुरस्ताच्च द्व अर्धे उक्ते । तयो समीपे द्व षोडश्यौ प्रागायते । तयोमध्येऽष्टावर्धेष्टका । एवमेव पञ्चमी रीति । प्रागायताभि षोडशीभिर्मध्यरीतौ द्वे । पुच्छाप्यये द्वे षोडश्यौ । प्रत्यगग्रपुच्छ पञ्चदशाङ्गुलेन प्राप्ते तयो पश्चाद्द्वे प्रागग्रे आत्मान पञ्चदशाङ्गुलेन प्राप्ते तयो पश्चाच्चतस्र षोडश्य उदगायता । पुच्छाग्रे दक्षिणतोऽधष्टा पूर्वमुक्ता । तस्या उदक् षोडश्युदगग्रा तस्या उदग्द्वे अर्धे ततो द्वे षोडश्यौ ततो द्व अ (र्ध्ये) वे तत षोडशी । ततो (र्ध्या) र्धा पूर्वमुक्ता । एव द्विशत प्रस्तार । पाद्याभि पूरणपक्ष आत्मनि दक्षिणपार्श्वे द्वादशार्ध्या उद्धृत्य वा अष्टौ चतस्र षोडश्यो निधेया । एवमुत्तरपार्श्वेऽपि । अस्मिन्नपि प्रस्तारे प्रकारान्तरमाह—

Sndararaja (Sutra 17)

अत्रापि वाशब्दोऽध्याहार्य । यथा पूर्वस्मिन् प्रस्तारे अन्त्या बाह्यविशेषा इति षोडश्यो विहिता तथाऽत्रापि श्रोण्यसेषु द्व द्वे षोडश्यौ प्रागग्रे प्रत्यगग्रे चेत्यष्टौ निधेया । एतदप्यशक्यत्वात्पक्षयोर्न भवति । अस्मिन्

पक्षे शिरोऽप्यये अर्धेनोपधेये। पुच्छाप्ययेऽप्यर्धे द्वे उपधेये। पार्श्वेस्था-श्चतस्रो रीतयोऽर्धेष्टकाभिः पूरणीयाः। मध्यमरीत्योः षोडशषोडश्यः पुच्छाग्र-मध्ये षट् षोडश्यः। ततः पूर्वस्या मध्ये द्वे षोडश्यौ। शेषेऽर्ध्याः। ततः पूर्वस्यां मध्ये द्वे प्राच्यौ षोडश्यौ। शेषं पूर्ववदेव। एष द्विशतः। पाद्याभिः पूरणपक्षेऽपि पूर्ववत्सर्वत्राविशेषात् पाद्याभिः सम्भवेऽपि विपरीतविशेषा उपधेयाः। केचित्तु अन्त्या बाह्यविशेषा इति पूर्वमुक्तम्। तयोरेव प्रस्तारयोः शेषमाहुः। तदनुपपन्नं, अन्त्यानां षोडशीनां अनियतविशेषाणामभावात्। उभयस्मिन् प्रस्तारे प्राहुः अन्त्या इति न केवलं षोडश्य एव गृह्यन्ते। अपितु याः काश्चान्त्या उपधेयाः ताश्च बाह्यविशेषाः कार्या इतिः। तेषा शिरसि द्वे षोडश्यौ बाह्यविशेषे बाह्यविशेषाभ्यां परिगृह्णीयात्। आत्मकर-णीनां सन्धिषु षोडश्यो बाह्यविशेषा इति बाह्यविशेषशब्दकं अनर्थकं स्यात्। अन्यत्र शिरसोऽन्यत्र पुच्छाविति च विरुध्येते। शिरसि पाद्यानां पुच्छपार्श्व-योरर्ध्या (र्धा) नां च बाह्यविशेषाणामेवेष्टत्वात्॥

Sundararaja (Sutra 18)

प्रस्तारद्वयसाधारणमिदम्। षोडशीभिः पूरयितुमशक्येपि यावद्द्वि-शतपूर्ति अर्धाः पाद्या उपधेयाः। तत्राऽर्ध्यारहिताभिः पाद्याभिः सङ्ख्यां पूर-यितुमशक्यत्वात्। तस्मादर्ध्याभिः समिश्राभिर्वा पाद्याभि. पूरणम्। तत्प्र-कारश्च पर्वमेवोक्तः॥

अणूकाः पञ्चदशभागीयानां स्थाने॥ (19)

व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत्॥ (20)

*Kapardi* (*Sutra 19 and 20.*)

स्थानशब्दः प्रयोगवाची। अणूकाश्चतुर्भागीयाः सङ्ख्यापूरणे चोदिताः पञ्चदशभागीयाश्च सङ्ख्यापूरणे चोदिता इति यावत्। अस्मिन् प्रस्तारे सङ्ख्या न पूरिता सूत्रकारेण। तत्र ताभिस्सङ्ख्या पूरयितव्या यदि ताभिः पूर्यते। अस्मिन्नग्नौ तावता न शक्यते अणूकाभिस्सङ्ख्या-पूरणम्। शक्यते तु प्रकृतौ। तस्मात्प्रकृत्यर्थो योगः। तत्र शक्यते द्वितीये प्रस्तारे ताभिः पूरयितुम्। तत्र द्विशतपूरणमवश्यं कर्तव्यम्। प्रतिप्रस्तारं पूरयेदिति वचनात्। इह तु सहस्रसङ्ख्यैव पूरयितव्या इत्युक्तं पूर्वस्मिन् पटले। तस्मात्प्रकृतौ योगः। तत्र श्लोकाः—

पक्षेष्टकानां करणं विपर्यस्यार्धमिष्यते।
पक्षाग्रीयास्तथैवार्धं विपर्यस्यैव कारयेत्॥

विपर्यस्चैव कर्तव्याष्षोडश्य षोडशीद्वयम् ।
साहस्रेऽथ द्विसाहस्रे पञ्चषष्टिं विदुर्बुधा ॥

उपधाने यथासूत्र यथा चात्मनि पक्षयो ।
पुच्छे शिरसि शिष्टे च षोडशीना विदुर्बुधा ॥

षट्प्राच्य षट्प्रतीच्यश्च आत्मनि द्वादश क्षिपेत् ।
शीर्ष्णिद्वय क्षिपेत्तिर्यगुक्ता एव चतुर्दश ॥

शिष्ट रीतिद्वय पुच्छे तथा चात्मन्यपि द्वयम् ।
षोडशार्धेष्टकास्त स्तु क्षिपेच्च त्रिषु रीतिषु ॥

एकैकमुत्तरे पार्श्वे तिस्रस्तिस्रस्तु दक्षिणे ।
शिष्टे तिर्यग्दशैव[1] स्यादष्टोत्तरशतद्वयम् ॥

पुच्छाप्यये तु विशयाश्चतस्रष्षोडशी क्षिपेत् ।
षोडश्यावप्यये प्राच्यौ ते चाग्रे शिरसि क्षिपेत् ॥

मध्ये तयोश्च द्वावर्धौ चतस्रो विशया क्षिपेत् ।
आत्मनश्शेषे[2] द्वावर्धौ षोडश्यौ शिरसि क्षिपेत् ।

अन्यत्सर्वं यथासूत्र द्वादशोन शतद्वयम् ।
आत्मनो दक्षिणे पार्श्वे चतस्रो दक्षिणायता ॥

द्वितीये चोत्तरे पार्श्वे षड् द्वे श्रोण्यसयोरपि ॥
शिरसश्चाप्यये चैका शिरस्यपि[3] च दक्षिणा ॥

एता निधेयाष्षोडश्यो विपर्यस्तास्तरे द्वये ।

**Karavinda (Sūtra 19)**

परिभाषेयम् । पञ्चदशभागीया प्रथमचतुरस्रे उक्ता । तासां स्थाने कार्यसङ्ख्यापूरणे अणूका भवेयु । तस्या परिभाषाया अत्रोपदेश कथम्? इहोपदिष्टा षोडश्योऽपि क्षेत्रसाम्यादणूकाशब्देन ग्राह्या भवेयु इत्येवमर्थम् । तेन अणूकाभिश्चतुरस्रऽग्नौ सङ्ख्यापूरणम् । इह तु षोडशीभिश्चिति सिद्धम् । केचिच्चतुरस्र श्यस्रि वा सम्पद्यते इत्येतदपि परिभाषामिच्छन्ति । तेन तत्रतत्राग्नौ तदपेक्षया ताभिरपि सङ्ख्यापूरणं मन्यते । अत्र पुन प्रच्छादयेदिति वचन प्रच्छादनेऽपि चेता यथा भवेयुरित्येवमर्थम् । तेन तत्रतत्राग्नौ सति सम्भवे सदृशा चापेक्षाया ताभिस्सहैभिरपि प्रच्छादन स्यात् । उपधानक्रम द्वितीयचित्यां शिरसि प्राङ्मुखे बाह्यविक्षेपे द्वे षोडश्यौ

---

1 द्वितीय—B 2 स्थिमिता आत्मनश्शेषे—B

3 शिरसापि—A

उपदध्यात् । तयोः पश्चात् प्राङ्मुखे बाह्यविशेषे विशये द्वे अर्धे । तयोः पश्चात्तद्विशेषश्लिष्टविशेषे द्वे षोडश्यौ विशये आत्मनि । तयोर्दक्षिणस्या दक्षिणतो बाह्यविशेषमेकमर्धम् । उत्तरस्या उत्तरतश्च बाह्यविशेषमेकमर्धम् । तयोर्दक्षिणत उत्तरतश्च बाह्यविशेषेणैकमर्धम् । ततः पश्चादात्मनि प्राच्यष्षड् रीतयः । तत्र दक्षिणस्या रीत्या पुरस्तात् बाह्यविशेषा प्रागग्रैका षोडशी । पश्चाच्च बाह्यविशेषा प्रत्यगग्रैका । तयोर्मध्ये षडर्धेष्टकाः । तासां तिस्रः प्रतीच्यस्तिस्र उदीच्यः । द्वितीयस्या रीत्या पश्चात् बाह्यविशेषेण दक्षिणामुखे द्वे अर्धे । तत्पुरस्तादर्धविशेषयुक्तविशेषात् प्रत्यङ्मुखैका षोडशी । तस्याः पुरस्तात् षडर्धाः । तासां तिस्रस्तिस्रः प्राच्यः प्रतीच्यश्च । तत्पुरस्तादुत्तरतो विशेषा प्रागग्रैका षोडशी । तत्पुरस्तात्तद्विशेषश्लिष्टविशेषमेकमर्धम् । तत्पुरस्तात् पूर्वोपहितमर्धस्त्येवेति द्वादशेष्टका एषा । तृतीयस्या रीत्या शिरोऽप्ययषोडश्याः पश्चादारभ्य आपुच्छाप्ययमष्टौ षोडश्य उपधेयाः । तासां चतस्रः प्राच्यश्चतस्रः प्रतीच्यः । एवमेवोत्तरास्तिस्रो रीतयः । तत्र तृतीयावच्चतुर्थी । द्वितीयावत्पञ्चमी । प्रथमावत् षष्ठी । तत्र तिसृणां दक्षिणरीतीनां दक्षिणं पार्श्वमुत्तररीतीनामुत्तरं पार्श्वम् । दक्षिणानामुत्तराणां दक्षिणाः पार्श्वरीतिद्वयगताः । अत्र प्रतीच्यो मुकुलात्मकाः । तत्प्रतीपमुखाः प्राच्यः । एवं शोभां वितन्वते । पुच्छे मध्यमरथ्यन्त्ययोर्विशयषोडश्याः दक्षिणत उत्तरतश्च द्वे अर्धे बाह्यविशेषे । ततः पश्चान्मध्ये द्वे षोडश्यौ । ते अभितः (तिस्रः) तिस्रोऽर्धेष्टका इत्यष्टेष्टकाः । ततः पुच्छाग्रे षोडशीभिरभितोऽर्धाभिरष्टेष्टकाः । पक्षाग्रयोश्चतस्रश्चतस्रोऽर्धेष्टकाः । पक्षद्वये पक्षेष्टकास्सप्त रीतयः । ता द्वादशशतमिष्टकाः । पादेष्टकाभिश्च पूरणपक्षे एता एव रीतयः । तत्र विशेषः पुच्छगतोपान्तरीत्या बाह्याश्चतस्रोऽर्धेष्टका द्विधा कुर्यात् । आत्मनि प्रथमद्वितीयपञ्चमषष्ठेषु रथ्यमध्यगतार्धेषु पश्चिमतो द्वे द्वे अर्धे । अवशिष्टाश्चार्धस्थानेषु षोडशीयुग्मान्युपदध्यात् । द्वितीयापञ्चम्योश्चार्धा द्विधा भिद्यात । ननु भेदो वर्जनीय इति तत्रतत्राग्नौ यत्नेन परिहृतः । स इदानीं पुच्छे प्रादुर्भूयति नैतत्सारम् । नियतलोकानामिष्टकानामसबाधेन समुदिताभिरिष्टकाभिस्सङ्ख्यायां पूरितायां यदीष्टकैकदेशे भेद उपजायते स भेदो मर्षणीय एव, अवर्जनीयत्वादेकदेशभेदस्य । अत एव भेदवर्जनं स्वकण्ठेनोक्तमाचार्येण द्विशन एव इति ॥

**Karavinda (Sutra 20)**

गतम् ॥

Sundararaja (Sutra 19)

प्रकृतौ चतुरस्राग्नौ पञ्चदशभागीयानां कार्यं भेदपरिहारेण सङ्ख्यापूरणम्। इह तु तत्कार्यं अणुका उपधेयाः। तत्र समचतुरस्राणामणूकानामुपधाने द्विशतं कर्तुं न शक्यते। तस्मादणूकक्षेत्राणां ग्रहणम्। तत्रापि षोडश्यो न गृह्यन्ते। अवशिष्टं षोडशीभिरित्येव सिद्धत्वात् भेदसम्भवाच्च। तस्माद(न्याश्र)णूकक्षेत्रादि(द्वि)प्रकारा इष्टका कर्तव्या। दर्शिते च तासां करणे (पूर्वमेव)। आचार्येण तु करणे नोपदिष्टे। अन्यथा बाह्यविशेषा इत्यस्मिन् पक्षे अणूकानामनुपयोगात्। उक्तश्चोपधानप्रकार.। अणूकाभिर्विनैव तस्मिन् पक्षे प्रथम एव प्रस्तारे अणूकानामुपयोग. कर्तव्यः॥

इति विंशः खण्डः

## अथ एकविंशः खण्डः

**कङ्कचिदलजचिदिति श्येनचिता व्याख्यातौ ॥ (1)**

**Kapardi** (Sutra 1)

कङ्कः पक्षिविशेष अलजश्च। कङ्क इव चेतव्यः कङ्कचित्। अलज इव चेतव्योऽलजचित्। तौ श्येनचिता व्याख्यातौ। पूर्वेणैव श्येनेन व्याख्यातौ-मुख्यत्वाद्द्विशतप्रस्तारत्वाच्च तस्यैवाकृतिः तान्येव करणानि स एवोपधानमार्गः। सङ्कल्प एव भेदः श्येनोऽलज. कङ्क इति ॥

**एवमिव हि श्येनस्य वर्षीयांसौ पक्षौ पुच्छाद्वक्रौ सन्नतं पुच्छं दीर्घं आत्माऽमण्डलं शिरश्च ॥ (2)**

**तस्माच्छ्रुतिसामर्थ्यात् ॥ (3)**

**Kapardi** (Sutra 2 and 3)

हिशब्द. प्रसिद्धौ। श्येनोऽप्येवमेव। वर्षीयांसौ—बृहन्तौ। पक्षौ। कस्मात् पुच्छाद्दीर्घौ ? न केवल बृहन्तौ किं तु तौ वक्रौ। सन्नत सम्यङ्नत मात्मसमीपेऽल्पीयः अग्रे श्येने पृथु उच्यते तत्सन्नमिति। दीर्घ आत्मा न समचतुरस्रः न मण्डल. नापि दीर्घचतुरस्रः। अमण्डलमिवादीर्घचतुरस्रभूत शिरः। एवम्प्रकारो लोके श्येनः। एवमेव कङ्कालजो लोके। तस्मात्तदाकारावेव तङ्कालजौ तेनैव व्याख्यातौ। श्रुतिसामर्थ्यात्। सामर्थ्यमभिधानशक्ति। एतावदेव श्रुत्याऽभिधीयते। अशक्यात्वत्सर्वसाम्या (सगा) पादनस्य। न ह्यशङ्कनीयमर्थं वेदो विदधाति ॥

**अशिरस्कौ वाऽनाम्नानात् ॥ (4)**

**Kapardi** (Sutra 4)

वाशब्दः पक्षव्यावृत्तौ। अशिरस्क एव चेतव्य। कुत इत्याह—आनाम्नानात्। न हि शिर आम्नायते। तस्य कथमनाम्नानमित्यत्राह[1]—

1 तस्य कथमाम्नानमित्यत्राह—

ज्ञायते च "कङ्कुचितं शीर्षण्वन्तं चिन्वीत यः कामयेत स शीर्षोऽमुष्मिन् लोके सम्भवेयमिति" विद्यमाने कथ ब्रूयात् ॥ (5)

**Kapardi (Sutra 5)**

यदि शिरस आम्नानमस्ति शीर्षण्वन्तं चिन्वीतेति कथ ब्रूयादित्यर्थः। यदि शिरस आम्नान नास्ति तदा युज्यत एवैतद्विशेषणम्। इतरथा विशेषणमनर्थकमेव स्यात्। तस्मादशिरस्क एव चेतव्यः। यद्यशिरस्कः किमाकारस्स इत्याह

**प्राकृतौ वक्रौ पक्षौ सन्नतं पुच्छं विकारश्रवणात् ॥ (6)**

**Kapardi (Sutra 6)**

प्रकृत्या भवौ प्राकृतौ। तावेव पक्षौ वक्रीकर्तव्यौ। कुतः ? विकारश्रवणात्। सन्नत पुच्छ—पुच्छं च सन्नत कर्तव्यम्। वक्रपक्षो व्यस्तपुच्छ इति विकारश्श्रूयते। पक्षपुच्छाना च वक्रता व्यस्तता च प्रकृतौ नास्ति। तस्माद्विकारस्त्व पक्षपुच्छानाम् ॥

**यथा प्रकृत्यात्माऽविकारात् ॥ (7)**

**Kapardi (Sutra 7)**

यथाप्रकृत्यात्मा। कुतः ? अविकारात्। न हि तत्र विकारश्श्रूयते। तस्मात्प्रकृतिवदेवात्मा चतुःपुरुषस्समचतुरस्रश्च। अरत्निनाऽर्धप्रादेशेन वा पक्षौ विवर्धयेत्। द्विपुरुषा रज्जुमित्यादिश्येनवत्। ननु प्रकृतावरत्निना वर्धयेदित्युक्तम्। किमिदमुच्यते अरत्निनाऽर्धप्रादेशेन वेति ? अरत्निनेत्यर्धविकारत्वप्रतिपादनपरं, न पक्षपुच्छाना तावन्मात्रमायाममापादयितुम्। आत्मनश्चतुर्थं चतुर्भागीयाश्चाष्टौ इत्युपधातव्यमिति श्येनप्रतिपादित न कर्तव्यम्। यथाप्रकृत्येवात्मा कर्तव्य। किं च प्राकृत पुच्छमिति वचनाच्च उपधानविधिश्च न घटते। श्येन इव चेतव्य इत्येव क्रियमाणे प्रथमद्वितीयानामेव विकारो नेतरेषाम्। इतरथा चतुर्थादयोऽपि विकृता भवेयुः। तथाभूताश्च कर्तव्या भवेयुः। तस्माच्च[1] करणानुप्रवेशेन[2] चेतव्य इत्युक्तम्। श्येनवदेव पुच्छम्। करणान्युच्यन्ते—चतुर्थपष्ठाभ्यां यथायोगनतं तत्प्रथमम्। द्वे पूर्ववत्सहिते द्वितीयमित्यादि। यथोपधानविधिः—अष्टाचत्वारिंशत्प्रथमा उदीचीः पक्षयोः। श्येनवत्पुच्छम्। आत्मनश्श्रोण्योस्तिस्र-

---

1 तस्माच्च—B।   2 कारणानुप्रवेशेन—A.

स्तिस्रः पञ्चम्य उदीच्यः । ततस्सप्तसु रीतिषु षट्पञ्चाशच्चतुर्थ्यः दक्षिणायता उदगायताश्च । तासां पुरस्तादष्टौ पञ्चम्यः उदगायताः । श्रोण्योश्चतस्रः पञ्चम्य अक्ष्णया भिन्द्यात् । अष्टौ षष्ठ्यस्सम्पद्यन्ते । एष द्विशतः प्रस्तारः । अपरस्मिन् प्रस्तारे चतस्रश्चतस्रो द्वितीया निर्णामयोरप्यययोश्च विशयात्तृतीया. । चतस्रश्चतस्रः पूर्ववदष्टभागावेता. पक्षष्टाभिः पक्षौ[1] प्रच्छादयेत् । तद्द्वासप्ततिः पुच्छे श्येनवत् । सप्ताष्टमाभिश्श्रोण्यसेषु द्वे द्वे पञ्चम्यौ प्राची: प्रतीचीश्च । प्राच्य[2]स्सप्त रीतयः । चतुर्भिस्तृतीयापञ्चम्यो रीत्योर्मध्ये त्रिंशत् षष्ठ्य. एका च पञ्चमी । एकत्र षोडशापरत्र चतुर्दश । एवं द्विशतः प्रस्तारः । अथवा स एवानुपुच्छमर्धपुरुषव्यास सप्रादेश पुरुष प्रतीचानमायच्छेत् । तस्य दक्षिणतोऽन्यमित्यादिना श्येनवत्पुच्छ कुर्यात् । पक्षौ प्राकृतौ द्विपुरुषायामौ । करणानि वक्ष्याम,-द्वादशाङ्गुला यथा भवति तथा तिर्यक् चतुर्थषष्ठाभ्यां नमयेत् । प्रथम ते एव सहिते यथा तिष्ठतः तथा कारयेत् । द्वितीय तृतीयमपि यत् षड्भागेनाष्टमभागेन वा वर्धयेदिति त एव वा पुच्छे चतुर्थं त्रयस्त्रिंशदङ्गुलविस्तार पञ्चचत्वारिंशदङ्गुलायाम चतुर्दशतिलैस्सह सविशेष पञ्चमं अर्धमप्ताङ्गुलव्यास षट्पार्श्वं त्रयस्त्रिंशत्कर्णं षट्त्रिंशदङ्गुलमष्टभिस्तिलैस्सह सप्तमाष्टमयोः पार्श्वं एकोनत्रिंशदायाम तु षट्त्रिंशदङ्गुला चतुर्दशतिलैस्सह पुच्छाप्यये विशययोः अष्टादशाङ्गुल पुच्छे पञ्चदशाङ्गुलमेव । आत्मनि चतुर्थादयो वैकृता' । पुच्छे तु प्राकृता एव । आत्मन्युपधानविधिस्स एव ।

तत्र श्लोका'—

अर्धं त्रयोदशं व्यासमशिरस्के हविर्भुजि[3] ।
तथा चतुर्थषष्ठाभ्या नमयेत्प्रथम तु तत् ॥
ते द्वे तु सहिते प्राची द्वितीय करण भवेत् ।
तृतीयमपि षड्भागमष्टभागेन वर्धितम् ॥
पक्षेष्टकाश्चतुर्थास्स्यु पुच्छ पुच्छवदुच्यते ।
षट्पञ्चाशच्चतुर्थ्यस्स्युस्तिर्यग्दक्षोद[4] गायताः ॥
अष्टौ पुरस्तात्तिर्यक्च श्रोण्यो षट्पञ्चमो क्षिपेत् ।
श्रोण्याश्चतस्र पञ्चम्यो भेदवद्द्विशतस्तथा[5] ॥

---

1. पक्षेष्टकाभिः प्रतीचाभि पक्षौ—B । 2 प्राच्या.—B ।
3 व्यास शिरस्को वा हवि—B
4 तिर्यग्दक्षोदगायता —A । 5 स्तरे—A ।

श्येनवत्पक्षपुच्छेषु निधायात्मन्यपि क्षिपेत् ॥
प्राच्या चैव प्रतीच्या च त्रिंशदेका च पञ्चमी ॥
तासामेवोत्तरे पार्श्वे चतुर्थ्यं षोडशद्वयम् ।
प्राच्यश्चैव प्रतीच्यश्च तथा षोडश दक्षिणे ॥
प्राचीश्चैव प्रतीचीश्च शिष्टे पञ्चमी क्षिपेत् ।
करणस्य विपर्यास चतुर्थस्यैव नेष्यते ॥
सप्रादेशेऽपि वा पुच्छे विस्तारो द्वादश भवेत् ॥
तथा चतुर्थषष्ठाभ्या नमयेत्प्रथम तु तत् ॥
ते द्वे तु सहिते प्राची द्वितीय करण हि तत् ।
तृतीयमपि षड्भागमष्टभागेन वर्धितम् ॥
द्वाविंशतिर्द्विगुणित तिलाना चापि विंशति ।
सविशेषश्चतुर्थस्य तिर्यक्सत्यधिक[1] भवेत् ॥
पञ्चम प्राकृत विद्यात् षष्ठस्य विकृतास्त्रय ।
षष्टस्य पार्श्वं ह्यधिक कर्ण षट्त्रिंशदष्टभि ॥
सप्तमाष्टमयो पार्श्वमूनत्रिंशमिहेष्यते ।
आयामश्चापि षट्त्रिंशच्चतुर्दशतिलैस्सह ॥
चतुर्थ्यास्तु विकृता पुच्छे चैवात्मनि[2] क्षिपेत् ।
अष्टादशाङ्गुल पुच्छे शययारन्यदात्मनि ॥

**Karavinda (Su ra 1)**

कङ्कालजौ पक्षिविशेषौ । कङ्कवच्चीयते अलजवच्चीयत इति कङ्कचिदलजचितौ श्येनचिता व्याख्यातौ । तयोर्विमानेष्टकाकरणोपधानानि श्येनस्यैव कार्याणीत्यर्थ ।मुख्यत्वात् पूर्वश्येनेनेति केचित् । आनन्तर्याद्द्वितीयश्येनेनेत्यन्ये । अविशेषादुभाभ्यामित्यपरे । उक्त श्येनस्वरूपमनुभाषते अत्रैव शिरसो भावप्रतिपादनार्थम् ॥

**Karavinda (Sutra 2 and 3)**

एवमिवहीति गतम् । श्येनस्य वर्षीयांसौ दीर्घतरौ पुच्छाद्वकौ पक्षौ सन्नत पुच्छ आत्मसमीपे ह्रसीय अग्रे व्यस्त दीर्घ आत्मा न समचतुरस्र अमण्डल न मण्डलाकार –ईषन्मण्डल । न वा शिरश्च विद्यते । तच्चापि न मण्डल नापि समचतुरस्रम् । एवमिव श्येनो लोके दृश्यते । एतावदेव श्येन-

---

1 तिर्यक्तु त्रिभि रथ्यधत्—B ।  2 नैवा—B ।

साहृश्यमग्ने । कुत ? श्रुतिसामर्थ्यात्—सामर्थ्यमभिधानशक्ति । एतावदेव श्येनश्रुत्या विधीयते । यदेतद्वक्रपक्षता व्यस्तपुच्छता दीर्घाग्रिमताऽमण्डलता सशिरस्कता च । तस्मात् कङ्कालजावपि तदाकारो चेतव्यावित्यर्थ ॥

**Karavinda (Sutra 4)**

अशिरस्को वा श्येन अनाम्नानात् । नहि पक्षपुच्छाग्रमगतवक्रतादिवच्छिरस आम्नानमस्ति । श्येनविधानसामर्थ्याच्छिरसो विधानमस्तीति गम्यत इति केचित् । वयसा वा एष प्रतिमया चीयत इति प्रकृतावपि पक्षादिवत् शिरोविधान प्रसज्येत । नैष दोष । तत्र हि पक्षपुच्छविधान परिसङ्ख्यानार्थम् । तद्वत्रापि तच्चोदकागतमेवेति तस्मात् सशिरस्कश्श्येन । किञ्च विज्ञायते च कङ्कचित शीर्षण्वन्त चिन्वीतेति । यदि चोदकप्राप्तया कङ्के शिरो विद्यते तत्कथ ब्रूयात् ब्राह्मण कङ्कचित शीर्षण्वन्त चिन्वीतेति? न ब्रूयादेवेत्यर्थ । तस्मादशिरस्क श्येन । कङ्के शिरोविधानात् । तथा ते वयोमात्रसादृश्ये प्रकृते प्राप्ते श्येनप्राप्तिविधानसामर्थ्यादेव श्येने शिरोऽप्यस्तीति गम्यते । 'त्रिवृत्त अग्ने शिर' इत्यादिना शिरस्युपधानदर्शनाच्च । अतस्तयोर्विकल्प इति मन्त्रान वाशब्द ब्रूते । तत्र कङ्कश्श्येनोऽलज इति सङ्कल्पमात्रभेद नाकारे । दाक्षायणयज्ञादिवत् अशिरस्कश्श्येन इत्युच्यते ॥

**Karavinda (Sutra 6 and 7)**

प्रकृतिवदेव पक्षौ वक्रौ पुच्छात् सन्नत वक्रपक्षो व्यस्तपुच्छ इति विकारश्रवणात् । आत्मा तु यथा प्रकृत्या । यद्वा यथाप्रकृतिरविकृत समचतुरस्र चतुष्पुरुष इत्यर्थ । अविकारात्—न हि विकार श्रूयते । पक्षपुच्छेषु विकारग्रहण नात्मनि । तस्मत् प्राकृत एवात्मा । अरत्निनाधंप्रादेशेन च एकैक पक्ष प्रवर्धयेत् । यद्यपि प्राकृतौ पक्षावित्युक्त तथापि पुच्छस्याप्राकृतत्वश्रवणादुक्तप्रकारा पुरुषमात्रता गम्यते । तस्मात्पुच्छे प्रादेशमुपधाय पक्षयोर्विभजेदिति केचिन्मन्यन्ते । केचित्पक्षयो प्रकृतित्वविधानादात्मनोऽविकारत्वाच्च पुच्छ सप्रादेश मन्यन्ते । उभयस्मिन् पक्षऽप्युक्तप्रकारेणाभ्युन्नेया इत्याचार्यो मन्यते । अत्र पुच्छस्याप्रकृतित्वपग प्रथमद्वितीय करणाना विकार.[1] । इतरथा तेषामपि करणान्युच्यन्ते । चतुर्थपष्ठाभ्या प्रथम करण यथार्धत्रयोदशव्यास भवति तथा प्रजम्भयत् । ते द्वे प्राची सहिते । तद्द्वितीय प्रथमस्य षड्भागमङ्गुल[1] तृतीयम् । उपधानमु

1 विकल्प ।

च्यते—दक्षिणे पक्षे अष्टाचत्वारिंशत्प्रथमा उदीचीस्तथोत्तरे दक्षिणा। पुच्छेऽशिरस्कपक्षोक्तमेव। त्रिंशदात्मनि। श्रोण्योसिनस्त्रस्तिस्त्र पञ्चम्य उदगायता दक्षिणायनाश्च। तासां पुरस्ताच्चतु(र्था)र्थीनामर्धेष्टका सप्त गीतय। ता पट्पञ्चाशत्। तासां पुरस्तादष्टौ पञ्चम्य। श्रोण्यमेषु चतस्र। पञ्चमीग्क्ष्णयाभिन्द्यात्। द्विशत एष प्रस्तार। द्वितीयप्रस्तारे चतस्रश्चतस्रो द्वितीयाश्चमश्चतस्र आत्मानमष्टभागावेता। पक्षेष्टकाभि प्राचीभि पक्षौ प्रच्छादयेत्। एकैकस्मिन् पक्षे पट्त्रिंशत्। पुच्छे पु पूर्ववद्द्वादश सप्तम्यस्त्रयोदशाष्टम्यश्च। श्रोण्यसेषु द्वे द्वे पञ्चम्यौ प्राच्यौ। आत्मशेषे चतुर्थीना[2]-मष्टेष्टका प्राच्यस्सप्त रीनय। तृतीयपञ्चमरीत्योर्मध्ये चतस्रश्चतुर्थीरुद्धृत्य त्रिंशत पङ्क्तिमेका पञ्चमीमुपदध्यात। तासामेवत्र पोडश पङ्क्तिगिनि। तत्र चतुर्दश एकत्र[3] पञ्चमी। एष द्विशत प्रस्तार। सप्रादेशपक्षे पुच्छे पुरपव्यास प्रादेशपुरुष प्रत चीनमायच्छेत्। तस्य दक्षिणतोऽन्यमुत्तरतश्चेत्यादिना पुच्छ कुर्यात्। पक्षौ प्रकृतावेव। करणविशेषो यथा निर्यगृजुत्वेन द्वादशाङ्गुल भवति तथा प्रथम करण प्रजम्भयेत्। ते द्वे प्राचीत्यादिना द्वितीयम्। तृतीयस्यापि पड्भागमष्टभागेन वर्धितम्। चतुर्थादीनि द्विविधानि—पूच्छेचतुर्थे त्रयस्त्रिंशदङ्गुलविस्तार। तस्य सविशेष चतुश्चत्वारिंशदङ्गुलय त्रिशतितिलाधिका। पञ्चममर्धमप्तदशाङ्गुलायामम्। पष्ठस्य पार्श्वे त्रयस्त्रिंशदङ्गुलम्। ताप्पट्त्रिंशदङ्गुलय। साष्टमयोस्स एव व्यास। पार्श्वमान्यावक्षणयावस्थिते एकोनत्रिंशदङ्गुले। आयामप्पट्त्रिंशदङ्गुलय चतुर्दश तिलाश्च। पुच्छाप्ययविशययोरष्ट दशाङ्गुलम्। पुच्छे पञ्चदशाङ्गुलमात्मतिलचतुष्टयादियो विकृता पुच्छ उपधेया। प्राक्तन एवात्मनि उपधानविधि। स एष द्वितीयश्येन। विकृते तत्रोक्तकरणान्ये वमुन्नीय कृत्वा चेतव्यम्॥

Sundararaja (Sutra 1)

कङ्कचित न पर्णवन्त चिन्वीत य कामयेत सौपर्णवानमस्मिन् लोके स्यामिति'। अलजचित चिन्वीत चतुस्सीत प्रतिष्ठाकाम' इति श्रुतावग्नी श्येनचिता पूर्वेणोत्तरेण वाम्याती। अथोक्तस्यैव श्येनचित प्रकारान्तर विधिरमत् उक्तो तावप्रकारो युक्ततरावित दर्शयितुमाह—

Sundararaja (Sutra 2 and 3)

यथाऽस्माभिरुक्त एवमिव हि पतन. श्येनस्य पक्षौ पुच्छाद्दीर्घतरौ यस्मो न मध्यत पुच्छ न मध्यतमप्ययप्रदेशे आत्मा न आमण्डल ईषन-

1 सौपर्णमिति।

2 चतुरश्रा।

3 पक्ति। एकत्र चतुरश्र चतुरश्र पक्ष्यौ 3613।

}

ण्डलरूपः शिरश्चैवं भवति। तस्मात्—नच्छब्दश्रुतेः यच्छब्दाध्याहारः कार्यः । यस्मादर्थे वा हिशब्दः । यस्मादेवरूपः श्येनस्य पक्षपुच्छादिः प्रत्यक्षेण दृश्यते तस्मात् श्येनचितं चिन्वीतेति श्रुतिसामर्थ्यादेवरूपपक्षपुच्छात्मशिरस्कः श्येनचिदित्युक्त इत्यर्थः ॥

Sundararaja (Sutra 4)

अशिरस्को वा श्येनचिद्भवितुमर्हति । अनाम्नानात् । न (हि) च श्येनचित्प्रकरणे शिर आम्नायते । आत्मनोऽप्यविकारस्यैतदुपलक्षणम् । अशिरस्क (त्वे) कल्पे प्रमाणान्तरमस्तीत्याह—

Sundararaja (Sutra 5)

[1]यदि श्येनाकृतिविधानमात्रेणैव सशिरस्कत्वं भवेत्[2] । तर्हि कङ्कचितोऽपि भवेदेव । तथा च तत्र शीर्षण्वन्तमिति विशेषो न वक्तव्यस्स्यादित्यर्थः ॥

Sundararaja (Sutra 6)

प्राकृतावेव पक्षौ पुच्छौ षडरत्नि पञ्चारत्नि वा । तौ द्विपुरुषां रज्जुमुभयतः पाशामित्युक्तप्रकारेण वक्रीकर्तव्यौ । केचित्तु पूर्वोक्तायाम-(भावात्) मार्गात् षष्टिशताङ्गुलया रज्ज्वा सनमन (मपी)मिच्छन्ति । पुच्छं च प्राकृतमेव सन्नतं अर्धपुरुषव्यासम् । पुरुष प्रादेशाधिक प्रतीचीनमायच्छेत् । तस्य दक्षिणतोऽन्यमित्यादि पूर्ववत् । प्रादेशप्रवृद्ध्यभावे पूर्ववदेव । विकारश्रवणादिति—वक्रपक्षो व्यस्तपुच्छो भवतीति वचनादिदित्यर्थः ।

*Sundararaja ( Sutra 7)*

चतुः पुरुषः समचतुरस्र एव श्येनचित्यात्मा विकारस्याश्रवणात् ।

अथो[3] एतच्छ्येनचितं चिन्वीतेति ॥ (8)

यावदाम्ना (त) न सारूप्यं तद् व्याख्यातम् ॥ (9)

Kapardi (Sutra 8 and 9)

तत्र[4] यावदाम्नानमेव सारूप्यं ग्राह्यम् । जातिवाचकानां शब्दानां किमपि सामान्यमेव प्रवृत्तिनिमित्तं दृश्यते । यथा गौर्वाहीक इति । एवमत्रापि यावदाम्नानमेव सारूप्यं गृहीत्वा श्येनशब्दो वर्तते । तत् सारूप्यं व्याख्यातं वक्रपक्ष इत्यादिना ॥

---

1. यदीतद् श्येनचित चिन्वीतेति । पा । 2. सम्भवेद् ।

3. यतो—A, यथो–B । 4. यत्र—B ।

त्रिस्तावोऽग्निर्भवतीत्यश्वमेधे विज्ञायते ॥ (10)

तत्र सर्वाभ्यासोऽविशेषात् ॥ (11)

Kapardi (Sutra 10 and 11)

तत्र सारत्निप्रादेशस्य सप्तविधस्याभ्यासः । कुतः ? अविशेषात्; न हि कश्चिद्विशेषोऽत्राम्नायते । तस्मात्सर्वस्यावृत्तिः ।

दीर्घचतुरस्राणां समासेन पक्षपुच्छानां समास उक्तः ॥ (12)

Kapardi (Sutra 12)

दीर्घचतुरस्राणां पक्षपुच्छानां समासविधिरुक्तः । 'यदन्यत्सप्तभ्य' इत्यादिना विधासप्तमकरणीमित्यादिना (च) वा । वेणुत्रिकरण्या वा विहरेदित्यर्थः ॥

एकविंशोऽग्निर्भवतीत्यश्वमेधे विज्ञायते ॥ (13)

Kapardi (Sutra 13)

गतमेतत् ।

तत्र पुरुषाभ्यासो नारत्निप्रादेशानाम् ॥ (14)

संख्या संयोगात् संख्या संयोगात् (15)

Kapardi (Sutra 14 and 15)

तत्र पुरुषाभ्यासः नारत्निप्रादेशानां । कुतः ? सङ्ख्यासंयोगात्— एकविंश इति । न सप्तविध इत्यत्रापि सङ्ख्या विधीयते । वाक्यान्तरेण तत्र अरत्निप्रादेशा निविशन्ते । न तत्र सप्तसंख्यायां निविशन्ते । तस्मात्सङ्ख्यासंयोगात्पुरुषाभ्यास एव नारत्निप्रादेशानाम् । श्लोको भवति—

त्रिविधेन नर प्रोक्तं त्रिस्तावनि विभाय (गो.) गो ।

एक (विंशे) विधे तनौ न्यूनं तिस्त्रानां चैव सप्त (भि ) ति. ॥

द्विर्विरमंद्गमार्या ।

**Karavinda (Sūtra 8 and 9)**

श्येनचितमिति विहित यत्प्रकार यावच्चास्याम्नानसारूप्य मानविहित श्येनसारूप्य तत्सर्वं व्याख्यातम् । तत्र वक्रपक्षादिगुणराम्नातेन यच्छ्यनस्य सारूप्यमुक्त , श्यनाग्रे रथदशमा अरत्नय इत्यादिना चयन प्रकार उक्त तेन उक्तौ कङ्कालज्ञौ स्यातामित्यर्थ ॥

**Karavinda (Sūtra 10 and 11)**

आश्वमेधिकाग्नेस्त्रिस्तावविधौ सारत्निप्रादेशाभ्यास न पुरुषमात्रस्य , विशेषाभावात् । अविशेषण प्राकृताग्नित्रैगुण्यविधानादित्यर्थं ॥

**Karavinda (Sūtra 12)**

दीर्घचतुरस्राणा समास इत्युक्तम् । एव द्वे दीर्घचतुरस्रे समस्येते , तन्निमित्तो तिर्ह्रासो विवृद्धिर्वेति । यावदिच्छन् दीर्घचतुरस्राणि समस्येदिति । तेन त्रिस्तावेऽग्नौ प्रथमविहरणेन समास उक्त ॥

**Karavinda (Sūtra 13 14 and 15)**

अश्वमेधे एकविंशाग्निश्रुतौ पुरुषाणामेवाभ्यास नारत्निप्रादेशानाम् । 'सप्तविधो वाव प्राकृतोऽग्निरिति सप्तसङ्ख्या पृथक्सनिवेशनी । समानजातीयेषु पुरुषेष्वेव सयुक्त नारत्न्यादिषु । अरत्निप्रादेशास्त्वरत्निना दक्षिणत इति वाक्येन स्वरूपमात्रेण विहिता नाथसङ्ख्यया । अत प्रकृतौ पुरुषाणामेव सङ्ख्या सयोगादश्वमेधेऽप्येकविंशाग्नौ पुरुषाणामेव सङ्ख्यासयोगो युक्त इति अरत्निप्रादेशास्त्वनभ्यस्ता भवेयु । पुरुषाभ्यासादनन्तरमरत्निना दक्षिणत इति कुर्यादित्यथ । एतदुक्त भवति –त्रिस्ताव एकविंशप्रस्तार द्वयविधेस्त्रिस्ताव एकविंश एवाग्नि ब्राह्मणदर्शनात् । द्वादश दश वा स्यात् । द्विरुक्ति प्रश्नपरिसमाप्तिद्योतनार्था ॥

**Sundararaja (Sūtra 7 and 8)**

ननु शिरसोऽभावे श्येनाकृतेरपूर्वत्वात् श्येनचित चिन्वीतेति विधिवाक्यनैव विरोधप्रसङ्ग , तत्राह—

यदनच्छ्येनचित चिन्वीतेति, यत्तन यावदाम्नातम् वक्रपक्षो व्यस्तपुच्छ इति विहितसारूप्यमुक्त , अयथा पशुपुच्छविकारविधेरानयवप्रसङ्गादिति भाव । अस्मिन् पक्ष इष्टकानां करणानि द्विपुरुषया रज्ज्वा पुरतोऽस्य पुरुषस्य चतुर्थांशम् पञ्चमभाग यथायोगतत तत् प्रथम, तस्यार्धोऽन्त्यादनाङ्गुल सपादपञ्चदशाङ्गुलोऽस्य । इ इ पूर्वतरमहि तत् द्वितीयम् । प्रथम पञ्चमे करणे तद्दि तृतीयम्, चतुर्थं

ञ्चमपष्ठानि पूर्वश्येनचिद्वदेव। पुच्छे या पष्ठीचतुर्थ्य उपधेयास्तासा-
मन्ये करणे। तत्र चतुर्थ्यां पार्श्वे पूर्ववदेव एका तिर्यङ्मानी त्र्यस्त्रि-
शदङ्गुला अन्या सार्धचतुश्चत्वारिंशदङ्गुला पष्ठयास्तु पञ्चदशमेक
फलक। त्र्यस्त्रिशङ्गुल द्वितीय पट्त्रिशक साष्टतिल तृतीयम्। सप्तमस्य
नियङ्मान्यावग्त्निमात्री। पार्श्वेन (नव) विंशत्यङ्गुले। कर्णश्चैक।
(अन्य कर्ण पञ्चत्वारिंशदङ्गुल एकादशतिलोन। अष्टप्रस्य नवविंशके
पार्श्वे। द्वादशिकापट्त्रिशिके तिरश्च्यौ शिरसोऽभावान्नवम करण न
भवति। अग्त्निप्रादेशाभावे पुच्छेष्टका पूर्वश्येनवदेव)। पक्षस्थानाञ्च
तदनुगुण नमनम्। उपधाने च पक्षयो प्रथमा अशीतिरुदीच्य पुच्छ पूर्वश्ये-
नवदेव पूच्छाप्ययम्थचतुर्थ्योरष्टादशाङ्गुलम्। पुच्छे पूवश्येनवदेव। पुच्छे
पञ्चदशङ्गुलमात्मनि। आत्मन्युदीच्यो नव रीतय। उदीचीभिरिष्ट-
काभि। तासा मध्यमा सप्त। अन्याभि चतुर्थीभि चतुर्थरीत्या दक्षिण-
रीतौ तत पञ्चश्चतस्र द्व चतुर्थ्यौ। एवमेत्र पष्ठी रीति। श्रोण्यसेपु
चतस्रश्चतस्र पष्ठच। शेपे पट् पञ्चम्य। एप द्विशत प्रस्तार। (तत्रा-
शिरस्कस्य श्येनचित पक्षयो प्रथमेष्टका उदीच्यो रीतय। त्रिंशत्त्रि-
शत्। पुच्छे तु पूववत्। आत्मन्युदीच्यो रीत्यो नव स्यु। तत्राद्यरीतिगा
आद्याश्चतस्र पष्ठ्य स्युरेव। एवमन्त्या अपीष्टका। दक्षिणोत्तरत एकैका
पञ्चमीष्टका। पुच्छाप्ययस्ये तन्मध्ये उक्ते। एव दशेष्टका अन्त्या
अपि रीतय एव स्यु। पञ्चम्य मध्यतोऽधिके। तुरीयरीत्यां चतुर्थ्यौ।
द्वे चतस्र पष्ठिका। ततश्चतुर्थ्यौ पूर्ववत् पष्ठय। चतुर्थ्यौ द्वे दोष्टका ?
एव शेपमग्नि चतुर्थीभि पूरयेत्। एव नवतिरात्मस्था प्रस्तारे द्विशते-
ष्टका) अपरस्मिश्चतस्रश्चतस्र निर्नामयोर्द्वितीया। अप्यययोश्च तृतीया।
पक्षयो शेपे पट्पञ्चाशत् प्रथमा प्राच्य पुच्छे पूर्ववत्। सप्तम्योऽष्ट-
म्यश्च आत्मनि नव रीत्य। प्राच्य प्राचीभिरिष्टकाभि। तत्र पक्षाप्य-
यस्याना पश्चात्पुरस्ताच्च पञ्चपञ्चम्य पट् च पष्ठ्य। ता दक्षिणो-
त्तररातिमध्ये (सप्तरीत्य पूर्वप्रस्तारवत्। द्वितीयपष्ठ्यो (द्वितीयाष्ट-
म्यो) रीत्योर्मध्ये) पाडशपाडश पष्ट्य। (ता दक्षिणोत्तरे रीतिमध्ये
पूर्वप्रस्तारवत्। द्वितीयाष्टम्यो रीत्योर्मध्ये पोडश पोडश पष्ठ्य। एव
द्विशत प्रस्तार। तत्रापरस्मिन् प्रस्तारे पक्षे द्वितीया। पक्षमध्यत द्विती-
या। अप्यये शेपे प्रथमा। एवमुत्तरपक्षे प्राच्य। इमा सर्वा द्विसप्तति।
अयात्मनि प्राच्यो नव रीतयस्यु। आद्यायां पञ्चमीद्वितीयम्॥

आदिरयपक्षाप्ययगा द्वे पष्ठ्यो पञ्चमो तथा।
पञ्चम्येकान्यरीत्यान्तो द्वे पष्ठ्यावप्यय पुर॥

